समस्तनगरस्कन्धावारव्यापी च विजयढक्कादिशब्द आगमे प्रतिपाद्यते, एवमागमप्रसिद्धः पञ्चधनुःशतोच्चादिमनुष्याणां विषयव्यवहारो व्यवच्छेदं मा प्रापदित्यात्माङ्गुलेनेन्द्रियविषयपरिमाणमवसातव्यं, नोच्छ्रयाङ्गुलेन । ननु चक्षुरिन्द्रियविषय-परिमाणमुक्तस्वरूपं न घटते, अधिकस्यापि तद्विषयपरिमाणस्यागमान्तरे प्रतिपादनात्, तथाहि—पुष्करवरार्द्धे मानुषोत्तरपर्वत-समीपे मनुष्याः कर्कसंक्रान्तौ प्रमाणाङ्गुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थितमादित्यमवलोकमानाः प्रतिपाद्यन्ते शास्त्रान्तरे, ततः कथमुक्तस्वरूपं नयनविषयपरिमाणमात्माङ्गुलेन घटते ?, प्रमाणाङ्गुलेनापि व्यभिचारात्, सत्यमेतत्, केवल-मिदं विषयपरिमाणं प्रकाश्यविषयं द्रष्टव्यं, न तु प्रकाशकविषयं, ततः प्रकाशकेऽधिकतरमपि विषयपरिमाणं न विरुध्यते इति न कश्चिद्दोषः। मनसस्तु केवलस्येव सर्वगतत्वात् न क्षेत्रतो विषयपरिमाणं, पुद्गलमात्रनिबन्धनाऽभावात्, इह यत्पुद्गलमात्र-निबन्धननियतं न भवति तस्य विषयपरिमाणं न, यथा केवलज्ञानस्य, न भवति च पुद्गलमात्रनिबन्धननियतं मनस्तस्मात्तथा (मन इति, इह) "स्पृष्टं शृणोति शब्द"मित्युक्तं, तत्र किंशब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि शृणोति उतान्यान्येव तद्वासितानि आहोस्वित् मिश्राणि इति नोदकाभिप्रायमाशङ्क्य न तावत्केवलानि, तेषां वासकत्वात्, तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किन्तु मिश्राणि तद्वासितानि वा ॥ ५ ॥ शृणोति इत्यमुमर्थमभिधित्सुराह—

भासासमसेढीओ, सद्दं जं सुणइ मीसयं सुणई। वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥ ६ ॥

भाष्यत इति भाषा—वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समश्रेणयः, समग्रहणं विश्रेणिव्यवच्छेदार्थम्। श्रेणयो नाम क्षेत्रप्रदेशपङ्क्तयो अभिधीयन्ते, ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते यासु उत्सृष्टा सती भाषा

प्रथमसमय एव लोकान्तमनुधावति, ता इतो गतः प्राप्तो भाषासमश्रेणीतः भाषासमश्रेणिव्यवस्थित इत्यर्थः 'शब्दं' भाषात्वेन परिणतं पुद्गलराशिं 'यं' पुरुषाश्वादिसम्बन्धिनं 'शृणोति' परिच्छेद्यतया गृह्णाति यत्तदोर्नित्याभिसम्बन्धात्तं मिश्रकं शृणोति, किमुक्तं भवति?–भाषकव्युत्सृष्टशब्दद्रव्याणि तद्वासितापान्तरालस्थद्रव्याणि चेत्येवं मिश्रं शब्दद्रव्यराशिं शृणोति, न तु वासकमेव वास्यमेव वा केवलमिति। 'वीसेढी'त्यादि, मञ्चाः क्रोशन्तीत्यादिवत् आधेये आधारोपचाराद्विश्रेणिव्यवस्थितः श्रोताऽपि विश्रेणिरुच्यते, विश्रेणिः पुनः श्रोता शब्दमिति पुनः शब्दग्रहणं पराघातवासितद्रव्याणामपि तथाविधशब्दमन्दपरिणामख्यापनार्थं, शृणोति, 'नियमा'न्नियमेन 'पराघाते' सति वासनायां सत्यां, एतदुक्तं भवति–यानि भाषकोत्सृष्टानि शब्दद्रव्याणि झल्लर्यादिशब्दद्रव्याणि वा तैः पराघाते–वासनाविशेषजनिते सति यानि समुत्पन्नशब्दपरिणामानि द्रव्याणि तान्येव विश्रेणिस्थः शृणोति, नतु भाषकाद्युत्सृष्टानि, तेषामनुश्रेणियामित्वेन विदिग्गमनासम्भवात्, न च कुड्यादिप्रतिघाते तेषां विदिग्गतिनिमित्तं सम्भवति, लोष्टादिबादरद्रव्याणामेव तत्सम्भवात्, तेषां च सूक्ष्मत्वाद्, उक्तं च–"भासासमसेढिठिओ तब्भासामीसिअं सुणइ सद्दं। तदव्वभाविआइं अन्नाइं सुणेइ विदिसित्थो ॥ १ ॥ ( वि. ३५३ )" अथवा विश्रेणिस्थितः एव विश्रेणिरभिधीयते पदेऽपि पदावयवप्रयोगदर्शनाद्भीमसेनः सेन इति। 'विसेढिं पुण' इति पाठे तु विश्रेणिं पुनरित इति वर्त्तते, भावार्थः स एव। केन पुनर्योगेनैषां वाग्द्रव्याणां ग्रहणमुत्सर्गो वा? कथं वेत्येतदाशङ्क्य गुरुराह ॥ ६ ॥

गिण्हइ य काइएणं, निस्सरइ तह वाइएण जोएणं। एगंतरं च गिण्हइ, निसिरइ एगंतरं चेव ॥ ७ ॥

कायेन निर्वृत्तः कायिकस्तेन कायिकेन योगेन, योगो व्यापारः क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्द-

द्रव्याणि गृह्णाति, चशब्दस्त्वेवकारार्थः, स चावधारणे, तस्य च व्यवहितः सम्बन्धः, गृह्णाति कायिकेनैवेति, निसृजत्युत्सृजति मुञ्चतीतियावत्। 'तथे' त्यानन्तर्यार्थः ग्रहणानन्तरमित्यर्थः। उच्यत इति वाक् वाचा निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन, कथं? एकान्तरमेव गृह्णाति निसृजत्येकान्तरं चैवेति, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं पुरुषादनन्तरः पुरुषः पुरुषान्तरं, एवमेकैक[ स्मात् समयादेकैक ] एवानन्तरः समय एकान्तरं, प्रतिसमयं गृह्णाति प्रतिसमयं मुञ्चतीति भावार्थः। शरीरव्यापारे सति येन व्यापारविशेषेण शब्दद्रव्योपादानं करोति स कायिको योगः, येन तु कायसंरम्भेण तान्येव मुञ्चति स वाचिकः, येन तु मनोद्रव्याणि मनस्त्वेन व्यापारयति स मानसः, ततः काययोग एव संव्यवहारार्थं त्रिधा विभक्तः। ग्रहणं हि स्वतन्त्रं, प्रथमसमये निसर्गमन्तरेणापि तस्य भावात्। ततो नैवादस्तदपेक्षया सान्तरं, निसर्गस्तु ग्रहणपरतन्त्रं अगृहीतस्य निसर्गायोगात् इति पूर्वपूर्वग्रहणसमयापेक्षया सान्तरव्यपदेशः। यानि यानि यस्मिन्समये गृहीतानि शब्दद्रव्याणि तानि तानि तत्तद्ग्रहणसमयानन्तरसमये सर्वाणि निसृजति, ततो ग्रहणापेक्षया सान्तरो नो निरन्तर इति, अथवा एकेन—आद्येन समयेन गृह्णाति 'सर्वं वाक्यं सावधारण'मिति न्यायात् गृह्णात्येव, न तु निसृजति, द्वितीयसमयादारभ्य निसर्गप्रवृत्तेः, प्रथमसमये पूर्वगृहीतद्रव्यासम्भवात्, तथा एकेन पर्यन्तवर्तिना समयेन निसृजति—निसृजत्येव, न तु गृह्णाति, भाषणादुपरमात्, अपान्तरालवर्त्तिषु तु समयेषु ग्रहणनिसर्गौ, स्थापना—

| ग्र० | नि० | नि० | नि० | नि० | नि० |
|---|---|---|---|---|---|
| ० | ग्र० | ग्र० | ग्र० | ग्र० | ० |

ननु ग्रहणनिसर्गौ आत्मनः परस्परविरुद्धौ ततः कथमेकस्मिन्समये तौ युज्येते?, नैष दोषः, एकस्मिन्समये कर्मादाननिसर्गक्रियावत् अङ्गुल्याकाशसंयोगविभागक्रियावच्च ग्रहणनिसर्गक्रियाद्वयस्यापि सद्भावोपपत्तेः, एकस्मिन्समये त(य)था जीवस्वाभाव्यात् द्वावुपयोगौ

वचने ग्रहणनिसर्गौ ग्रहणनिसर्गयोः सान्तरनिरन्तरविचारः

न भवतः 'जुगवं दो नत्थि उवओगा' इति वचनात्, क्रियास्तु बह्वयोऽपि घटन्त एव, कायवाङ्मनःक्रियाणामेकस्मिन्नपि समये युगपत्प्रवृत्तिदर्शनात्। यदुक्तं 'गृह्णाति कायिकेन चे'त्यादि, तत्र कायिको योगः पञ्चधा—औदारिक १ वैक्रिय २ आहारक ३ तैजस ४ कार्मण ५ भेदात्, ततः किं पञ्चप्रकारेणापि कायिकेन गृह्णाति आहोस्विदन्यथेत्याशङ्कासम्भवे तदपनोदार्थमाह—

तिविहंमि सरीरंमि, जीवपएसा हवंति जीवस्स। जेहि उ गिण्हइ गहणं, तो भासइ भासओ भासं ॥ ८ ॥

त्रिविधे त्रिप्रकारे शरीरे औदारिकवैक्रियाहारकाणामन्यतरस्मिन्नित्यर्थः, जीवति–प्राणान् धारयति इति जीवः तस्य प्रदेशा जीवप्रदेशा भवन्ति, इत्थमुच्यमाने भिक्षोः पात्रमित्यादौ षष्ठ्या भेदेऽपि दर्शनात् मा भूद्भिन्नप्रदेशतया शिष्याणामप्रदेशात्मसम्प्रत्यय इत्यत आह–जीवस्येति जीवस्यात्मभूता भवन्ति, अनेन निष्प्रदेशजीववादनिराकरणमाह, सति निष्प्रदेशत्वे करचरणोरुग्रीवाद्यवयवसंसर्गाभावप्रसक्तेः। यैर्जीवप्रदेशैः किं करोत्यत आह–यैस्तु गृह्णाति, तुशब्दो विशेषयति, न सर्वदैव गृह्णाति, गृह्यत इति ग्रहणं शब्दद्रव्यसमूहमित्यर्थः, ततो गृहीत्वा 'भाषते' वक्ति भाषक इति, भाषको भाषणक्रियाविशिष्ट इत्यर्थः, अनेन निष्क्रियात्मवादव्यवच्छेदमाह, सति तस्मिन्निष्क्रियत्वेनाप्रच्युतानुत्पन्नस्थिरैकरूपत्वात् भाषणाभावप्रसक्तेः। किं भाषत इत्याह–भाष्यत इति भाषा तां, ननु ततो भाषते भाषक इत्यनेनैव गतार्थत्वाद्भाषाग्रहणमतिरिच्यते, न अभिप्रायापरिज्ञानात्, इह भाष्यमाणैव भाषोच्यते न पूर्वं नापि पश्चादित्यस्यार्थस्य ख्यापनाय भाषाग्रहणमदुष्टमेवेति। यदुक्तं त्रिविधं शरीरं यद्गतैर्जीवप्रदेशैः वाग्द्रव्याणि गृहीत्वा भाषको भाषक इति, तत्र न ज्ञायते कतमत्तत्त्रैविध्यमिति तदभिधातुकाम आह—

ओरालियवेउव्वियआहारो गिण्हई मुयइ भासं। सच्चं मोसं सच्चामोसं च असच्चमोसं च ॥ ९ ॥

इहौदारिकशब्देन शरीरतद्वतोरभेदोपचारात् मत्वर्थीयलोपाद्वा औदारिकशरीरवान् जीव एव गृह्यते, एवं वैक्रियवान् वैक्रियः आहारकवानाहारकः, असावौदारिकादिर्गृह्णाति आदत्ते शब्दप्रायोग्यानि द्रव्याणीति गम्यते, गृहीत्वा भाषात्वेन परिणमय्य मुञ्चति–निसृजति भाषां शब्दपरिणतद्रव्यसंहतिं, किंविशिष्टामित्याह–'सत्यां' सन्तो मुनयस्तेषामेव मुक्तिमार्गप्रवृत्ततया तात्त्विकशिष्टत्वात् तेभ्यो हिता निरवद्यानुष्ठानरूपतया मुक्तिमार्गानुकूलत्वादुपकारिणी सत्या, यत् यस्मै हितं तत्तत्र साध्विति, तत्र साधौ यः प्रत्ययः, अथवा सन्तः–मूलोत्तरगुणास्तेषामेव मुक्तिमार्गतया अतिप्रशस्यत्वात् तेभ्यो हिता तदाराधनात्, यद्वा सन्तः-जीवादयः पदार्थास्तेभ्यो हिता यथावस्थिततत्स्वरूपप्रत्यायकत्वात्, यथा अस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपा, तद्विपरीताऽसत्या, यथा नास्ति जीवोऽस्ति चेत्तदा एकान्तसद्रूप इत्यादि। सत्यामृपा यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेषु अशोकवनमेवेदमित्यादिरूपा, तत्राशोकतरूणां सद्भावात्सत्यता अन्येषामपि धवादीनां सद्भावान्मृषता, या न सत्या नापि मृषा सा असत्यामृषा, हे देवदत्त! घटमानय गां देहि मह्यमित्यादिरूपा, इयं हि स्वरूपमात्रप्रतिपादनफलत्वान्न यथोक्तलक्षणा सत्या नापि मृषा, ततोऽसत्यामृषा, आसां च स्वरूपमुदाहरणयुक्तं प्रज्ञापनासूत्रादवसातव्यं ॥ ननु औदारिकादिर्गृह्णाति मुञ्चति च भाषामित्युक्तं, तत्र (ततः सा) मुक्ता सती उत्कर्षतः कियत् क्षेत्रं व्याप्नोति?, उच्यते; समस्तमेव लोकं, यद्येवं तर्हि 'कइहिं' इत्यादि, अयं सूत्रतः सम्बन्धः अथवा अर्थतः-ननु द्वादशभ्यो योजनेभ्यः परतो न शृणोति शब्दं, मन्दपरिणामत्वात्तद्रव्याणामित्युक्तं, तत्र किं परतोऽपि द्रव्याणामाऽऽगतिरस्ति?, यथा च विषयाभ्यन्तरे नैरन्तर्येण तद्वासनासामर्थ्यं, एवं बहिरप्यस्ति उत नेति, उच्यते–अस्ति केषाञ्चित्कृत्स्नलोकव्याप्तेः, यद्येवं तर्हि–

कइहि समएहि लोगो, भासाइ निरंतरं तु होइ फुडो । लोगस्स य कइभागे, कइभागो होइ भासाए ॥ १० ॥

कतिभिः समयैर्लोक्यत इति लोकश्चतुर्दशरज्ज्वात्मकः क्षेत्रलोकः परिगृह्यते, भाषया निरन्तरमेव भवति स्पृष्टो—व्याप्तः पूर्ण इत्यनर्थान्तरं, लोकस्य च कतिभागे कतिभागो भवति भाषायाः ?, अत्रोच्यते—

चउहि समएहि लोगो, भासाइ निरंतरं तु होइ फुडो । लोगस्स य चरमंते चरमंतो होइ भासाए ॥ ११ ॥

चतुर्भिः समयैर्लोको भाषया निरन्तरमेव भवति स्पृष्टो—व्याप्तः किं सर्वयैव भाषया उत विशिष्टया ?, उच्यते, विशिष्टया, केयं-इह कश्चिद्वक्ता मन्दप्रयत्नो भवति कश्चिन्महाप्रयत्नः, तत्राद्यो यथारूपाणि शब्दद्रव्याणि गृहीतवांस्तथारूपाण्येवाभिन्नान्युपजातमन्दशब्दपरिणामानि निसृजति, तानि च तथानिसृष्टानि मन्दप्रयत्ननिसृष्टत्वात् परिस्थूराणि, अत एव तदन्यद्रव्यवासनोत्पादपाटवरहितानि असङ्ख्येयखण्डशो भिद्यन्ते, भिद्यमानानि च सङ्ख्येयानि योजनानि गत्वा शब्दपरिणामं विजहति, यस्तु महाप्रयत्नो वक्ता स खल्वादानप्रयत्नेनापि भित्त्वैव गृह्णाति, गृहीत्वा च शब्दपरिणाममपि तेषामुत्कटमुत्पादयति, उत्पाद्य च निसर्गप्रयत्नेन भूयो भित्त्वा निसृजति, तानि च तथानिसृष्टानि सूक्ष्मत्वादतिप्रभूतत्वादत्युत्कटशब्दपरिणामाच्च (मत्वाच्च) तदन्यानि बहूनि द्रव्याणि वासयन्ति तदन्यद्रव्यवासकतया षट्सु दिक्षु अनन्तगुणवृद्ध्या परिवर्द्धमानानि लोकान्तमाप्नुवन्ति, शेषं लोकं तु तत्पराघातवासितानि द्रव्याण्यापूरयन्ति । इह चतुःसमयग्रहणे त्रिपञ्चसमयग्रहणमपि प्रत्येतव्यं, तुलादीनां मध्यग्रहणे आद्यन्तग्रहणवत् । कथं त्रिभिः समयैर्लोको भाषया निरन्तरमेव भवत्यापूरितः ?, उच्यते, इह यदा लोकमध्यस्थो वक्ता भवति तदा तेन निसृष्टानि भाषापरिणतानि द्रव्याणि प्रथमसमय एव षट्दिक्षु लोकान्तमनुधावन्ति, 'जीवसूक्ष्मपुद्गलयोरनुश्रेणिगति'रितिवच-

नात्, द्वितीयसमये तु त एव हि षट् दण्डाश्चतुर्दिक्षु एकैकशोऽनुश्रेण्या वासितद्रव्यैः प्रसरन्तः षड् मन्थाना भवन्ति, तृतीयसमये तु पृथक् पृथक् तदन्तरालपूरणात्पूर्णो भवति लोकः, एवं त्रिभिः समयैः भाषा(षया) लोकः स्पृष्टो भवति। यदा तु स्वयम्भूरमणपरतटवर्त्तिनि लोकान्ते अलोकस्य निकटीभूय त्रसनाड्या(ड्या वा) बहिश्चतसृणां दिशामन्यतमस्यां दिशि व्यवस्थितो भाषको वक्ति तदा चतुर्भिः समयैरापूर्यते, कथं?, [उच्यते,] एकेन समयेनान्तर्नाडि शब्दद्रव्याण्यनुप्रविशन्ति, तदा वाम १ दक्षिण २ पृष्ठोर्द्ध्वा ३ धोदिशां ४ अलोकेन स्खलितत्वात्, शेषसमयत्रयभावना पूर्ववत्। यदा तु त्रसनाड्या बहिर्विदिक्स्थितो भाषको वक्ति तदा पुद्गलानामनुश्रेणिगमनात् प्रथमसमयेन विदिशो दिशि गमनं, द्वितीये तु नाड्यन्तःप्रवेशः, शेषं समयत्रयं पूर्ववदित्येवं पञ्चभिः समयैः सकललोकपूरणं। अत्र च त्रिसमयपक्षे च ये अनुश्रेणिव्यवस्थिता निष्कुटास्त एव पूर्यन्ते, वक्रनिष्कुटपूरणं तु न बुध्यत एव, स्वल्पत्वाच्च न विवक्षितमिति लक्ष्यते। अन्ये तु जैनसमुद्घातगत्या लोकापूरणमिच्छन्ति, तेषां चाद्यसमये भाषायाः खलूर्द्ध्वाधोगमनाच्छेषदिक्षु मिश्रशब्दश्रवणसम्भवः। उक्तं चाविशेषणं (चाविशेषेण) 'भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणई'त्ति (गा. ६), अथ मतं—'व्याख्यानतोऽर्थप्रतिपत्ति'रिति न्यायाद्दण्ड एव मिश्रश्रवणं भविष्यति, न शेषदिक्षु, ततश्चादोष इति, अत्रोच्यते, एवमपि त्रिभिः समयैर्लोकापूरणमापद्यते, न चतुःसमयसम्भवोऽस्ति, कथं?, प्रथमसमयानन्तरमेव शेषदिक्षु पराघातद्रव्यसद्भावात् द्वितीयसमय एव मन्थानसिद्धेः, तृतीये च तदन्तरालपूरणादिति। ननु जैनसमुद्घातवच्चतुर्भिरेवाऽऽपूरणं भविष्यतीति को दोषः?, उच्यते, न, सिद्धान्तापरिज्ञानात्, जैनसमुद्घाते हि स्वरूपेण पूरणात् न तत्र पराघातद्रव्यसम्भवोऽस्ति, सकर्मकजीवव्यापारत्वात्तस्य, ततश्च तत्र द्वितीयसमये कपाटनिर्वृत्तिरेव, शब्दद्रव्याणां त्वनुश्रेणि-

त्रिसमयादिना भाषया लोकव्याप्तिः।

गमनात्, पराघातद्रव्यान्तरवासकस्वभावकत्वाच्च द्वितीयसमये एव मन्थानंनिष्पत्तिरिति । अचित्तमहास्कन्धोऽपि वैश्रसिकत्वात्पराघाताभावाच्चतुर्भिरेवापूरयति न चैवं शब्द इति । यदुक्तं 'लोकस्य च कतिभागे कतिभागो भवति भाषाया' इति, तत्रोत्तरमाह—लोकस्य च क्षेत्रगणितमपेक्ष्य चरमान्ते असङ्ख्येयभागे चरमान्तोऽसङ्ख्येयभागो भवति भाषायाः । इयमत्र भावना—त्रिसमयव्याप्तौ चतुःसमयव्याप्तौ पञ्चसमयव्याप्तौ वा नियमेन प्रथमद्वितीयसमययोर्लोकाऽसङ्ख्येयभागे भाषाया असङ्ख्येयभागो भवति, तथाहि—त्रिसमयव्याप्तौ प्रथमे दण्डषट्कं, ते च दण्डादयो यद्यपि दैर्घ्येण लोकान्तस्पर्शिनः तथापि वक्तृमुखविनिर्गतत्वात्तत्प्रमाणानुसारतो बाहल्येन चतुरङ्गुलादिमाना भवन्ति, चतुरादीनि चाङ्गुलानि लोकासङ्ख्येयभागवर्त्तीन्येवेति त्रिसमयव्याप्तौ आद्ययोः समययोर्लोकासङ्ख्येयभागे भाषाया असङ्ख्येयभागः, तथा चतुःसमयव्याप्तौ आद्ये लोकमध्यमात्रप्रवेशो द्वितीये दण्डसमुद्भवः, पञ्चसमयव्याप्तौ तु आद्ये भाषाद्रव्याणां विदिशो दिशि गमनं द्वितीये लोकमध्यमात्रप्रवेशो भवति इत्युभयत्राप्याद्ययोः समययोर्लोकासङ्ख्येयभागे भाषाया असङ्ख्येयः भागः । त्रिसमयव्याप्तौ तृतीयसमये तु सकललोकव्याप्तिः । चतुःसमयव्याप्तौ तृतीयसमये तु लोकसङ्ख्येयभागे भाषायाः सङ्ख्येयभागः, कथमिति चेदुच्यते, स्वयम्भूरमणपश्चिमपरतटवर्त्तिनि लोकान्ते त्रसनाड्या बहिर्वा पश्चिमदिशि स्थित्वा ब्रुवतो भाषकस्य चतुरङ्गुलादिबाहल्यो रज्जुदीर्घो दण्डस्तिरश्चीनं गत्वा स्वयम्भूरमणपूर्वतटवर्तिनि लोकान्ते लगति, ततो द्वितीयसमये तस्माद्दण्डादूर्द्ध्वाधश्चतुर्दशरज्जूच्छ्रितः पूर्वापरतिरश्चीनतया रज्जुविस्तृतः पराघातवासितद्रव्याणां दण्डो निर्गच्छति, लोकमध्ये तु पराघातवासितद्रव्याणामेव चतुरङ्गुलादिबाहल्यं रज्जुविस्तीर्णं दण्डद्वयं विनिर्गत्य स्वयम्भूरमणदक्षिणोत्तरवर्त्तिलोकान्तयोर्लगति, एवं च सति चतुरङ्गुलादिबाहल्यं सर्वतो रज्जुविस्तीण लोकमध्ये

शब्दद्रव्येण लोकव्याप्तिः।

वृत्तं छत्वरं सिद्धं भवति, तृतीयसमये तूर्द्ध्वाधो व्यवस्थितदण्डाच्चतुर्दिक्प्रसृतः पराघातवासितद्रव्यसमूहो मन्थानं साधयति, लोकमध्यव्यवस्थितसर्वतोरज्जुविस्तीर्णछत्वरादूर्द्ध्वाधःप्रसृतः पुनः स एव त्रसनाडीं समस्तामपि पूरयति । एवं च सति त्रसनाडी सर्वापि ऊर्द्ध्वाधोव्यवस्थितदण्डमथिभावेन तदधिकं च लोकस्य पूरितं भवति, एतावच्च क्षेत्रं लोकस्य सङ्ख्याततमो भागः, तथा च सति चतुःसामयिक्या व्याप्तेस्तृतीयसमयैर्लोकस्य सङ्ख्याततमे भागे भाषाया अपि समस्तलोकव्यापिन्याः सङ्ख्याततमो भाग इति । पञ्चसामयिक्यास्तु व्याप्तेस्तृतीयसमये लोकाऽसङ्ख्येयतमे भागे भाषाया असङ्ख्येयतमो भागः, तस्यां तस्य दण्डसमयत्वात्, तत्र चोक्तप्रकारेणासङ्ख्येयभागवर्त्तित्वस्य भावादिति, चतुर्थे तु समये चतुःसामयिक्यां व्याप्तौ मध्यान्तरालपूरणात्समस्तलोकव्याप्तिः पञ्चसामयिक्यां व्याप्तौ तु चतुर्थे समये लोकस्य सङ्ख्येये भागे भाषायाः सङ्ख्येयो भागः, तस्यां तस्य मथिसम्भवात्तस्य च सङ्ख्येयभागवर्त्तित्वस्य प्रागेव भावितत्वात्, पञ्चसामयिक्यां व्याप्तौ मध्यान्तरालपूरणात् समस्तलोकव्याप्तिः, एतच्च महाप्रयत्नवक्तृनिसृष्टद्रव्यापेक्षया द्रष्टव्यं, मन्दप्रयत्नवक्तृनिसृष्टानि तु लोकासङ्ख्येयभाग एव वर्त्तन्ते, दण्डादिक्रमेण लोकापूरणासम्भवात्, त्रिसमयव्याप्तौ चतुःसमयव्याप्तौ [ पञ्चसमयव्याप्तौ ] च त्र्यादिषु समयेषु आपूरिते लोके लोकस्य चरमान्ते भाषाया अपि चरमान्तो भवति, किमुक्तं भवति ?—लोके निष्ठां गते भाषापि निष्ठां यातीति । 'तत्त्वभेदपर्यायैर्व्याख्ये'तिन्यायात् तत्त्वतो भेदतश्च मतिज्ञानस्वरूपमुक्तं, इदानीं नानादेशजविनेयगणसुखप्रतिपत्तये तत्पर्यायशब्दानभिधित्सुराह—

ईहा अपोह वीमंसा, मग्गणा य गवेसणा । सण्णा सई मई पण्णा, सव्वं आभिनिबोहियं ॥ १२ ॥

'ईह चेष्टायां' ईहनमीहा—स्थाणुः वा पुरुषो वेति विचारणा—सतामर्थानामन्वयिनां व्यतिरेकिणां च पर्यालोचनेत्यर्थः,

अपोहनमपोहो निश्चयः, विमर्शनं विमर्शः, अपायात्पूर्वं ईहाया उत्तरः प्रायः शिरःकण्डूयनादयः पुरुषधर्माः, नात्र राजपथे स्थाणुर्भवति पुरुषः सम्भाव्यत इति सम्प्रत्ययः, अस्तित्वरूपमन्वयिधर्मान्वेषणं मार्गणा, चः समुच्चयार्थे, नास्तित्वरूपव्यतिरेकधर्मालोचनं गवेषणा, संज्ञानं संज्ञा—व्यञ्जनार्थावग्रहोत्तरकालभावी मतिविशेषः, स्मरणं स्मृतिः—पूर्वानुभूतार्थालम्बनप्रत्ययः, मननं मतिः—कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मपर्यालोचनरूपा मतिरित्यर्थः। सर्वमिदमाभिनिबोधिकं मतिज्ञानमित्यर्थः। एवं किञ्चिद्भेदाद् भेदः प्रदर्शितः, परमार्थतस्तु सर्व एते मतिवाचकाः पर्यायशब्दाः, सम्प्रति नवभिरनुयोगद्वारैः पुनस्तद्रूपनिरूपणार्थमाह—

संतपयपरूवणया, दव्वपमाणं च खित्त फुसणा य। कालो अ अंतरं भाग, भावे अप्पाबहुं चेव ॥ १३ ॥

सच्च तत्पदं, तस्य प्ररूपणं—गत्यादिषु विचारणं सत्पदप्ररूपणं तद्भावः सत्पदप्ररूपणता, मतिज्ञानमिति यत्सत्पदं तस्य गत्यादिभिः द्वारैः प्ररूपणमित्यर्थः, अथवा सद्विषयं पदं सत्पदं—तदेव मतिज्ञानमितिरूपं पदं, मतिज्ञानस्य सत्त्वात्प्रकान्तत्वाच्च। नन्वसत्पदप्ररूपणेति (पणा किं क्रियते ?,) क्रियते खरविषाणादेरसत्पदस्यापि ततः सद्ग्रहणं, अथवा सन्ति च तानि पदानि—स्थानानि सत्पदानि गत्यादीनि, तैः प्ररूपणं मतेः १। द्रव्यप्रमाणमिति जीवद्रव्यप्रमाणं वक्तव्यं, एकस्मिन्समये मतिज्ञानं कियन्तः प्रतिपद्यन्ते ?, सर्वे वा कियन्त ? इति २। चः समुच्चये, क्षेत्रं वक्तव्यं, कियति क्षेत्रे मतिज्ञानं सम्भवति ? ३। स्पर्शना च वक्तव्या, कियत्क्षेत्रं मतिज्ञानिनः स्पृशन्ति ? ननु क्षेत्रस्य स्पर्शनायाश्च कः प्रतिविशेषः ?, उच्यते, यत्रावगाहस्तत् क्षेत्रं, स्पर्शना तु बाह्यतोऽपि भवति, यथा परमाणुमधिकृत्योक्तं—"एगपएसोगाहो (गासं खेत्तं) सत्तपएसा य से फुसणा (वि० ४३२)॥" चः समुच्चये ४। कालः—स्थितिलक्षणो मतेर्वाच्यः, चः पूर्ववत् ५। [अन्तरं] एकदा प्रतिपद्य विमुक्तः कियता कालेन पुनरपि

तत्प्रतिपद्यते ६। भागो–मतिज्ञानिनः शेपज्ञानिनां कतिभागे वर्त्तन्ते? ७। भावः कस्मिन्भावे मतिज्ञानिनो वर्त्तन्ते? ८। अल्पवहुत्वं च वक्तव्यं ९। ननु भागद्वारादेवायमर्थो अवगतस्ततः किमनेन द्वारेण?, न, अभिप्रायापरिज्ञानात्, इह मतिज्ञानिनामेत्र पूर्वप्रतिपन्नप्रतिपद्यमानकानां परस्परमल्पवहुत्वं वक्तव्यं। इह च ये मतिज्ञानलाभस्याद्यसमये वर्त्तन्ते ते प्रतिपद्यमानकाः, ये तु तल्लाभस्य द्वितीयादिसमयेषु वर्त्तन्ते ते पूर्वप्रतिपन्नाः, भागस्तु शेपज्ञानापेक्षया ॥ १३ ॥

गइ इंदिए य काए, जोए वेए कसायलेसासु। सम्मत्तनाणदंसणसंजयउवओग आहारे ॥ १४ ॥

भासगपरित्त पज्जत्त, सुहुमे सण्णी य होइ भवचरिमे। आभिणिवोहिअनाणं, मग्गिज्जइ एसु ठाणेसु॥ १५॥

गाथाद्वयेनाभिनिवोधिकज्ञानस्य सत्पदप्ररूपणताद्वारावयवार्थः प्रतिपाद्यते–मतिज्ञानं किमस्ति नास्तीति?, अस्ति, यद्यस्ति क्व तत्?, तत्र गतिमङ्गीकृत्यालोच्यते, सा गतिश्चतुर्द्धा नारकतिर्यङ्मनुष्यामरभेदात्, तत्र चतुर्विधायामपि गतौ मतिज्ञानस्य पूर्वप्रतिपन्ना नियमतो विद्यन्ते प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः–कदाचिद्भवन्ति कदाचिन्नेति १। अथेन्द्रियाण्यङ्गीकृत्य मृग्यते, तत्र पञ्चेन्द्रियाः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपाद्यमानास्तु भाज्याः, द्वित्रिचतुरिन्द्रियास्तु करणापर्याप्तावस्थायां पूर्वभवायातं सासादनसम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्नाः सम्भवन्ति, नत्वितरे, एकेन्द्रियेपूभयाभावः २। कायानधिकृत्य विचार्यते, तत्र त्रसकाये पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु भाज्याः, शेषकायेपु पञ्चसूभयाभावः, एतच्च सिद्धान्ताभिप्रायेण, कार्मग्रन्थिकाभिप्रायेण तु लब्धिपर्याप्तवादरपृथिव्यब्वनस्पतिपु करणापर्याप्तेपु पूर्वप्रतिपन्नाः सम्भवन्ति, सासादनसम्यक्त्वस्य तदभिप्रायेण तेषु सम्भवात्, इतरे तु सर्वथा नैव, तेजोवायवस्तूभयविकला एवेति ३। योगानधिकृत्य मनोवाक्काय-

योगेषु समुचितेषु पञ्चेन्द्रियवद्वक्तव्यं, मनोरहितवाग्योगिषु विकलेन्द्रियवत्, केवलकाययोगिष्वेकेन्द्रियवत् ४। तथा 'वेद' इति स्त्रीपुन्नपुंसकरूपेषु त्रिष्वपि वेदेषु पूर्वप्रतिपन्नाः सन्ति, अन्ये भाज्याः ५। कषायद्वारे आद्येष्वनन्तानुबन्धिक्रोधादिषु सासादन-सम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्नाः सन्ति न त्वितरे, शेषेषु द्वादशकषायेषु आद्या नियमतः सन्ति, अन्ये भाज्याः ६, लेश्याद्वारे श्लेषयन्त्यात्मानमष्टविधेन कर्मणेति लेश्याः, काया्द्यन्यतमयोगवतः कृष्णादिद्रव्यसम्बन्धादात्मनः परिणामा इत्यर्थः। तत्राद्यासु तिसृष्वाद्याः सन्ति नेतरे, शेषासु गतिवत् ७। सम्यक्त्वद्वारे व्यवहारनिश्चयनयाभ्यां विचारः, तत्र व्यवहारनयमतेन सम्यग्दर्शन-मतिश्रुतानां प्रतिपद्यमानको मिथ्यादृष्टिरेव भवति, न पुनः सम्यग्दृष्टिः सन् मतिश्रुते प्रतिपद्यते, कुतः?, सम्यग्दर्शनमतिश्रुतानां युगपल्लाभात्। यदि हि प्राप्ते सति सम्यक्त्वे मतिश्रुते प्रतिपद्यते तदा स्यात् सम्यग्दृष्टिर्मतेः प्रतिपद्यमानकः, न चैतदस्ति, सम्यक्त्वेन सहैव तल्लाभात्। अथ सम्यक्त्वेन सह लब्धे अपि मतिश्रुते सम्यग्दृष्टिः पुनरपि प्रतिपद्यते तर्ह्यनवस्था, ततः सम्य-ग्दृष्टिः पूर्वप्रतिपन्न एव नेतरः। निश्चय[नय]स्त्वाह—सम्यग्दृष्टिः पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च मतेः सम्यग्दर्शनसहायत्वात्, ननु मतिलाभस्य सम्यग्दर्शनसहायत्वात् इति व्यवहारेणाप्युक्तं तत्को अस्य व्यवहाराद्विशेषो येनास्य सम्यग्दृष्टिर्मतेः प्रतिपद्यमानको भवति इत्याह—क्रियाकालनिष्ठाकालयोरभेदादिति, निश्चयो हि मन्यते यदैव सम्यक्त्वप्राप्तिक्रियाविशिष्टो भवति जीवस्तदैव सम्यग्दृष्टिव्यपदेशमासादयति, क्रियाकालस्य निष्ठाकालस्य चैकत्वात्। श्रुतः सम्यग्दृष्टिः सन्नेतदभिप्रायेण मतिज्ञानं प्रतिपद्यत इति ८। ज्ञानद्वारे मत्यादिभेदाद् ज्ञानं पञ्चधा, अत्रापि व्यवहारनिश्चयनयाभ्यां विचारः, तत्र व्यवहारनयमतेन मतिश्रुतावधिमनःपर्याय-ज्ञानिषु आद्या नापरे, न ह्येतन्मतेन ज्ञानी सन् मतिज्ञानं प्रतिपद्यते किन्त्वज्ञानीति, केवलिन्युभयाभावः, तस्य क्षायोपशमिक-

निश्चयव्यवहाराभ्यां ज्ञानलाभः

ज्ञानातीतत्वात्, तथा मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तस्तु कदाचिद्विवक्षितकाले प्रतिपद्यमानका भवन्ति, नापरे। निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति अन्येऽपि सम्भवन्ति, सम्यग्दर्शनलाभसमय एव मत्यादिलाभस्य सम्भवात् क्रियाकालनिष्ठाकालयोश्चाभेदात्, मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव, नापरे, पूर्वं सम्यक्त्वलाभकाले प्रतिपन्नमतिज्ञानस्यैव पश्चात् यत्यवस्थायां मनःपर्यायज्ञानसद्भावात्, केवलिनां तूभयाभावः, मत्यादिज्ञानव्यवच्छेदेन केवलोत्पत्तेः, मत्याद्यज्ञानिषु तूभयाभावः प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात्, क्रियाकालनिष्ठाकालयोरभेदात्, अज्ञानभावे प्रतिपत्तिक्रियाया अभावात् ९। दर्शनद्वारे दर्शनं चतुर्द्धा, चक्षुरचक्षुरवधिकेवलभेदात्, आद्यदर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्राप्यन्ते, अन्ये भाज्याः, तदुपयोगं त्वाश्रित्य पूर्वप्रतिपन्ना एव, नान्ये, मतिज्ञानस्य लब्धित्वात्, लब्ध्युत्पत्तेश्च दर्शनोपयोगे निषिद्धत्वात्, 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स उववज्जंति' इतिवचनात्, केवलदर्शनिनां तूभयाभावः, अन्यदर्शनव्यवच्छेदेन केवलज्ञानदर्शनोत्पत्तेः १०। संयतद्वारे संयतः पूर्वप्रतिपन्नो नियमाल्लभ्यते, प्रतिपद्यमानकस्तु भाज्यः, ननु सम्यक्त्वलाभावस्थायामेव मतेः प्रतिपन्नत्वात्संयतः कथं प्रतिपद्यमानको अवाप्यते?, सत्यमेतत्, केवलं योऽतिविशुद्धत्वात्सम्यक्त्वं चारित्रं च युगपत्प्रतिपद्यते स तस्यामवस्थायां प्रतिपद्यमानस्य संयमस्याप्रतिपन्नत्वात्संयतो मतेः प्रतिपद्यमानको भवति ११। उपयोगद्वारे, स द्विधा—साकारो अनाकारश्च, तत्र पञ्च ज्ञानानि त्रीण्यज्ञानानि च साकारः, चत्वारि दर्शनान्यनाकारः, तत्र साकारोपयोगे पूर्वप्रतिपन्नाः सन्ति, अन्ये भाज्याः, अनाकारोपयोगे आद्या एव, नान्ये, तत्र लब्ध्युत्पत्तेरभावात् १२। आहारकद्वारं, आहारके गतिवत्, अनाहारके अपान्तरालगतौ आद्याः, नान्ये १३। भापकद्वारे

भाषालब्धिसम्पन्ना भाषकाः, ते भाषमाणा अभाषमाणा वा गतिवत्, भाषालब्धिशून्याश्चोभयविकलाः, ते ह्येकेन्द्रिया एव, तेषां चोभयाभावः १४। परीत्तद्वारे परीत्ताः-प्रत्येकशरीरिणः परीत्तीकृतसंसारा वा स्तोकावशेषसंसारा इत्यर्थः, एते उभयेऽपि गतिवत्, अपरीत्तास्तु साधारणशरीरिणोऽपार्द्धपुद्गलपरावर्त्तादप्युपरि [संसाराः] वा, ते मिथ्यादृष्टित्वादुभयेऽप्युभयविकलाः १५। पर्याप्तकद्वारे षड्भिराहारादिपर्याप्तिभिः पर्याप्तकाः पूर्वप्रतिपन्नाः सन्ति, अन्ये भाज्याः, अपर्याप्तास्त्वाद्याः नान्ये १६। सूक्ष्मद्वारे सूक्ष्माः समूर्च्छनजनरास्ते खलूभयविकलाः, बादरेषु तु केवलज्ञानस्याभिधानात् तत्र गर्भजनरा ज्ञेयाः, अतो गतिवत् १७। संज्ञिद्वारे इह दीर्घकाल(लिकी)व्यपदेशेन संज्ञिनो गृह्यन्ते, ते च गतिवत्, असंज्ञिनस्त्वाद्या एव, नेतरे १८। भवद्वारे भव इति भवसिद्धिकास्ते च गतिवत्, अभवसिद्धिकास्तूभयविकलाः १९, चरमद्वारे चरमो भवो भविष्यति येषां तेऽभेदोपचाराच्चरमाः, ते गतिवत्, अचरमास्तूभयविकलाः २०, मतिज्ञानमेतेषु गत्यादिषु मार्गणास्थानेषु मार्गितमुक्तप्रकारेणेति ॥ साम्प्रतमाभिनिबोधिकजीवद्रव्यप्रमाणमुच्यते-पूर्वप्रतिपन्ना जघन्यतः क्षेत्रपल्योपमाऽसङ्ख्येयभागप्रदेशराशिप्रमाणाः, उत्कर्षतस्तु तेभ्यो विशेषाधिकाः, प्रतिपद्यमानकास्तु स्युर्न वा, यदि स्युस्तदा एको द्वौ त्रयो वा उत्कर्षतस्तु क्षेत्रपल्योपमाऽसङ्ख्येयभागप्रदेशराशिप्रमाणाः २। क्षेत्रद्वारं-नानाजीवानङ्गीकृत्य सर्व एव मतिज्ञानिनो लोकस्याऽसङ्ख्येयभागे वर्त्तन्ते, एकजीवस्त्विलिकागत्या गच्छन् ऊर्द्ध्वमनुत्तरसुरेषु सप्तचतुर्दशभागेषु रज्जुप्रमाणेषु वर्त्तते, तेभ्यो वा आगच्छन्, अधस्तु षष्ठीं पृथ्वीं गच्छन् ततो वा प्रत्यागच्छन् पञ्चसु चतुर्दशभागेषु, नातः परमधः क्षेत्रमस्ति, यस्मात्सम्यग्दृष्टेरधः सप्तमनरकगमनं प्रतिषिद्धं, षष्ठीमपि पृथिवीं यावत्सि(त्सै)द्धान्तिकमतेन विराधितसम्यक्त्वो गृहीतेनापि

क्षायोपशमिकदर्शनेन कश्चिदुत्पद्यते, नन्वधः सप्तमपृथिव्यामपि सम्यक्त्वलाभस्य प्रतिपादितत्वादागच्छतः पञ्चसप्त(पञ्चचतुर्दश) भागाधिकक्षेत्रसम्भवः ?, उच्यते, एतदयुक्तं, सप्तमनरकात्सम्यग्दृष्टेरागमनस्याप्यभावात्, कथं ?, यस्मात् तत उद्वृत्तास्तिर्यक्ष्वेवाऽऽगच्छन्तीति प्रतिपादितं, अमरनारकाश्च सम्यग्दृशो मनुष्येष्विति ३। स्पर्शनाद्वारे स्पर्शना क्षेत्रादधिका, यथा परमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा च स्पर्शना ४। कालद्वारे उपयोगमधिकृत्यैकस्यानेकेषां च जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमात्र एव, लब्धिमङ्गीकृत्य जघन्येनैकस्यान्तर्मुहूर्त्तं उत्कर्षतः षट्षष्टिसागरोपमाण्यधिकानि, कथं ?, उच्यते, विजयादिषु त्रयस्त्रिंशत्सागरस्थितिकेषु देवेषु वारद्वयं गतस्य अथवाऽच्युते द्वाविंशतिसागरस्थितिकेषु देवेषु त्रीन्वारान् गतस्य षट्षष्टिसागरोपमाणि भवन्ति, अधिकं चेह नरभवसम्बन्धिपूर्वकोटीनां त्रयं चतुष्टयं वा द्रष्टव्यं, नानाजीवाऽपेक्षया तु सर्वकालं, न यस्मादाभिनिबोधिकलब्धिमच्छून्यो लोकः कदाचिदपि ५। अन्तरद्वारे तत्रैकजीवमधिकृत्य मतेरन्तरं जघन्येनान्तर्मुहूर्त्तं, कथं ?, यदा कश्चिज्जीवः सम्यक्त्वसहितं मतिमवाप्य प्रतिपत्य चान्तर्मुहूर्त्तं मिथ्यात्वे स्थित्वा पुनरपि तदावरणकर्मक्षयोपशमात् सम्यक्त्वं (सम्यक्त्वसहितं) मतिज्ञानमवाप्नोति इति, उत्कर्षतस्तु अपार्द्धपुद्गलपरावर्त्तः सर्वाऽऽशातनाप्रचुरस्य, उक्तं च–"तित्थयरपवयणसुअं आयरिअं गणहरं महड्ढिअं। आसायंतो बहुसो अणंतसंसारिओ होइ ॥१॥ (वि० ४३७)" तथा नानाजीवानपेक्ष्यान्तराभावः, मतिज्ञानिभिर्लोकस्य सदाऽशून्यत्वात् ६। भागद्वारे मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानन्तभागे वर्त्तन्ते, शेषज्ञानिनो हि सिद्धकेवलिसहिता अज्ञानिनस्तु वनस्पतिसहिता अनन्ताः, मतिज्ञानिनस्तु सर्वलोकेऽप्यसङ्ख्याता एवेति ७। भावद्वारे मतिज्ञानिनः क्षायोपशमिके भावे वर्त्तन्ते, मत्यादिचतुष्टयस्य क्षायोपशमिकत्वात् ८। अल्पबहुत्वद्वारे सद्भावे सति सर्वस्तोकाः प्रतिपद्यमानकाः, तेभ्यः पूर्वप्रतिपन्ना जघन्यपदिनोऽसङ्ख्यात-

गुणाः, तेभ्योऽप्युत्कृष्टपदिनः पूर्वप्रतिपन्ना विशेषाधिकाः ९ ॥ सम्प्रति यथान्यायवर्णितमतिभेदसङ्ख्याप्रदर्शनद्वारेणोपसंहरन्नाह—

आभिणिबोहियनाणे, अट्ठावीसइ हवंति पयडीओ । सुअनाणे पयडीओ वित्थरओ आवि वोच्छामि ॥ १६

आभिनिबोधिकज्ञाने अष्टाविंशतिर्भवन्ति प्रकृतयो भेदा इत्यर्थः, ताः पूर्वमेव भाविताः, ननु प्रागवग्रहादिनिरूपणायां 'अत्थाणं ओग्गहण'मित्यादौ एताः प्रकृतयः प्रदर्शिता एव किमर्थं पुनः प्रदर्श्यन्ते, नैष दोषः, तत्र हि सूत्रे न सङ्ख्यानियमः कृतः, इह तु सङ्ख्यानियमेनोक्ताः । इदं च मतिज्ञानं चतुर्विधं, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, द्रव्यतः सामान्यादेशेन मतिज्ञानी सर्वद्रव्याणि जानाति न विशेषतः, किमुक्तं भवति ?—सामान्यप्रकारेणाऽसङ्ख्येयप्रदेशात्मक एव लोकव्याप्यमूर्त्तः प्राणिपुद्गलानां गतिपरिणामपरिणतानां गत्युपष्टम्भहेतुर्धर्मास्तिकायः, असङ्ख्येयप्रदेशात्मक एव लोकव्याप्यमूर्त्तः प्राणिपुद्गलानां स्थितिपरिणामपरिणतानां स्थित्युपष्टम्भहेतुरधर्मास्तिकायः, अनन्तप्रदेशात्मको लोकालोकव्याप्यमूर्त्तो अवकाशदानहेतुराकाशास्तिकायः इत्यादिरूपेण षडपि द्रव्याण्यवबुद्ध्यते न तु सर्वविशेषैः, सर्वपर्यायाणां केवलिगम्यत्वात् । एवं सामान्यादेशेन मतिज्ञानी क्षेत्रतो लोकालोकं जानाति, कालतः सर्वकालं, इह यद्यपि क्षेत्रकालौ सामान्येन द्रव्यान्तर्गतौ तथापि निवासमात्रपर्यायमधिकृत्य क्षेत्रं वर्त्तनादिरूपतां चाधिकृत्य कालो भेदेन रूढ इति पृथगुपादानम्, भावत औदयिकादीन् पञ्च भावान् जानाति । तदेवमुक्तं मतिज्ञानं, साम्प्रतं श्रुतज्ञानमभिधित्सुराह—'सुअनाणे'त्ति उत्तरार्द्धं, श्रुतज्ञाने प्रकृतयो—भेदास्ता विस्तरतः चशब्दात्सङ्क्षेपतश्च, अपिः सम्भावने, स च एतदनन्तरमवधिप्रकृतीश्चेति सम्भावयति, वक्ष्ये ॥ १६ ॥ अथ श्रुतप्रकृतीर्दर्शयति—

पत्तेयमक्खराइं, अक्खरसंजोग जत्तिआ लोए । एवइया पयडीओ, सुयनाणे हुंति णायव्वा ॥ १७ ॥

मतिभेदोपदर्शनं श्रुतप्रकृतिकथनप्रतिज्ञा च
गा. १६

एकं २ प्रति प्रत्येकं अक्षराणि—अकारादीन्यनेकभेदानि, तद्यथा—अकारः—सानुनासिको निरनुनासिकश्च, पुनरेकैकस्त्रिधा—उदात्तोऽनुदात्तः स्वरितश्चेति षोढा, एवं दीर्घः प्लुतश्चेत्यष्टादशाऽवर्णभेदाः, एवमिवर्णादिष्वपि यथासम्भवं भेदजालं वक्तव्यं। तथा अक्षराणां संयोगा अक्षरसंयोगा द्व्यादयो यावन्तो लोके यथा घटः पट इत्यादि व्याघ्रहस्तीत्यादि च, एते चानन्ताः, तत्राप्येकैकोऽनन्तपर्यायः स्वपरापेक्षया (स्वपर) पर्यायापेक्षया। ननु सङ्ख्येयान्यकारादीन्यक्षराणि ततस्तेषां संयोगा अपि सङ्ख्येया एव घटन्ते, कथमनन्ताः?, उच्यते, इह पुद्गलास्तिकायादिकमभिधेयं, परस्परविलक्षणमनन्तं च, तद्यथा—परमाणुर्द्विप्रदेशिकस्त्रिप्रदेशिको यावदनन्ताणुक इत्यादि। अभिधेयभेदे चाऽभिधानस्य भेदः, अभिधानभेदस्याभिधेय [भेदहेतुकत्वात्, एकत्रापि चाभिधेये अभिधेय] धर्मभेदतोऽनेकाभिधानप्रवृत्तिर्यथा परमाणुर्निरंशो निरवयवो निष्प्रदेशो निर्भेदः, तथा द्व्यणुको द्व्यंशो द्व्यवयवो द्विप्रदेशो द्विभेद इत्यादि, न चैते ध्वनयः सर्वथा एकाभिधेयवाचकाः, सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वात्, एवं सर्वद्रव्येषु सर्वपर्यायेषु च यथायोगं भावनीयं, ततो भवन्त्यनन्ता अक्षरसंयोगाः, 'एतावत्यः' इयत्परिमाणाः प्रकृतयः श्रुतज्ञाने भवन्ति ज्ञातव्याः ॥ १७ ॥ सम्प्रति सामान्यरूपतयोपदर्शितानामनन्तानां श्रुतप्रकृतीनां यथावच्छेदेन प्रतिपादनसामर्थ्यमात्मनः खल्वपश्यन्नाह—

कत्तो मे वण्णेउं सत्ती सुयणाणसव्वपयडीओ ?। चउदसविहनिक्खेवं, सुयनाणे आवि वोच्छामि ॥१८॥

कुतो मे—मम वर्णयितुं—प्रतिपादयितुं शक्तिः—सामर्थ्यं ?, नैवेत्यर्थः, काः ?—'श्रुतज्ञानसर्वप्रकृतीः' प्रकृतयो—भेदाः, कथं न शक्तिः?, उच्यते, इह ये श्रुतग्रन्थानुसारिणो मतिविशेषास्तेऽपि श्रुतमिति प्रतिपादिताः, उक्तं च 'तेवि अ मईविसेसा सुअनाणब्भंतरे जाण' तांश्चोत्कृष्टश्रुतधरोऽप्यभिलाप्यानपि सर्वान्न भाषितुं समर्थः, तेषामनन्तत्वात् आयुषः परि-

श्रुतप्रकृतयः गा. १७
श्रुतप्रकृतीनां यथावच्छेदेन प्रतिपादनासामर्थ्यम् गा. १८

मितत्वाद्वाचः क्रमवर्त्तित्वाच्चातोऽशक्तिः । निक्षेपणं निक्षेपो—नामादिन्यासः, चतुर्दशविधश्चासौ निक्षेपः, श्रुतज्ञाने श्रुतज्ञान-विषयं, चात् श्रुताज्ञानविषयमपिशब्दादुभयविषयं च, तत्र श्रुतज्ञाने—सम्यक्श्रुते श्रुताज्ञाने—असंज्ञिमिथ्याश्रुते उभयश्रुते—दर्शनविशेषपरिग्रहादक्षरादिरूपे वक्ष्ये ॥ १८ ॥ चतुर्दशविधश्रुतनिक्षेपस्वरूपोपदर्शनार्थमाह—

अक्खर सण्णी सम्मं, साईयं खलु सपज्जवसिअं च । गमियं अंगपविट्ठं, सत्तवि एए सपडिवक्खा ॥ १९ ॥

अक्षरादीनि सप्तद्वाराणि अनक्षरादिप्रतिपक्षसहितानि चतुर्दश भवन्ति, सर्वत्र श्रुतशब्दो द्रष्टव्यः, अक्षरश्रुतमनक्षरश्रुत-मित्यादि, 'क्षर [सं] चलने' न क्षरतीत्यक्षरं, तच्च ज्ञानं—चेतनेत्यर्थः, न खल्विदमनुपयोगेऽपि प्रच्यवते ततो अक्षरमिति भावः, इत्थम्भूतभावाक्षरकारणत्वादकारादिकमप्यक्षरमभिधीयते, कारणे कार्योपचारात्, अथवा अर्थान् क्षरति न च क्षयं उपयाती-त्यक्षरं, तच्च त्रिधा—व्यञ्जनाक्षरं संज्ञाक्षरं, लब्ध(ब्ध्य)क्षरं, तत्र व्यज्यते अनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह भाष्यमाणं सर्वमेवाकारादि हकारान्तं, अर्थाभिव्यञ्जकत्वाच्छब्दस्य १ । संज्ञाक्षरमक्षराकारविशेषो यथा घटिकासंस्थानो धकार इत्यादि, तच्च ब्राह्मयादिलिपीविधानेनाऽनेकविधं २ । यो अक्षरोपलम्भस्तल्लब्ध्यक्षरं, तच्चेन्द्रियमनो-निमित्तं श्रुतग्रन्थानुसारि ज्ञानं तदावरणकर्मक्षयोयशमो वा, तत्र व्यञ्जनाक्षरं संज्ञाक्षरं च द्रव्याक्षरमुक्तं, श्रुतज्ञानाख्य-भावाक्षरकारणत्वात्, लब्ध्यक्षरं तु भावाक्षरं विज्ञानात्मकत्वात् ॥ १९ ॥ उक्तमक्षरश्रुतं, अनक्षरश्रुतस्वरूपमाह—

ऊससिअं नीससिअं निच्छूढं खासिअं च छीअं च । णीसिंघियमणुसारं, अणक्खरं छेलियाईअं ॥ २० ॥

उच्छ्वसनमुच्छ्वसितं, भावे क्तः प्रत्ययः, निःश्वसनं निश्वसितं निष्ठीवनं निष्ठ्यूतं थूत्कृतमित्यर्थः, कासनं कासितं, चः

समुच्चये, क्षवणं श्रुतं, चः समुच्चयार्थ एव, अस्य च व्यवहितसम्बन्धः, सेण्टितादि चानक्षरश्रुतमिति, निःसिङ्घनं निःसिङ्घितं अनुस्वारवदनुस्वारं मत्वर्थीयात् प्रत्ययविधानादनक्षरमपि यदनुस्वारवदुच्चार्यते हुङ्कारकरणादिवत्तदनक्षरमित्यर्थः, एतदुच्छ्वसितादि अनक्षरं—अनक्षरश्रुतं, न केवलमेतत्, किन्तु सेण्टनं सेण्टितं चौरमिलनसंज्ञा, एतदादि चानक्षरश्रुतं। इह चोच्छ्वसितादि द्रव्यश्रुतमात्रं, ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं, तस्य तद्भावेन परिणतत्वात्। ननु यद्येवं किमित्युपयुक्तस्य चेष्टापि श्रुतं नोच्यते?, येनोच्छ्वसिताद्येवोच्यते, उच्यते, रूढ्या, अथवा श्रूयते इति श्रुतं, अन्वर्थसंज्ञामधिकृत्योच्छ्वसिताद्येव श्रुतं, न चेष्टा तदभावात्, अनुस्वारादयस्त्वर्थगमकत्वादेव श्रुतं १। संज्ञिद्वारं—संज्ञीति कः शब्दार्थः?, उच्यते, संज्ञानं संज्ञा, साऽस्यास्तीति संज्ञी, ननु यदि संज्ञासम्बन्धमात्रेण संज्ञी तत एकेन्द्रिया अपि संज्ञिनः प्राप्नुवन्ति, तेषामप्याहारादिसंज्ञासद्भावात्। तथा च प्रज्ञापनासूत्रम्—"एगिंदियाणं भंते! कइविहा सण्णा पण्णत्ता?, गोयमा! दसविहा पन्नत्ता, तंजहा—आहारसण्णा १ भयसण्णा २ मेहुणसण्णा ३ परिग्गहसण्णा ४ कोहसण्णा ५ माणसण्णा ६ मायासण्णा ७ लोहसण्णा ८ ओहसण्णा ९ लोगसण्णा १०" इति, सत्यमेतत्, केवलमेतासु मध्ये या ओघसंज्ञा लोकसंज्ञा वा सा अतिस्तोका, ततो न तत्सम्बन्धमात्रेण संज्ञीति व्यपदेष्टुं शक्यः, न खलु कार्षापणधनमात्रेण लोके धनवानित्युच्यते, या त्वाहारादिसंज्ञा सा क्षयोपशमजन्याऽमनोज्ञा भूयस्यपि मोहनीयोदयप्रभवत्वेन न विशिष्टा, न चाऽविशिष्टया संज्ञया संज्ञीत्यभिधातुं शक्यं, न ह्यविशिष्टेन मूर्त्तिमात्रेण लोके रूपवानिति व्यवहारः। ततो या महती शोभना च ज्ञानावरणकर्मक्षयोपशमजन्या मनोज्ञानरूपा संज्ञा तयैव संज्ञीति व्यपदिश्यते, स च संज्ञी त्रिविधस्तद्यथा—दीर्घकालो(लिको)पदेशेन हेतुवादो-

पदेशेन दृष्टिवादोपदेशेन, तत्र यया संज्ञया सुदीर्घमपि कालमतीतमर्थं स्मरति एष्यन्तं च चिन्तयति स [दीर्घकालिकोपदेशेन संज्ञी, दीर्घः कालः] दीर्घकालः सो अस्यास्तीति दीर्घकालिकः स चासावुपदेशश्च, उपदेशो भणनं, दीर्घकालिकोपदेशः, ततः मनोज्ञानावरणकर्मक्षयोपशमवशान्मनोलब्धिसम्पन्नो अनन्तान्मनोयोग्यान् पुद्गलान् गृहीत्वा मनस्त्वेन परिणमय्य मन्यते चिन्तनीयं वस्तुजातं, तेनाऽसौ गर्भजस्तिर्यङ्मनुष्यो वा देवो नारको वा द्रष्टव्यो, न शेष एकेन्द्रियादिः, विशिष्टमनोलब्धिविकलत्वात्, तथा च सति दीर्घकालिकोपदेशेनाऽसंज्ञी एकेन्द्रियो द्वीन्द्रियादिश्च प्रतिपत्तव्यः, तथा हेतुर्निमित्तं कारणं, तस्य वदनं वादस्तद्विषय उपदेशः—प्ररूपणं स [हेतुवादोपदेशः] तेन संज्ञी, यो बुद्धिपूर्वकं स्वदेहपरिपालनायेष्टेष्वाहारादिषु प्रवर्त्तते अनिष्टेभ्यस्तु निवर्त्तते, स च द्वीन्द्रियादिरपि ज्ञेयः, तस्यापि मनःसञ्चिन्तनपूर्वकमिष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात्, केवलमस्य मनश्चिन्तनं प्रायो वर्तमानकालविषयं, न भूतभविष्यद्विषयं, अल्पमनोलब्धिसम्पन्नत्वात्, ततो नादिमः संज्ञी लभ्यते, एतन्मतेनाऽसंज्ञिन एकेन्द्रिया एव । तथा दृष्टिर्दर्शनं—सम्यक्त्वादि, तस्य वदनं वादस्तद्विषय उपदेशः—प्ररूपणं तेन संज्ञी—सम्यग्दृष्टिस्तस्य संज्ञा ज्ञानावरणकर्मक्षयोपशमभावात्, असंज्ञी मिथ्यादृष्टिः, संज्ञिनः श्रुतं संज्ञिश्रुतं, असंज्ञिनः श्रुतमसंज्ञिश्रुतं २ । तथा सम्यक्श्रुतं—अङ्गानङ्गप्रविष्टमाचारावश्यकादि, मिथ्याश्रुतं—पुराणरामायणभारतादि, सर्वमेव वा दर्शनपरिग्रहविशेषात्सम्यक्श्रुतमितरद्वा, तथाहि सम्यग्दृष्टौ सर्वमपि [श्रुतं सम्यक्] श्रुतं, हेयोपादेयशास्त्राणां हेयोपादेयतया परिज्ञानात्, मिथ्यादृष्टौ सर्वं मिथ्याश्रुतं विपर्ययात् ३ । तथा सादिसपर्यवसितमनाद्यपर्यवसितं च नयानुसारतोऽवसेयं, तत्र द्रव्यास्तिकनयमतादेशेनानाद्यपर्यवसितं, नित्यत्वात् धर्मास्तिकायादिवत्, पर्यायास्तिकनयमतादेशेन सादिसपर्यवसितं [अनित्यत्वात् नारकादिपर्यायवत्,

अथवा द्रव्यादिचतुष्टयमधिकृत्य साद्यनाद्यादि भावनीयम्, तद्यथा—एकं पुरुषं प्रतीत्य सादिसपर्यवसितं, नानाजीवानाश्रित्याना-द्यपर्यवसितं, कदाचिदपि व्यवच्छेदाभावात्, क्षेत्रतः पञ्चभरतानि पञ्चैरवतानि प्रतीत्य सादिसपर्यवसितं ] सुषमसुषमादावभावात्, पञ्चमहाविदेहानधिकृत्यानाद्यपर्यवसितं, सकलकालं तत्र भावात्, कालतः उत्सर्पिणीमवसर्पिणीं चाधिकृत्य सादिसपर्यवसितं, तृतीयाद्यरकेष्वेव भावात्, नोत्सर्पिण्यवसर्पिणीमधिकृत्यानाद्यपर्यवसितं, महाविदेहेषु सततं भावात्, भावतः प्रज्ञापक-गतानुपयोगस्वरप्रयत्नस्थानविशेषादीन् भावान् ज्ञेयगतांश्च गतिस्थानभेदसङ्घातवर्णरसगन्धस्पर्शादीन् भावान् प्रतीत्य सादिसपर्यवसितं, इदमुक्तं भवति—प्रज्ञापकोपयोगादयो हि प्रयत्नादिनिर्वर्त्त्यत्वादनित्या एव, यच्चाऽनित्यं तद् घटवत् सादि-सपर्यवसितमिति प्रतीतमेव, अतस्तदाऽऽश्रयं श्रुतमपि तद्रूपमेवेति । क्षायोपशमिकं पुनरङ्गीकृत्यानाद्यपर्यवसितं, तस्य सर्वकालं भावात्, खलुशब्द एवकारार्थः स चावधारणे तस्य च व्यवहितः सम्बन्धः, सप्तैवैते श्रुतपक्षाः [ सप्रतिपक्षाः ], न पुनः पक्षान्तरमस्ति, सतोऽत्रैवान्तर्भावात् । गमिकद्वारं—तत्र गमाः—भङ्गकाः गणितादिविशेषाश्च, यदिवा कारण-वशतो ये सदृशपाठास्तेऽस्य सन्तीति गमिकं, अतोऽनेकस्वरात् मत्वर्थीय इकप्रत्ययः, तच्च प्रायो दृष्टिवादः, गाथाद्यऽसमान-ग्रन्थमगमिकं, तच्च प्रायः कालिकं । नन्वङ्गप्रविष्टानङ्गप्रविष्टयोः कः प्रतिविशेषः?, उच्यते, यद्गणधरैः साक्षाद्दृब्धं तदङ्ग-प्रविष्टं तच्च द्वादशाङ्गं, यत्पुनः स्थविरैर्भद्रबाहुस्वाम्यादिभिरुपनिबद्धं तदनङ्गप्रविष्टं, तच्च आवश्यकनिर्युक्त्यादि । ननु पूर्वं तावत् पूर्वाणि गणधरैरुपनिबद्ध्यन्ते, पूर्वं करणात् पूर्वाणि, पूर्वेषु च सकलवाङ्मयस्यावतारः, न खलु तदस्ति यत्पूर्वेषु नास्त्यभिहितं, ततः किं शेषाङ्गविरचनेनाङ्गबाह्यविरचनेन वा?, उच्यते, इह विचित्रा जगति प्राणिनः, तत्र ये दुर्मेधसस्ते

पूर्वाणि नाध्येतुमीशते, पूर्वाणामतिगम्भीरार्थत्वात्तेषां च दुर्मेधस्त्वात्, स्त्रीणां तु पूर्वाध्ययनानधिकार एव, तासां तुच्छत्वादिदोपबहुलत्वात्। तत्र चातिशेषाध्ययनानि–उत्थानश्रुतादीनि भूतवादो–दृष्टिवादः। ततो दुर्मेधसां स्त्रीणां चानुग्रहाय शेषाङ्गानामङ्गबाह्यस्य विरचनमितिगाथाशेषमवधारणप्रयोगं दर्शयता व्याख्यातम्। तदेवं प्रतिपादितं स्वरूपेण श्रुतज्ञानं, साम्प्रतं विषयद्वारेण निरूप्यते–श्रुतज्ञानं चतुर्द्धा, द्रव्यादिभेदात्, तत्र द्रव्यतः श्रुतज्ञान्युपयुक्तः सर्वद्रव्याणि जानाति, नतु पश्यति, एवं सर्वं क्षेत्रं सर्वकालं सर्वान् भावान् ॥ २० ॥ इदं च श्रुतं सर्वातिशयरत्नसमुद्रकल्पं प्रायो गुर्वाधीनं च ततो विनेयजनानुग्रहार्थं यो यथा चाऽस्य लाभस्तं दर्शयति–

आगमसत्थग्गहणं, जं बुद्धिगुणेहि अट्ठहिं दिट्ठं। बिंति सुयनाणलंभं, तं पुव्वविसारया धीरा ॥ २१ ॥

आ–अभिविधिना सकलश्रुतविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणरूपया गम्यन्ते–परिच्छिद्यन्तेऽर्था येन स आगमः 'पुन्नाम्नी'तिकरणे घः, स चैवंव्युत्पत्त्याऽवधिकेवलादिरूपोऽपि प्राप्नोति, तद्व्यवच्छेदार्थं विशेषणमाह–शिष्यतेऽनेनेति शास्त्रं चेति, आगमग्रहणेन षष्टितन्त्रादिकुशास्त्रव्यवच्छेदः, तेषां यथावस्थितार्थप्रकाशनाभावेनानागमत्वात्, आगमशास्त्रस्य ग्रहणं, यद् बुद्धिगुणैः वक्ष्यमाणैः करणभूतैरष्टभिर्दृष्टं तदेव ग्रहणं श्रुतज्ञानस्य लाभं ब्रुवते, पूर्वेषु विशारदाः पूर्वविशारदाः, धीराः–व्रतप्रतिपालने स्थिराः, किमुक्तं भवति? यदेव जिनप्रणीतप्रवचनार्थपरिज्ञानं तदेव परमार्थतः श्रुतं, न शेषं ॥ २१ ॥ बुद्धिगुणैरष्टभिरित्युक्तं अतस्तानेवाह–



सुस्सूसइ पडिपुच्छइ, सुणेइ गिण्हइ य ईहए वावि। तत्तो अपोहए या, धारेइ करेइ वा सम्मं ॥ २२ ॥

पूर्वं शुश्रूषते—विनययुक्तो गुरुवदनाद्विनिर्गच्छद्वचनं श्रोतुमिच्छति, ततः प्रतिपृच्छति यत्र शङ्कितं भवति, तत्र भूयोऽपि पृच्छति, यद्गुरुः कथयति तत् सम्यक्—व्याक्षेपपरिहारेण सावधानः शृणोति, श्रुत्वा चार्थरूपतया गृह्णाति, गृहीत्वा चेहते पूर्वापराऽविरोधेन पर्यालोचयति, चः समुच्चये, अपिशब्दः पर्यालोचयन् किञ्चित्स्वबुद्ध्याप्युत्प्रेक्षते इति सूचनार्थः, ततो अपोहते च एवमेतद्यदादिष्टमाचार्येण नान्यथा, ततस्तमर्थं निश्चितं स्वचेतसि विस्मृत्यऽभावार्थं सम्यग् धारयति, करोति च सम्यक्—यथोक्तमनुष्ठानं, यथोक्तानुष्ठानमपि श्रुतज्ञानप्राप्तिहेतुः, तदावरणकर्मक्षयोपशमनिमित्तत्वात्, यद्वा यद्यदाज्ञापयति गुरुस्तत्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषते, पूर्वं सन्दिष्टस्य (ष्टश्च) सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः सम्यक् शृणोति, शेषं पूर्ववत् ॥ २२ ॥ तदेवं व्याख्याता गुणाः, सम्प्रति यत् शुश्रूषते इत्युक्तं तत्र श्रवणविधिमाह—

मूअं हुंकारं वा, बाढकारपडिपुच्छवीमंसा। तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥ २३ ॥

प्रथमतो मूकं शृणुयात्, प्रथमश्रवणे संयतगात्रस्तूष्णीमासीतेत्यर्थः, द्वितीये हुङ्कारं च दद्याद्वन्दनं कुर्यादित्यर्थः, तृतीये बाढकारं कुर्यादेवमेतन्नान्यथेति प्रशंसेत्, चतुर्थे श्रवणे गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतदिति, पञ्चमे मीमांसां—प्रमाणजिज्ञासां कुर्यादिति भावः, षष्ठे तदुत्तरोत्तरगुणप्रसङ्गं पारगमनं चास्य भवति, परिनिष्ठः सप्तमे श्रवणे, गुरुवदनुभाषते इत्यर्थः ॥ २३ ॥ एवं श्रवणविधिरुक्तः, साम्प्रतं व्याख्यान[विधि]मभिधित्सुराह—

सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमीसओ भणिओ। तइओ य निरवसेसो, एस विही होइ अणुओगे ॥२४॥

प्रथमोऽनुयोगः सूत्रार्थः—सूत्रार्थप्रतिपादनपर एव, खलु एवार्थः, गुरुणा प्रथमोऽनुयोगः सूत्रार्थाभिधानलक्षण एव

कर्त्तव्यः, मा भूत् प्राथमिकविनेयानां मतिभेदः, द्वितीयः सूत्रस्पर्शिकनिर्युक्तिमिश्रकः कार्य इति भणितो जिनादिभिः, तृतीयश्च निरवशेषः-प्रसक्तानुप्रसक्तप्रतिपादनपरः। एष विधिरुक्तरूपो भवति, क? सूत्रस्य निजेनाभिधेयेन सार्द्धमनुकूलो योगोऽनुयोगः-सूत्रव्याख्या, तत्र व्याख्याविषये इत्यर्थः। ननु परिनिष्ठा सप्तमे इत्युक्तं त्रयश्चानुयोगप्रकारास्तदेतत्कथं?, उच्यते, उक्तानामनुयोगप्रकाराणामन्यतमेन केनचित्प्रकारेण भूयो भूयो भाव्यमानेन सप्तवारश्रवणं कार्यते, न कश्चिद्दोषः, अथवा कञ्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्यं, न पुनरेष एव सर्वत्र श्रवणविधिः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनात् ॥ २४ ॥ उक्तं श्रुतस्वरूपं, सम्प्रत्यवधिज्ञानमेवाह-

संखाईआओ खलु, ओहीनाणस्स सव्वपयडीओ। काओ भवपच्चइया, खओवसमिआओ काओऽवि ॥ २५ ॥

सङ्ख्यामतीताः सङ्ख्यातीताः, असङ्ख्येया इत्यर्थः, सङ्ख्यातीतमनन्तमपि भवति ततश्चानन्ता अपीति द्रष्टव्यं, खलुः विशेषणार्थः, स चैतद्विशिनष्टि-क्षेत्रकालाख्यप्रमेयापेक्षया सङ्ख्यातीताः, द्रव्यभावाख्यप्रमेयापेक्षया त्वनन्ता इति, अवधिज्ञानस्य प्राग्निरूपितशब्दार्थस्य प्रकृतयो-भेदाः, सर्वाश्च ताः प्रकृतयश्चेति, इयमत्र भावना-इहावधेर्लोकक्षेत्रासङ्ख्येयभागादारभ्य प्रदेशवृद्ध्या असङ्ख्येयलोकपरिमाणमुत्कृष्टमालम्बनतया क्षेत्रमुक्तं, कालश्चावलिकाया असङ्ख्येयभागादारभ्य समयवृद्ध्या खल्वसङ्ख्येयोत्सर्पिण्यवसर्पिणीप्रमाण उक्तः। ज्ञेयभेदाच्च ज्ञानस्य भेद इति क्षेत्रकालावधिकृत्याऽसङ्ख्येयास्तत्प्रकृतयः, तथा तैजसवाग्द्रव्यापान्तरालवर्त्त्यनन्तप्रादेशिकद्रव्यादारभ्य विचित्रवृद्ध्या सर्वमूर्त्तद्रव्याण्युत्कृष्टं विषयपरिमाणं द्रव्यतः, प्रतिवस्तुगतासङ्ख्येयपर्यायपरिमाणं विषयमानं भावतः, ज्ञेयभेदे च ज्ञानस्यापि भेद इति समस्तं पुद्गलास्तिकायं तत् पर्यायांश्चाङ्गीकृत्यानन्ता अवधेः

प्रकृतयः, आसां च मध्ये काश्चनान्यतमाः प्रकृतयो 'भवप्रत्ययाः' कोऽर्थः?, भवो—नारकादिजन्म स पक्षिणां गगनगमनलब्धिरिव उत्पत्तौ प्रत्ययः—कारणं यासां ताः, ताश्च नारकामराणामेव, काश्चन 'गुणप्रत्ययाः' क्षयोपशमेन निर्वृत्ताः क्षायोपशमिकाः ताश्च तिर्यङ्नराणां। नन्ववधिज्ञानं क्षायोपशमिके भावे प्रोक्तं, नारकादिभवस्त्वौदयिकः, ततः स कथं तासामवधिप्रकृतीनां प्रत्ययो भवितुमर्हति?, नैष दोषः तासामपि क्षयोपशमनिबन्धनत्वात्, केवलमसौ क्षयोपशमस्तस्मिन्नारकामरभवे सत्यवश्यम्भावीति भवप्रत्ययास्ता इत्युक्तं ॥ २५ ॥ साम्प्रतं सामान्यरूपतयोद्दिष्टानामवधिप्रकृतीनां वाचः क्रमवर्त्तित्वादायुषश्चाल्पत्वाद्यथावच्छेदेन प्रतिपादनसामर्थ्यमात्मनोऽपश्यन्निर्युक्तिकृदाह—

कत्तो मे वण्णेउं, सत्ती ओहिस्स सव्वपयडीओ?। चउदसविहनिक्खेवं, इड्ढीपत्ते य वोच्छामि ॥ २६ ॥

कुतो मे वर्णयितुं शक्तिरवधेः सर्वप्रकृतीः?, नैवेत्यर्थः, तथापि विनेयजनानुग्रहार्थं चतुर्दशविधनिक्षेपमवधिसम्बन्धिनं, आमर्षौषध्यादिलक्षणं ऋद्धिं प्राप्ताः ताश्च वक्ष्ये, चः समुच्चये॥ २६ ॥ तत्र चतुर्दशविधनिक्षेपं प्रतिपिपादयिषुस्तद्द्वारगाथाद्वयमाह—

ओही खित्तपरिमाणे, संठाणे आणुगामिए। अवट्ठिए चले तिव्वमंदपडिवाउप्पया इअ ॥ २७ ॥
नाणदंसणविब्भंगे, देसे खित्ते गई इअ। इड्ढीपत्ताणुओगे य, एमेआ पडिवत्तीओ ॥ २८ ॥

इहावध्यादीनि गत्यन्तानि चतुर्दशद्वाराणि, ऋद्धिस्तु चशब्दसमुच्चितत्वात् पञ्चदशं, अवधेर्नामादिभेदभिन्नस्य स्वरूपमभिधातव्यं १, तथा जघन्यमध्यमोत्कृष्टभेदभिन्नक्षेत्रपरिमाणविषयोऽवधिर्वक्तव्यः २, एवं संस्थानविषयः ३, अथवा 'अर्थवशाद्विभक्तिपरिणामः,' अवधिशब्दश्च द्विरावर्त्यते, ततश्चावधेर्जघन्यादिभेदभिन्नं क्षेत्रप्रमाणं वक्तव्यं २, तथा संस्थानं ३, अनु-

गमनशील आनुगामिको भवति (अवधिः) सप्रतिपक्षो वक्तव्यः, एकारान्तशब्दः प्रथमान्त एव, यथा–'कयरे आगच्छइ' इत्यादि ४, द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन् उपयोगतो लब्धितश्चावतिष्ठते इत्यवस्थितः ५, वर्द्धमानतया क्षीयमाणतया च चलोऽनवस्थितः ६, 'तीव्रमन्दावित्येकद्वारं, तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्य इति सर्वत्र द्रष्टव्यं, तत्र तीव्रो–विशुद्धः मन्दो-अविशुद्धः तीव्रमन्दस्तूभयविकलः (प्रकृतिः), ७, प्रतिपादोत्पादावित्यप्येकं, द्रव्याद्यपेक्षया एककाले प्रतिपादोत्पादौ वक्तव्यौ ८, ज्ञानदर्शनविभङ्गाः वाच्याः, किमुक्तं भवति ?, किमत्र ज्ञानं ९ ?, किं वा दर्शनं ? १०, को वा विभङ्गः ?, ११ परस्परतश्चामीषामल्पबहुत्वं चिन्त्यं, एतच्च द्वारत्रयं, कस्य देशविषयः सर्वविषयो वाऽवधिर्भवति इति वक्तव्यं १२, सम्बद्धाऽसम्बद्धसङ्ख्येयाऽसङ्ख्येयान्तरालक्षेत्रद्वारेण क्षेत्रविषयोऽवधिर्वक्तव्यः १३, 'गतिरिति चे'त्यत्र इतिशब्दो गणसंसूचको द्रष्टव्यः, 'इत्यादिबहुवचनानि गणस्य संसूचकानि भवन्ती'तिवचनात्, ततो 'गइ इंदिए' इत्यादिद्वारकलापो अवधेर्द्रष्टव्यः १४, ऋद्धिप्राप्तानुयोगश्च वक्तव्यः, अनुयोगो–अन्वाख्यानं, एवमनेन प्रकारेण एता–अनन्तरोक्ताः 'प्रतिपत्तयः' प्रतिपदनं प्रतिपत्तिः परिच्छित्तिरित्यर्थः । अवधेः प्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय इत्युच्यन्ते ॥ २८ ॥ आद्यद्वारव्याचिख्यासयेदमाह–

**नामं ठवणादविए, खित्ते काले भवे य भावे य । एसो खलु निक्खेवो, ओहिस्सा होइ सत्तविहो ॥ २९ ॥**

यस्य जीवस्याऽजीवस्य वा अवधिरिति नाम क्रियते स नाम्ना नाममात्रेणावधिर्नामावधिः, यथा लोके मर्यादाऽवधिरिति १, स्थापनावधिरक्षादिरवधिरेष इति न्यस्यमानः, अथवा अवधेरेव यदभिधानमवधिरिति तन्नामावधिः, यश्चावधेरालम्बनद्रव्यस्य [क्षेत्रस्य] स्वामिनो वा आकारविशेषः स स्थापनावधिः, अथ द्रव्यावधिरुच्यते–स द्विविधः–आगमतो नोआगमतश्च, तत्रा-

गमतोऽवधिपदार्थज्ञस्तत्र चानुपयुक्तः, नोआगमतस्त्रिविधः ज्ञशरीरद्रव्यावधिः, भव्यशरीरद्रव्यावधिः, तद्व्यतिरिक्तद्रव्यावधिश्च, तत्राद्ये प्रतीते, तृतीयस्तु साक्षात्सूत्रेणैवोपात्तः 'दविए'इति द्रव्येऽवधिः द्रव्यावधिः द्रव्यालम्बन इत्यर्थः, अथवा सूत्रे प्रथमान्तस्याप्येकारान्तता, जिनवचनस्य सर्वस्याप्यर्द्धमागधभाषात्मकत्वात्, ततो द्रव्यमेवावधिर्द्रव्यावधिः, कारणं द्रव्यमिति भावः, यद्वोत्पद्यमानस्यावधेर्यदुपकारकं शरीरादि तदवधिकारणत्वाद्द्रव्यावधिः २, क्षेत्रेऽवधिः क्षेत्रावधिः, यत्र क्षेत्रेऽवस्थितस्यावधिरुत्पद्यते यत्र वा क्षेत्रेऽवधिः प्रज्ञापकेन प्रकाश्यते यत्र वा क्षेत्रे स्वयोग्यानि द्रव्याण्यवधिः परिच्छिनत्ति स क्षेत्रस्याधारत्वेन प्राधान्यविवक्षया क्षेत्रेण व्यपदिश्यते इति क्षेत्रेऽवधिः क्षेत्रावधिरित्युच्यते, एवं यत्र प्रथमपौरुष्यादौ कालेऽवधिरुत्पद्यते यत्र वा प्रज्ञापकेन प्ररूप्यते यस्मिन् वा काले स्वयोग्यानि द्रव्याणि परिच्छिनत्ति स कालस्य प्राधान्यविवक्षया कालेन व्यपदिश्यते, कालेनावधिः कालावधिः। भवन्ति तत्कर्मवशवर्तिनः प्राणिनो अत्रेति भवः–नारकादिलक्षणः, य(त)स्मिन्भवे उत्पद्यते वर्त्तते प्रेक्षते वा योऽवधिः स भवावधिः ६, भावः क्षायोपशमिको द्रव्यपर्यायो वा तस्मिन् अवधिः भावावधिः ७, चौ समुच्चायार्थौ, एषोऽनन्तरव्यावर्णितस्वरूपः, खलुः एवार्थे, एष एव नान्यः, निक्षेपणं निक्षेपोऽवधेर्भवति सप्तविधः ॥ २९ ॥ गतमाद्यद्वारं, क्षेत्रप्रमाणं च त्रिधा–जघन्यमध्यमोत्कृष्टभेदात्, तत्र जघन्यं क्षेत्रपरिमाणमभिधित्सुराह—

जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स। ओगाहणा जहण्णा, ओहीखित्तं जहण्णं तु ॥ ३० ॥

आहारयति–आहारं गृह्णातीत्याहारकः, त्रयः समयाः समाहृतास्त्रिसमयं, त्रिसमयमाहारकस्त्रिसमयाहारकः, 'व्याप्ता'विति समासः, त्रिसमयाहारकस्य, 'सूक्ष्मस्य' सूक्ष्मनामकर्मोदयवर्त्तिनः, पनकजीवस्य (वः–) वनस्पतिविशेष (षः) तस्य, 'यावती'

यावत्परिमाणा अवगाहन्ते क्षेत्रं यस्यां स्थिता जन्तवः सा अवगाहना—तनुरित्यर्थः, जघन्या—शेषत्रिसमयाहारकसूक्ष्मपनकजीवापेक्षया सर्वस्तोका एतावत्परिमाणमेव अवधेर्जघन्यं क्षेत्रं, तुरेवार्थे, अत्रायं सम्प्रदायः—यः किल योजनसहस्रपरिमाणायामो मत्स्यः स्वशरीरस्य बहिरेकदेशे एवोत्पद्यमानः प्रथमसमये सकलनिजशरीरसम्बद्धानामात्मप्रदेशानामायामं संहृत्याङ्गुलाऽसङ्ख्येयभागबाहल्यं स्वदेहविष्कम्भप्रमाणायामविस्तारं प्रतरं करोति, तमपि द्वितीयसमये संहृत्याङ्गुलासङ्ख्येयभागविष्कम्भां [ मत्स्यदेहविष्कम्भ ] प्रमाणायामां आत्मप्रदेशानां सूचीं विरचयति, तृतीयसमये तामपि संहृत्याङ्गुलाऽसङ्ख्येयभागमात्रे स्वशरीरस्य बहिःप्रदेशे सूक्ष्मपरिणामपनकरूपतयोत्पद्यते, तस्योपपातसमयादारभ्य तृतीयसमये वर्त्तमानस्य यावत्प्रमाणं शरीरं भवति तावत्परिमाणं जघन्यमवधेरालम्बनवस्तुभाजनक्षेत्रमवसातव्यं, एतदर्थप्रतिपादिकाश्च प्रसङ्गायाताः पूर्वाचार्यविनिर्मिता आर्या दृश्य( दर्श्य )न्ते—'योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्मः पनकत्वेनेह स ग्राह्यः ॥ १ ॥ संहृत्य चाद्यसमये स ह्यायामं करोति च प्रतरम् । सङ्ख्यातीताख्याङ्गुलविभागबाहल्यमानं तु ॥ २ ॥ स्वकतनुपृथुत्वमात्रं दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥ सङ्ख्यातीताख्याङ्गुलविभागविष्कम्भमाननिर्दिष्टाम् । निजतनुपृथुत्वदैर्घ्यं तृतीयसमये तु संहृत्य ॥ ४ ॥ उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः । समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥ तावज्जघन्यमवधेरालम्बनवस्तुभाजनं क्षेत्रम् । इदमित्थमेव मुनिगणसुसम्प्रदायात्समवसेयं ॥ ६ ॥' ननु किमिति महामत्स्यः ? किं वा तस्य तृतीयसमये निजदेहदेशे समुत्पादः त्रिसमयाहारकत्वं वा कल्प्यते ?, उच्यते, स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति, नान्यः, प्रथमद्वितीयसमययोश्चातिसूक्ष्मः,

चतुर्थादिषु चातिस्थूर इति त्रिसमयाहारकग्रहणं। अन्ये तु व्याचक्षते—त्रिसमयाहारक इति, आयामविष्कम्भसंहारसमयद्वयं सूचिसंहरणोत्पादसमयश्चेत्येते त्रयः समयाः, विग्रहाऽभावाच्चाहारक एवेत्यत उत्पादसमय एव त्रिसमयाहारकः सूक्ष्मः पनकजीवो जघन्यावगाहनश्च, ततस्तत्प्रमाणं जघन्यमवधिक्षेत्रमिति, एतच्चायुक्तं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयायोगात्। त्रिसमयाहारकत्वाख्यविशेषणानुपपत्तिप्रङ्गात् ॥ ३० ॥ अथोत्कृष्टमवधिक्षेत्रमधिधातुकाम आह—

सव्वबहुअगणिजीवा, निरंतरं जत्तियं भरिज्जासु। खित्तं सव्वदिसागं, परमोही खित्त निद्दिट्ठो ॥ ३१ ॥

यत ऊर्द्ध्वमन्य एकोऽपि जीवो न कदाचनापि प्राप्यते ते सर्वबहवः, तत्र तेऽग्निजीवाश्च—सूक्ष्मबादररूपाः सर्वबह्वग्निजीवाः, ते कदा स्युरिति चेत्, उच्यते, यथा सर्वासु कर्मभूमिषु निर्व्याघातमग्निकायसमारम्भकाः सर्वबहवो मनुष्याः, ते च प्रायो अजितस्वामितीर्थकरकाले प्राप्यन्ते, यदा चोत्कृष्टपदवर्त्तिनः सूक्ष्मानलजीवाः तदा सर्वबह्वग्निजीवपरिमाणं। 'निरन्तर'-मिति क्रियाविशेषणं, यावत्परिमाणं क्षेत्रं 'भृतवन्तो' व्याप्तवन्तः किमुक्तं भवति?—नैरन्तर्येण विशिष्टसूचीरचनया यावत् व्याप्तवन्तः, भूतकालनिर्देशश्चाजितस्वामिकाल एव प्रायः सर्वबहवोऽनलजीवा अस्यामवसर्पिण्यां स्युरिति ख्यापनार्थः, इदं चानन्तरोदितविशेषणमेकदिक्कमपि भवति अत आह—सर्वदिकं, अनेन सूचीपरिभ्रमणप्रमितत्त्वं क्षेत्रस्य सूचयति, परमश्चासाववधिश्च परमावधिः, सर्वबह्वग्निजीवा निरन्तरं यावत् क्षेत्रं सूचीभ्रमणेन सर्वदिकं भृतवन्तः एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तपरमावधिः क्षेत्रमधिकृत्य निर्दिष्टो गणधरादिभिः। अयमिह सम्प्रदायः—सर्वबह्वग्निजीवा

बादराः प्रायोऽजितस्वामितीर्थंकरकाले प्राप्यन्ते तदारम्भकमनुष्यबाहुल्यसम्भवात्। सूक्ष्माश्चोत्कृष्टपदवर्त्तिनः तत्रैव वक्ष्यन्ते, ततश्च सर्वबहवोऽनलजीवा भवन्ति, तेषां च स्वबुद्ध्या षोढा अवस्थानं कल्प्यते–एकैकक्षेत्रप्रदेशे एकैकजीवाऽवगाहनया सर्वतश्चतुरस्रो घन इति प्रथमं, स एव हि घनो जीवैः स्वावगाहनाभिरिति द्वितीयं, एवं प्रतरोऽपि द्विभेदः, श्रेणिरपि द्विभेदा, तत्राद्याः पञ्च प्रकारा अनादेशाः, तेषु क्षेत्रस्याल्पीयस्तया प्राप्यमाणत्वात्, षष्ठः प्रकारस्तु सूत्रादेशः। ततश्चासौ श्रेणिः स्वावगाहनासंस्थापितसकलानलजीवावलिरूपा अवधिज्ञानिनः सर्वासु दिक्षु शरीरपर्यन्तेन भ्राम्यते, सा च भ्राम्यमाणा असङ्ख्येयान् लोकमात्रान् क्षेत्रविभागान् अलोके व्याप्नोति, एतावत् क्षेत्रमवधेरुत्कृष्टं, इदं च सामर्थ्यमात्रमुपवर्ण्यते, एतावति क्षेत्रे यदि द्रष्टव्यं भवति तर्हि पश्यति, यावताऽलोके तन्न विद्यते, अलोके रूपिद्रव्याणामसम्भवात्। रूपिद्रव्यविषयश्चावधिः, केवलमयं विशेषो–यावदद्यापि परिपूर्णमपि लोकं पश्यति तावदिह स्कन्धानेव जानाति, यदा पुनरलोकेऽवधिः प्रसरमधिरोहति तदा यथा यथा वृद्धिमासादयति तथा तथा लोके [ सूक्ष्मान् ] सूक्ष्मतरान् स्कन्धान् पश्यति, यावदन्ते परमाणुमपि ॥ ३२ ॥ जघन्यमुत्कृष्टं चावधिक्षेत्रमुक्तं, अथ मध्यमावधिक्षेत्रं गाथाचतुष्टयेनाह–

अंगुलमावलियाणं, भागमसंखिज्ज दोसु संखिज्जा। अंगुलमावलिअंतो, आवलिआ अंगुलपुहुत्तं ॥ ३२ ॥
हत्थंमि मुहुत्तंतो, दिवसंतो गाउअंमि बोद्धव्वो। जोयण दिवसपुहुत्तं, पक्खंतो पण्णवीसाओ ॥ ३३ ॥
भरहंमि अद्धमासो, जंबूदीवंमि साहिओ मासो। वासं च मणुअलोए, वासपुहुत्तं च रुयगंमि ॥ ३४ ॥
संखिज्जंमि उ काले, दीवसमुद्दावि हुंति संखिज्जा। कालंमि असंखिज्जे, दीवसमुद्दा उ भइयव्वा ॥ ३५ ॥

विषयोऽपि भावनीयः, यदा पुनः स्वयम्भूरमणे द्वीपे समुद्रे वा कस्यचित्तिरश्चोऽवधिरसङ्ख्येयकालविषयो जायते तदा तस्यैव द्वीपस्य समुद्रस्य वा एकदेशो विषयः, स्वयम्भूरमणविषयमनुष्यबाह्यावधेर्वा तदेकदेशो विषयः, क्षेत्रप्रमाणं पुनः सर्वत्रापि योजनाऽपेक्षया असङ्ख्येयमेव, तदेवं यथा क्षेत्रवृद्धौ कालवृद्धिः कालवृद्धौ च क्षेत्रवृद्धिस्तथा परिस्थूरन्यायमङ्गीकृत्य प्रतिपादितम् ॥ ३५ ॥ सम्प्रति द्रव्यक्षेत्रकालभावानां मध्ये यद्वृद्धौ यस्य वृद्धिरुपजायते यस्य च न तदभिधित्सुराह—

काले चउण्ह वुड्ढी, कालो भइयव्वु खित्तवुड्ढीए। वुड्ढीइ दव्वपज्जव,भइयव्वा खित्तकाला उ ॥ ३६ ॥

काले—अवधिगोचरे वर्द्धमाने चतुर्णां—द्रव्यक्षेत्रकालभावानां वृद्धिर्भवति। ननु काले वर्द्धमानेऽवशिष्टत्रयाणामेव द्रव्यक्षेत्रभावानां वृद्धिर्भवतीत्येतावदेव वक्तुमुचितं, कथमुच्यते काले वर्द्धमाने चतुर्णां वृद्धिर्भवतीति, उच्यते, सामान्याभिधानाददोषः, प्रथमं वर्धमानतया विशेषतः कालं निर्द्धार्य ततो वृद्धिसाम्याच्चतुर्णामपि सामान्येनाभिधानादिति भावः। अस्ति वायं न्यायः—एकस्मिन् रसनेन्द्रिये जिते पञ्चापि जितानीति। तथा क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिस्तस्यां सत्यां कालो भजनीयः, कदाचिद्वर्द्धते कदाचिन्न, क्षेत्रं ह्यत्यन्तसूक्ष्मं कालस्तु तदपेक्षया परिस्थूरस्ततो यदि प्रभूता क्षेत्रवृद्धिस्तदा कालोऽपि वर्द्धते शेषकालं नेति, द्रव्यपर्यायौ तु नियमतो वर्द्धेते, द्रव्यं च पर्यायश्च द्रव्यपर्यायौ तयोर्वृद्धौ सत्यां, सूत्रे विभक्तिलोपः प्राकृतत्वात्, भजनीयावेव क्षेत्रकालौ, तुरेवार्थे भिन्नक्रमश्च, तथैव योजितः, भजना चैवं—कदाचित्तयोर्वृद्धिर्भवति कदाचिन्न, यतो द्रव्यं क्षेत्रादपि सूक्ष्मं, एकस्मिन्नपि नभःप्रदेशे अनन्तस्कन्धावगाहनात्, द्रव्यादपि पर्यायः सूक्ष्मः, एकस्मिन्नपि द्रव्ये अनन्तपर्यायसम्भवात्, ततो द्रव्यपर्यायवृद्धौ क्षेत्रकालौ भजनीयौ एव, द्रव्ये च वर्द्धमाने पर्याया नियमतो वर्द्धन्ते, प्रतिद्रव्यं सङ्ख्येयानाम-

सङ्ख्येयानां वा पर्यायाणां परिच्छेदसम्भवात्, पर्याये तु वर्द्धमाने द्रव्यं भाज्यं, एकस्मिन्नपि द्रव्ये पर्यायविषयावधि[वृद्ध्य]वृद्धिसम्भवात्। ननु जघन्यमध्यमोत्कृष्टभेदभिन्नयोरवधिसम्बन्धिनोः क्षेत्रकालयोरङ्गुलावलिकासङ्ख्येयभागादिरूपयोः परस्परं प्रदेशसमयसङ्ख्यया तुल्यत्वमुत हीनाधिकत्वं?, उच्यते, हीनाधिकत्वं, तथाहि–आवलिकाया असङ्ख्येये भागे जघन्यावधिविषये यावन्तः समयास्तदपेक्षयाङ्गुलस्याऽसङ्ख्येयभागे जघन्यावधिविषये एव ये नभःप्रदेशास्त असङ्ख्येयगुणाः, एवं सर्वत्राप्यवधिविषयात् कालादसङ्ख्येयगुणत्वमवधिविषयस्य क्षेत्रस्यावगन्तव्यं ॥ ३६ ॥ कालादसङ्ख्येयगुणता कथमवसीयते?, उच्यते, सूत्रप्रामाण्यात्, तदेव सूत्रमुपदर्शयति–

सुहुमो य होई कालो, तत्तो सुहुमयरं हवइ खित्तं। अंगुलसेढीमित्ते, ओसप्पिणीओ असंखेज्जा ॥ ३७ ॥

'सूक्ष्मश्च' श्लक्ष्णश्च भवति कालः, चशब्दो वाक्यभेदक्रमोपदर्शनार्थः, यथा सूक्ष्मस्तावत्कालो भवति, यस्मादुत्पलपत्रशतभेदे प्रतिपत्रमसङ्ख्येयाः समयाः प्रतिपाद्यन्ते, ततः सूक्ष्मः कालः, तस्मादपि कालात्सूक्ष्मतरं क्षेत्रं भवति, यस्मादङ्गुलश्रेणिमात्रे क्षेत्रे–प्रमाणाङ्गुलैकमात्रे श्रेणिरूपे नभःखण्डे प्रतिप्रदेशं समयगणनया [असङ्ख्येया] अवसर्पिण्यस्तीर्थकृद्भिराख्याताः, इदमुक्तं भवति–प्रमाणाङ्गुलैकमात्रे एकैकप्रदेशश्रेणिरूपे नभःखण्डे यावन्तो असङ्ख्येयास्ववसर्पिणीषु समयास्तावत्प्रमाणाः प्रदेशा वर्त्तन्ते, ततः सर्वत्रापि कालादसङ्ख्येयगुणं क्षेत्रं, क्षेत्रादपि चानन्तगुणं द्रव्यं, द्रव्यादपि चावधिविषयः पर्यायः सङ्ख्येयगुणो असङ्ख्येयगुणो वा ॥ ३७ ॥ उक्तमवधेर्जघन्यादिभेदभिन्नं क्षेत्रपरिमाणं, क्षेत्रं चावधिगोचरद्रव्याधारद्वारेणावधेर्व्यपदिश्यते, ततः क्षेत्रस्य द्रव्यावधिकत्वात्तदभिधानान्तरमवधिपरिच्छेदयोग्यं द्रव्यमभिधातव्यं, अवधिश्च त्रिधा–जघन्यादिभेदात्,

तत्र जघन्यावधिपरिच्छेदयोग्यं द्रव्यमभिधित्सुराह—

तेआभासादव्वाण, अंतरा इत्थ लहइ पट्ठवओ। गुरुलहुअअगुरुलहुअं, तंपि अ तेणेव निट्ठाइ ॥ ३८ ॥

तैजसं च भाषा च, तयोर्द्रव्याणि तैजसभाषाद्रव्याणि, तेषां तैजसभाषाद्रव्याणामन्तरादित्यर्थवशाद्विभक्तिपरिणामः, अन्तरे, अथवा अंतरे इति पाठान्तरमेव, एतदुक्तं भवति तैजसभाषाद्रव्याणामपान्तराले, 'अत्र' एतस्मिन्नुभयायोग्ये द्रव्यसमूहे तैजसभाषाभ्यामन्यदेव द्रव्यं 'लभते' पश्यति, कः? 'प्रस्थापकः' प्रस्थापको नाम तत्प्रथमतया अवधिप्रारम्भकः, किंविशिष्टं तदित्याह–'गुरुलघ्वगुरुलघु' गुरु च लघु च गुरुलघु तथा न गुरुलघु अगुरुलघु, तत्र यत्तैजसद्रव्यासन्नं तद्गुरुलघुपर्यायो-[पेतं], यच्च भाषाद्रव्यासन्नं तदगुरुलघुपर्यायोपेतं, तदपि चावधिज्ञानं प्रच्यवमानं सत्पुनस्तेनैव द्रव्येणोपलब्धेन सता निष्ठां याति, प्रच्यवत इति भावः। 'तदपि चे' त्यत्र अपिशब्दो यत्प्रतिपाति तत्रायं नियमो न पुनरवधिज्ञानं प्रतिपात्येव भवतीति-सन्दर्शनार्थः, च एवार्थः, अवधिरेवैवं प्रच्यवते न शेषज्ञानानीति ॥ ३९ ॥ कियत्प्रदेशं तत् द्रव्यं यत्तैजसभाषाद्रव्याणाम-पान्तरालवर्त्ति जघन्यावधिप्रमेयमित्याशङ्का, तत्किल परमाण्वादिक्रमोपचयादौदारिकादिवर्गणानुक्रमतः प्रतिपादयितुं शक्यं, अतस्तत्स्वरूपं प्रतिपिपादयिषुर्गाथाद्वयमाह—

ओरालविउव्वाहारतेअभासाणपाणमणकम्मे। अह दव्ववग्गणाणं, कमो विवज्जासओ खित्ते ॥ ३९ ॥

कम्मोवरिं धुवेयरसुण्णेयरवग्गणा अणंताओ। चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥ ४० ॥

औदारिकग्रहणादौदारिकशरीरग्रहणप्रायोग्या वर्गणाः परिगृहीताः। इह वर्गणाः सामान्यतश्चतुर्धा द्रव्यादिभेदात्,

जघन्यावधे-
योग्यं द्रव्यं
गा. ३८
वर्गणाः
गा. ३९-४०

॥ ६२ ॥

औदारि-काद्या वर्गणाः

तत्र द्रव्यत एकपरमाण्वादीनां यावदनन्तपरमाणूनां क्षेत्रत एकप्रदेशावगाढानां यावदसङ्ख्यप्रदेशानां कालत एकसमयस्थितीनां सर्वेषां परमाणूनां स्कन्धानां चैका वर्गणा द्विसमयस्थितीनां सर्वेषां द्वितीया वर्गणा त्रिसमयस्थितीनां तृतीया एवमेकैकसमयवृद्ध्या सङ्ख्येयसमयस्थितीनां परमाण्वादीनां सङ्ख्येया वर्गणा असङ्ख्येयसमयस्थितीनामसङ्ख्येयवर्गणाः, भावत एकगुणकृष्णवर्णानां परमाणूनां स्कन्धानां च सर्वेषां एका वर्गणा द्विगुणकृष्णानां द्वितीया एवमेकैकगुणवृद्ध्या सङ्ख्येयाः अङ्ख्येयगुणकृष्णवर्णानामसङ्ख्येया अनन्तगुणकृष्णानामनन्ता वर्गणाः, एवं नीललोहितहारिद्रशुक्लवर्णेषु सुरभीतरयोर्गन्धयोः तिक्तकटुकषायाम्लमधुरेषु रसेषु कर्कशमृदुगुरुलघुशीतोष्णस्निग्धरूक्षेषु स्पर्शेष्वष्टसु सर्वसङ्ख्यया २० स्थानेषु प्रत्येकमेकादिसङ्ख्येयगुणानां सङ्ख्येयाः असङ्ख्येयगुणानां असङ्ख्येयाः अनन्तगुणानामनन्ता वर्गणा वाच्याः, तथा लघुगुरुपर्यायाणां बादरपरिणामान्वितवस्तूनामेका वर्गणा, अगुरुलघुपर्यायाणां तु सूक्ष्मपरिणामपरिणतवस्तूनामेका वर्गणा, एते द्वे भवतः। प्रकृतोपयोगः प्रदर्श्यते, तत्र समस्तलोकाकाशप्रदेशवर्त्तिनामेकाकिपरमाणूनां समुदाय एका वर्गणा, समस्तलोकवर्त्तिनां द्विप्रदेशिकस्कन्धानां द्वितीया, एवं त्रिप्रदेशिकानां तृतीया, एवमेकोत्तरया वृद्ध्या तावन्नेयं यावत्सङ्ख्येयप्रदेशिकस्कन्धानां सङ्ख्येयाः, असङ्ख्येयप्रदेशिकानामसङ्ख्येयाः, अनन्तप्रदेशिकस्कन्धानामनन्ताः खल्वग्रहणयोग्या वर्गणा विलङ्घ्य विशिष्टपरिणामयुक्ता औदारिकशरीरग्रहणप्रायोग्या वर्गणा अनन्ता एव भवन्ति, तत एकोत्तरप्रदेशवृद्ध्या वर्धमानाः प्रचुरद्रव्यत्वात्सूक्ष्मतरपरिणामत्वाच्चौदारिकस्याग्रहणप्रायोग्या अनन्ता वर्गणाः, ताश्च स्वल्पपरमाणुनिष्पन्नत्वाद्बादरपरिणामयुक्तत्वाच्च वैक्रियस्याप्यग्रहणप्रायोग्याः; पुनः प्रदेशवृद्ध्या [स्वल्पद्रव्यनिष्पन्नत्वाद् बादरपरिणामत्वाच्च वैक्रियशरीरस्याग्रहणप्रायोग्याः] अनन्ता वर्गणाः, ताश्च

प्रचुरद्रव्यनिष्पन्नत्वात्सूक्ष्मपरिणामत्वाच्चौदारिकस्याप्यग्रहणप्रायोग्याः, परं वैक्रियवर्गणाप्रत्यसन्नतया तदाभासत्वाद्वैक्रियशरीराग्रहणप्रायोग्या इति व्यपदिष्टाः, तदनन्तरमेकोत्तरवृद्ध्या वर्द्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात्तथाविधसूक्ष्मपरिणामत्वाच्च वैक्रियशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति, तत ऊर्द्ध्वमेकोत्तरवृद्ध्या प्रवर्द्धमानाः प्रचुरद्रव्यारब्धत्वात्सूक्ष्मतरपरिणामत्वाच्च वैक्रियस्याऽग्रहणप्रायोग्याः अनन्ताः वर्गणाः, तासां चोपर्येकोत्तरवृद्ध्या प्रवर्द्धमानाः स्वल्पद्रव्यनिष्पन्नत्वाद्बादरपरिणामत्वाच्चाहारकशरीरस्याग्रहणप्रायोग्या अनन्ता वर्गणाः । तदनन्तरमेकोत्तरवृद्ध्या वर्द्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात्तथाविधसूक्ष्मपरिणामपरिणतत्वाच्चाहारकशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणाः, ततोऽप्येकोत्तरवृद्ध्या वर्द्धमाना बहु[तम]द्रव्यनिष्पन्नत्वादतिसूक्ष्मपरिणामत्वाच्चाहारकशरीरस्याग्रहणप्रायोग्या अनन्ता वर्गणाः । एवं तेजसस्य ४ भाषायाः ५ आनप्राणयोः ६ मनसः ७ कर्मण ८ श्च यथो[त्तरमेको]त्तरवृद्ध्युपेतानां प्रत्येकमनन्तानामयोग्यानां पुनर्योग्यानां पुनरयोग्यानां वर्गणानां पृथक् त्रयं त्रयं वक्तव्यं ॥ कथं पुनरेकैकस्यौदारिकादेः त्रयं [त्रयं] गम्यते ? उच्यते, तैजसभाषाद्रव्यापान्तरालवर्त्युभयायोग्यद्रव्यावधिगोचराभिधानात् । अथायं द्रव्यवर्गणानां क्रमः—परिपाटी, इह स्वजातीयवस्तुसमुदायो वर्गणा वर्गः समूहो राशिरिति पर्यायाः । तथा 'विपर्यासतो' विपर्यासेन 'क्षेत्रे' क्षेत्रविषयो वर्गणाक्रमो वेदितव्यः, तद्यथा—परमाणूनां द्व्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां चैकैकाशप्रदेशावगाहिनां सर्वेषामेका वर्गणा, द्व्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां द्विप्रदेशावगाहिनां द्वितीया वर्गणा, त्र्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां त्रिप्रदेशावगाहिनां तृतीया वर्गणा, एवमेकैकाकाशप्रदेशवृद्ध्या सङ्ख्येयप्रदेशावगाहिनां स्कन्धानां सङ्ख्येया वर्गणाः, असङ्ख्येयप्रदेशावगाहिनां स्कन्धानामसङ्ख्येयाः, ताश्चैकैकाकाश-

प्रदेशवृद्ध्या वर्द्धमानाः खल्वसङ्ख्येया वर्गणा विलङ्घ्य कर्मणः प्रायोग्या असङ्ख्येया वर्गणा भवन्ति, ततो अनन्तरमल्पपरमाणुनिष्पन्नत्वाद्बादरपरिणामत्वेन बह्वाकाशप्रदेशावगाहित्वाच्च तस्यैव कर्मणोऽग्रहणप्रायोग्या एकैकाशप्रदेशवृद्ध्या असङ्ख्येया वर्गणाः १, एवमेकैकाकाशप्रदेशवृद्ध्या वर्द्धमाना मनसोऽप्यसङ्ख्येया अग्रहणवर्गणाः, पुनरेतावत्य एव तस्य ग्रहणवर्गणाः, पुनरेतावत्प्रमाणा एव तस्यैवाग्रहणप्रायोग्या वर्गणाः २, एवमानप्राणयोः ३ भाषायाः ४ तैजसस्य ५ आहारकस्य ६ वैक्रियस्य ७ औदारिकस्य ८ चायोग्ययोग्यायोग्यवर्गणानां प्रतिलोमं क्षेत्रतोऽपि प्रत्येकं त्रयं त्रयं आयोज्यं, "परं परं सूक्ष्मं। प्रदेशतोऽसङ्ख्येयगुण"मिति (तत्त्वार्थ. २ अ. सू. ३८-३९) वचनात् ॥ अनन्तरगाथायां कर्मद्रव्यवर्गणाः प्रतिपादिताः, सम्प्रति प्रदेशोत्तरवृद्ध्या तदग्रहणप्रायोग्याः प्रदर्श्यन्ते-क्रियते मिथ्यात्वादिसचिवैर्जीवैर्निर्वर्त्यते इति कर्म्म कर्म्मण उपरि कर्मोपरि, 'नाम नाम्नैकार्थ्ये [समासो बहुल'मिति] समासः, कर्माग्रहणप्रायोग्यवर्गणानामुपरीति भावः, 'धुवे'ति ध्रुववर्गणा अनन्ताः, तद्यथा-कर्म्माग्रहणप्रायोग्यवर्गणानामुपरि एकाधिकपरमाणूपचितातिसूक्ष्मपरिणामानन्तपरमाण्वात्मिका प्रथमा ध्रुववर्गणा भवति, एकोत्तरवृद्ध्या वर्द्धमाना एता अपि ध्रुववर्गणा अनन्ता वेदितव्याः, ध्रुवा इति नित्याः लोकव्यापितया सर्वकालावस्थायिन्य इति भावः। अन्तर्दीपकं चेदं, एतासां ध्रुवत्वभणनेन प्रागुक्ता अपि कर्मवर्गणान्ताः सर्वा एव वर्गणा ध्रुवा इत्यवगन्तव्यं, तासामपि सर्वत्र लोके सदा अव्यवच्छेदात्, अन्यच्च-एता ध्रुववर्गणा वक्ष्यमाणाश्चाध्रुवाद्याः सर्वा अपि ग्रहणाप्रायोग्यवर्गणा अतिबहुद्रव्योपचितत्वेनाऽतिसूक्ष्मपरिणामत्वेन च सर्वजीवैरौदारिकादिभावेनाग्रहणात्, तदनन्तरमित्थमेवैकोत्तरवृद्ध्या वर्धमाना ध्रुववर्गणाभ्य इतरा अध्रुववर्गणा अनन्ता भवन्ति, एताश्च तथाविधपुद्गलपरिणामवैचित्र्यात्कदाचिल्लोके न भवन्त्यपि, तत

एता अध्रुवा—अशाश्वत्यः कदाचिन्न सन्तीत्यर्थः । तथा'सुन्ना' इति 'सूचनात्सूत्रं' [ इतिन्यायात् शून्यान्तरवर्गणाः परिगृह्यन्ते ] एकोत्तरवृद्ध्या कदाचिच्छून्यानि—व्यवहितान्यन्तराणि यासां ताः शून्यान्तराः, ताश्च ता वर्गणाश्च शून्यान्तरवर्गणाः । एता एकोत्तरवृद्ध्या निरन्तरमनन्ताः सदैव प्राप्यन्ते, परं कदाचिदेतास्वेकोत्तरवृद्धिरन्तरान्तरा त्रुट्यति, । एताः शून्यान्तरवर्गणा अप्यनन्ताः, इतरग्रहणादशून्यान्तरवर्गणाः, एताः एकोत्तरवृद्ध्या निरन्तरमनन्ताः सदैव प्राप्यन्ते, न पुनरेकोत्तरवृद्धिहानिरपान्तराले, तत एता अशून्यान्तराः प्रदेशोत्तरवृद्ध्या अनन्ताः, अशून्यान्तरवर्गणानामुपरि ध्रुवानन्तराणि चत्वारि वर्गणाद्रव्याणि भवन्ति, ध्रुवाणि च सर्वकालभावित्वादनन्तराणि च निरन्तरैकोत्तरवृद्धिभाक्त्वात् ध्रुवानन्तराणि, किमुक्तं भवति ?—आद्या ध्रुवानन्तरवर्गणाः प्रथमतोऽनन्ता भवन्ति, तदनतरमेतावत्यो द्वितीयाः, ततस्तृतीयाः ततश्चतुर्थ्यो वाच्याः, ध्रुववर्गणाः प्रागप्युक्ताः परं ताभ्य एता भिन्ना एव, न पुनस्तास्वन्तर्भवन्ति, अतिसूक्ष्मपरिणामत्वाद्बहुद्रव्योपचितत्वाच्च, एतासां चतसृणामपि ध्रुववर्गणानां प्रत्येकमपान्तराले एकोत्तरवृद्धिहानिरवसातव्या, अन्यथा निरन्तरमेकोत्तरवृद्धिसम्भवे चातुर्विध्यासम्भवात् । अन्यद्वा किञ्चिद्वर्णादिवैचित्र्यं कारणं, तद्बहुश्रुता एव विदन्ति । एवं तनुवर्गणानामपि भावनीयं, चतसृणां ध्रुववर्गणानामुपरि प्रत्येकमेकोत्तरवृद्धियुक्तानन्तवर्गणात्मिकाश्चतस्रस्तनुवर्गणाश्च भवन्ति, तनूनाम्—औदारिकादिशरीराणां भेदाभेदपरिणामाभ्यां योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः, भेदाभेदपरिणामाभ्यामिति कोऽर्थः यावद्भिः किल पुद्गलैस्तनुवर्गणास्कन्धा निष्पद्यन्ते तेभ्यो यदि केचित्पुद्गला विभिद्य पृथग्भवन्ति अन्ये त्वागन्तुकाः समानगत्या भेदेन परिणमन्ती त्याभ्यां भेदाभेदपरिणामाभ्यामेतास्तनुवर्गणा औदारिकादियोग्यबादरपरिणामाभिमुखा भवन्तीत्यर्थः । अथवा वक्ष्य-

शून्यान्त-
रादि-
वर्गणाः

उत्कृष्टाचित्तस्कन्धयोर्नानात्वम्

माणमिश्रस्कन्धाचित्तस्कन्धद्वयस्य तनुर्देहः शरीरं मूर्त्तिरिति यावत्, तद्योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः। तदनन्तरं मिश्रस्कन्धो भवति, सूक्ष्म एव सन् ईषद्बादरपरिणामाभिमुखः सूक्ष्मत्वबादरत्वपरिणाममिश्रणान्मिश्रः स्कन्धः। तथेत्यानन्तर्ये अचित्त इति 'पदैकदेशे पदसमुदायोपचारात्' अचित्तमहास्कन्धः, स च विश्रसापरिणामविचित्र्यात् केवलिसमुद्घातगत्या चतुर्भिः समयैः सकललोकमापूरयति, संहरणमपि चतुर्भिरेव, [आह–] अचित्तत्वाव्यभिचारादचित्तविशेषणमनर्थकमिति, न, केवलिसमुद्घातसचित्तकर्मपुद्गललोकव्यापिमहास्कन्धव्यवच्छेदपरतया विशेषणस्य सार्थकत्वात्, एष एवाचित्तमहास्कन्धः सर्वोत्कृष्टप्रदेशस्कन्ध इति केचिद्व्याचक्षते तदसम्यक्, यतः प्रज्ञापनायां अवगाहनास्थितिभ्यामसङ्ख्येयभागहीनादिभेदाच्चतुःस्थानपतिता उक्ताः उत्कृष्टपुद्गल(प्रदेश)निर्वृत्ताः स्कन्धाः। अमी पुनरचित्तमहास्कन्धाः कालभेदेन बहवोऽपि जायमाना अवगाहनास्थितिभ्यां तुल्या एव यतस्तेषां स्थितिरष्टसामयिकी अवगाहना च लोकव्यापिलक्षणा, किञ्च प्रज्ञापनायामुत्कृष्टप्रादेशिकः स्कन्धो अष्टस्पर्शः उच्यते, अचित्तमहास्कन्धस्तु सूक्ष्मपरिणामत्वाच्चतुःस्पर्श एव, तस्मात्प्रज्ञापनोक्तस्थित्यादिवैषम्यभावा अष्टस्पर्शाश्चान्येऽप्युत्कृष्टप्रदेशिकाः स्कन्धाः सन्तीति नियमतः प्रतिपत्तव्यं। इह प्राक् तैजसभाषाद्रव्याणामपान्तराले गुरुलघ्वगुरुलघु च जघन्यावधिप्रमेयं द्रव्यमुक्तं, जघन्यावधिश्च द्विधा–गुरुलघुद्रव्यारब्धोऽगुरुलघुद्रव्यारब्धश्च, तत्र गुरुलघुद्रव्यारब्धः कोऽपि तान्येव तैजसप्रत्यासन्नानि गुरुलघुद्रव्याणि दृष्ट्वा विध्वंसमापद्यते, यस्तु विशुद्धिमासादयन् प्रवर्द्धते सोऽधस्तनानि तान्येव गुरुलघून्यौदारिकादिद्रव्याणि दृष्ट्वा ततोऽधिकतरां विशुद्धिमासादयन् क्रमेणैवागुरुलघूनि भाषादिद्रव्याणि पश्यति, अगुरुलघुद्रव्यसमारब्धोऽपि कश्चिदूर्ध्वं हि वर्द्धमान इतराण्यपि तत्कालं गुरुलघून्यौदा-

रिकादीनि पश्यति ॥ ४० ॥ तत्र किं गुरुलघु किं वा अगुरुलघु इति शङ्कायां तत्स्वरूपप्रतिपादनार्थमाह—

ओरालिअवेउव्विअआहारगतेअ गुरुलहू दव्वा । कम्मगमणभासाई, एमाइ अगुरुलहुआई ॥ ४१ ॥

औदारिकवैक्रियाहारकतैजसद्रव्याणि अपराण्यपि तैजसद्रव्यप्रत्यासन्नानि तदाभासानि बादररूपत्वाद् 'गुरुलघुनि' गुरुलघुस्वभावानि, कार्मणमनोभाषाद्रव्याणि तु आदिशब्दात्प्राणापानद्रव्याणि भाषाद्रव्यार्वाग्वर्त्तीनि भाषाभासानि अपराण्यपि च परमाणुकादीनि व्योमादीनि च एतानि 'अगुरुलघुनि' अगुरुलघुस्वभावानि । अथ भावार्थ उच्यते—इह व्यवहारश्चतुर्द्धा द्रव्यमिच्छति तद्यथा—अधोगमनस्वभावं गुरुकं लेष्ट्वादिवत्, ऊर्द्धगतिस्वभावं लघुकं प्रदीपशिखावत्, तिरश्चीनशीलं गुरुलघु वाय्वादिवत्, निश्चलस्वभावं त्वगुरुलघु व्योमादिवत्, उक्तं च—'गुरुअं १ लहुअं २ उभयं ३ नोभय ४ मिति वावहारिअनयस्स । दव्वं लेट्ठुं १ दीवो २ वाऊ ३ वोमं ४ जहासंखं १ ॥' (वि. ६५९) निश्चयस्तु मन्यते—नायमेकान्तो अधोगमनस्वभावं गुर्वेव भवतीति लघुनाप्यधोगतिपरिणतेनाणुना व्यभिचारात्, नाप्यूर्द्धगतिस्वभावं लघ्वेव एरण्डादिफलानां मुक्तानां चोर्द्धगत्या व्यभिचारात्, तस्मादिह निश्चयनयमाश्रित्यौदारिकादीनि तैजसान्तानि बादरपरिणामत्वाद्गुरुलघुत्वेनोक्तानि । कार्मणद्रव्यादीनि तु सूक्ष्मपरिणामत्वादगुरुलघुत्वेनेति ॥ ४१ ॥ वक्ष्यमाणगाथाद्वयसम्बन्धः एवं—पूर्वं किल क्षेत्रकालयोरवधिसम्बन्धिनोः केवलयोरङ्गुलावलिकासङ्ख्येयादिविभागकल्पनया परस्परोपनिबन्ध उक्तः, सम्प्रति तयोरेवोक्तलक्षणेन द्रव्येण सह परस्परोपनिबन्ध उपदर्श्यते—

संखिज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो । संखिज्ज कम्मदव्वे, लोए थोवूणगं पलियं ॥ ४२ ॥

तेआकम्मसरीरे, तेआदव्वे अ भासदव्वे अ। बोद्धव्वमसंखिज्जा, दीवसमुद्दा य कालो अ ॥ ४३ ॥

मनोवर्गणागतं मनःपरिणामयोग्यं मनोद्रव्यं तस्मिन्–मनोद्रव्यविषयेऽवधौ सङ्ख्येयतमो भागो लोकपल्योपमयोर्विषयत्वेन बोद्धव्यः, सूत्रे चैकत्वं समाहारद्वन्दविवक्षणात्, किमुक्तं भवति ?–मनोवर्गणागतं द्रव्यं पश्यन्नवधिः क्षेत्रतो लोकस्य सङ्ख्याततमं भागं कालतस्तु पल्योपमस्य सङ्ख्याततमं भागं पश्यति, तथा कर्मवर्गणागतं कर्मपरिणामयोग्यं कर्मद्रव्यं तद्विषयेऽवधौ सङ्ख्येया लोकपल्योपमयोर्भागा विषयत्वेन विज्ञेयाः, इदमुक्तं भवति कर्मवर्गणाद्रव्यं पश्यन्नवधिः लोकपल्योपमयोः पृथक् पृथक् सङ्ख्येयान् भागान् पश्यति। तथा लोके–चतुर्दशरज्ज्वात्मकलोकविषये कालतः स्तोकोनं पल्योपमं विषयतया ज्ञेयं, इदमत्र हृदयं–क्षेत्रतः समस्तलोकं पश्यन्कालतः स्तोकोनं पल्योपमं पश्यतीति, ननु द्रव्येण सह क्षेत्रकालयोरुपनिबन्धे प्रस्तुते केवल[योरुप]निबन्धप्ररूपणमसमीचीनं, नैष दोषः, द्रव्योपनिबन्धस्यात्रापि सामर्थ्यप्रापितत्वात्, तथाहि–पूर्वं 'काले चउण्ह वुड्ढी' इत्युक्तं, कालवृद्धिश्चात्रानन्तरोक्तकर्मद्रव्यदर्शकापेक्षया प्रतिपादिता, ततोऽस्य समस्तलोकस्तोकोनपल्योपमदर्शिनः सामर्थ्यात्कर्मद्रव्योपरि यत्किमपि ध्रुववर्गणादि तद्विषयत्वेन द्रष्टव्यं, अत एव तदुपर्युपरि द्रव्याणि पश्यतः क्षेत्रकालवृद्धिक्रमेण परमावधिसम्भवोऽप्यनुमेयः ॥ ४२ ॥ शरीरशब्दः प्रत्येकं योज्यः, तैजसशरीरे कार्मणशरीरे च–एतद्विषये अवधौ, तथा तैजसवर्गणाद्रव्यविषये भाषावर्गणाद्रव्यविषये चावधौ क्षेत्रतः प्रत्येकमसङ्ख्येया द्वीपसमुद्राः कालश्चासङ्ख्येयः–पल्योपमासङ्ख्येयभागरूपो विषयत्वेनावसातव्यः, इह यद्यप्यविशेषेणोक्तं तथापि तैजसशरीरात्कार्मणशरीरस्य सूक्ष्मत्वात्तद्दर्शिन इदमेव द्वीपसमुद्रकालासङ्ख्येयत्वं बृहद्द्रष्टव्यं, कार्मणशरीरादप्यबद्धानां तैजसवर्गणाद्रव्याणां सूक्ष्मत्वाद्बृहत्तरं, तेभ्योऽपि भाषा-

द्रव्याणां, ननु पूर्वं कर्मद्रव्यदर्शिनः प्रत्येकं लोकपल्योपमभागाः सङ्ख्येया विषयत्वेनोक्ताः, अत्र तु कार्मणशरीरद्रव्य-दर्शिनः किमतिस्तोकावेव क्षेत्रकालौ विषयत्वेनाभिहिताविति, उच्यते—पूर्वं कर्मद्रव्याणि कर्मवर्गणागतानि जीवेन शरीरतया अबद्धान्युक्तानि, अत्र शरीरतया बद्धानि, बद्धानि चाऽबद्धेभ्यो बादराणि भवन्ति, अव्यूततन्तुभ्यो व्यूततन्तुषु तथा-दर्शनात्, ततः कार्मणशरीरदर्शिनः स्तोकौ क्षेत्रकालावुक्ताविति, अपरस्त्वाह—[ननु यदि] तैजसद्रव्याणि पश्यतोऽसङ्ख्येया द्वीपसमुद्राः कालश्चासङ्ख्येयो विषयः, तर्हि यत्प्रागुक्तं—तैजसभाषापान्तरालद्रव्यदर्शिनोऽङ्गुलावलिकासङ्ख्येयभागादि क्षेत्रकाल-प्रमाणं तद्विरुध्यते, नैष दोषः, इह विचित्रा वस्तुशक्तयः, ततो अपान्तरालद्रव्याणि प्रारम्भकस्यावधेर्विषयः, तैजसानि त्वसङ्ख्येयद्वीपसमुद्रासङ्ख्येयकालविषयस्येति न कश्चिद्दोषः, यदिवा अल्पद्रव्याण्यधिकृत्याङ्गुलावलिकाऽसङ्ख्येयभागादिक्षेत्र-प्रमाणमुक्तं, इदं तु प्रचुरतैजसद्रव्याण्यधिकृत्येत्यविरोधः ॥ ४३ ॥ ननु जघन्यावधिप्रमेयं प्रतिपादयता गुरुलघु अगुरुलघु च पश्यतीत्युक्तं, न सर्वमेव, विमध्यमावधिप्रमेयमपि चाङ्गुलावलिकासङ्ख्येयभागाद्यभिधानान्न सर्वद्रव्यरूपं, तत्रस्थानामेव दर्शनात्, तत उत्कृष्टावधेरपि किमसर्वं सर्वं वा द्रव्यमालम्बनमिति संशयः, तदपनोदार्थमाह—

एगपएसोगाढं, परमोही लहइ कम्मगसरीरं। लहइ य अगुरुयलघुअं तेयसरीरे भवपुहुत्तं ॥ ४४ ॥

प्रकृष्टो देशः प्रदेशः एकश्चासौ प्रदेशश्च तस्मिन्नवगाढं—व्यवस्थितं एकप्रदेशावगाढं—परमाणुद्व्यणुकादिद्रव्यं परमा-वधिरुत्कृष्टावधिर्लभते पश्यति, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तं, तथा कार्मणशरीरं च लभते। ननु परमाणु-द्व्यणुकादिद्रव्यमनुक्तं कथं गम्यते, तदालम्बनत्वेनेति, ततश्चोपात्तमेव कार्मणमिदं भविष्यति, तन्न, जीवप्रदेशानुसारितया

सङ्ख्यातीतप्रदेशावगाहित्वेनाऽस्यैकप्रदेशावगाहित्वानुपपत्तेः, तथा लभते च अगुरुलघु चाद् [ गुरु ] लघु च जात्यपेक्षया सर्वत्रैक-वचनं, ततश्च सर्वाण्यप्येकप्रदेशावगाढानि कार्मणशरीराणि अगुरु[लघूनि गुरु]लघूनि च द्रव्याण्यसौ पश्यतीति प्रतिपत्तव्यं, तथा तैजसाङ्गविषयेऽवधौ कालतो भवपृथक्त्वं पश्यति, य एव प्राक् तैजसं पश्यतोऽसङ्ख्येयः काल उक्तः स एव भवपृथक्त्वेन विशेष्यते, देवगत्यादिगमनादत्राप्यऽसङ्ख्येयो ज्ञेयः, एतदयुक्तं—यः सूक्ष्मं परमाण्वादि पश्यति तेन वादरं कार्मणशरीरादिकम-वश्यं द्रष्टव्यं, यो वादरं पश्यति तेन सूक्ष्ममप्यवश्यं ज्ञातव्यमिति न कोऽपि नियमः, यतः—'तेआभासादव्वाणं' इत्यादिवचनात् प्रथमोत्पत्तावगुरुलघुद्रव्यं पश्यन्नवधिर्न गुरुलघूपलभते, अन्यद्वा अतिस्थूरमपि घटादिकं न लभते, तथा मनःपर्यायःज्ञानी मनोद्रव्याणि सूक्ष्माण्यपि पश्यति, चिन्तनीयं तु घटादिकं स्थूलमपि न पश्यति, तत एवं विज्ञान[विषय]वैचित्र्यसम्भवे सति संशयव्यवच्छेदार्थं एकप्रदेशावगाढग्रहणे सत्यपि शेषविशेषणोपादानमदुष्टमेव । तदेवं परमावधेर्द्रव्यरूपो विषय उक्तः, अधुना क्षेत्रकालौ तद्विषयतया प्रतिपिपादयिषुराह—

परमोहि असंखिज्जा, लोगमित्ता समा असंखिज्जा । रूवगयं लहइ सव्वं, खित्तोवमिअं अगणिजीवा ॥४५॥

परमावधिः क्षेत्रतो असङ्ख्येयानि लोकमात्राणि, खण्डानि इति गम्यते, लभते, कालतस्तु समा—उत्सर्प्पिण्यवसर्पिणीर-सङ्ख्येया एव लभते, तथा द्रव्यतो रूपगतं—मूर्त्तद्रव्यजातं 'लभते' पश्यति सर्वं, भावतस्तु प्रतिद्रव्यं सङ्ख्येयानऽसङ्ख्येयान् वा पर्यायानिति । यदुक्तमसङ्ख्येयानि लोकमात्राणि खण्डानि परमावधिः पश्यतीति, तदसङ्ख्येयकमूनमधिकं च कोऽपि सङ्कल्प-येदतो नियमतः परिमाणप्रतिपादनार्थमाह—उपमीयते अनेनेत्युपमितं, क्षेत्रस्योपमितं क्षेत्रोपमितं क्षेत्रप्रमाणकारिणः प्रागभिहिता

एवाग्निजीवाः, इदमुक्तं भवति–उत्कृष्टावधेर्विषयत्वेन क्षेत्रतो येऽसङ्ख्येया लोकाः प्रोक्ताः, ते प्रागभिहितस्वावगाहनाव्यवस्थापितोत्कृष्टासङ्ख्यसूक्ष्मबादराग्निजीवसूच्या परमावधिमतो जीवस्य सर्वतो भ्राम्यमाणया यत्प्रमाणं क्षेत्रं व्याप्यते तत्प्रमाणा विज्ञेयाः । परमावधिकलितश्च नियमादन्तर्मुहूर्त्तमात्रेण केवलालोकलक्ष्मीं समासादयति । तदेवं मनुष्यानधिकृत्य क्षायोपशमिको अनेकप्रकारोऽवधिरुक्तः सम्प्रति तिरश्चोऽधिकृत्य तं प्रतिपिपादयिषुराह—

आहारतेयलंभो, उक्कोसेणं तिरिक्खजोणीसु । गाउय जहण्णमोही, नरएसु उ जोयणुक्कोसो ॥ ४६ ॥

आहारश्च तैजसश्च आहारतेजसी तयोर्लभः प्राप्तिः परिच्छित्तिरित्यनर्थान्तरं, सूत्रे च लाभस्य लम्भ इति निर्देशः प्राकृतत्वात्, आहारतेजोग्रहणमुपलक्षणं तेन यान्यौदारिकवैक्रियाहारकतैजसद्रव्याणि यानि च तदन्तरालेषु तदयोग्यानि तेषां सर्वेषामपि परिग्रहः, योनियोनिमतोरभेदोपचारादुत्कर्षतस्तैर्यग्योनिकसत्त्वविषयोऽवधिः स औदारिकवैक्रियाहारकतेजोद्रव्याणि तदन्तरालद्रव्याणि च सर्वाणि पश्यति, एतद् द्रव्यानुसारेण क्षेत्रकालभावा अपि परिच्छेद्यतया स्वयमभ्यूह्याः । अथ भवप्रत्ययोऽवधिः प्रोच्यते, स च सुरनारकाणामेव स्याद् अल्पत्वात्वादौ नारकाणाम् । इह नरका आश्रयाः आश्रयाऽऽश्रयिणोरभेदोपचारात्, नरकेषु पुनः उत्कृष्टेष्वेव मध्ये जघन्योऽवधिः क्षेत्रतो गव्यूतं पश्यति, स च सप्तमपृथ्व्यां, उत्कृष्टस्तु योजनं पश्यति, स चाद्यपृथ्व्यां । इत्थम्भूतक्षेत्रानुसारेण द्रव्यादयः स्वयं परिभावनीयाः ॥ ४६ ॥ तदेवं सामान्येन नारकजातिमधिकृत्याभिहितमुत्कृष्टमवधिक्षेत्रम्, अथ तदेव रत्नप्रभादिपृथ्वीविभागेनाह—

चत्तारि गाउयाइं, अद्धुट्ठाइं तिगाउया चेव । अड्ढाइज्जा दुण्णि य, दिवड्ढमेगं च निरएसु ॥ ४७ ॥

उत्कृष्टावधिक्षेत्रं चतुर्गव्यूतादि एकगव्यूतान्तं यथासङ्ख्यं सप्तस्वपि पृथ्वीषु ज्ञेयं, उत्कृष्टमपि अर्द्धगव्यूतोनं जघन्यं स्यात्। तथाहि—रत्नप्रभायामुत्कृष्टमवधिक्षेत्रपरिमाणं चत्वारि गव्यूतानि जघन्यमर्द्धचतुर्थानि, शर्कराप्रभायामुत्कृष्टमर्द्धचतुर्थानि त्रीणि गव्यूतानि जघन्यं, 'त्रीणि गव्यूतानी'त्यादिशेषाक्षरार्थः—त्रिगव्यूतं अर्द्धतृतीयानि द्वे च अध्यर्द्धं एकं चेति। प्राग् जघन्यं गव्यूतमिति यदुक्तं तदुत्कृष्टजघन्यापेक्षया, इदमत्राकूतं—सप्तस्वपि पृथ्वीषु यद्गव्यूतचतुष्टयादिकमवधिक्षेत्रं तन्मध्ये सप्तमपृथिव्यां गव्यूतमवधिक्षेत्रं स्वस्थाने उत्कृष्टमपि शेषपृथिव्युत्कृष्टापेक्षया सर्वस्तोकत्वाज्जघन्यमुक्तं, न चैतत्स्वमनीषिकाविजृम्भितं, यत आह भाष्यकृत्—"अद्धुट्ठगाउयाइं जहण्णयं अद्धगाउयंताइं। जं गाउयं ति भणियं तं पइ उक्कोसजहण्णं ॥ १॥" (वि० ६९४) उक्तार्था वृत्तावव्याख्याता च ॥ ४७ ॥ अथ देवावधिं गाथात्रयेणाह—

सक्कीसाणा पढमं, दुच्चं च सणंकुमारमाहिंदा। तच्चं च बंभलंतग, सुक्कसहस्सारय चउत्थीं ॥ ४८ ॥

सौधर्मेशानकल्पदेवेन्द्रौ प्रथमां रत्नप्रभाभिधां पृथ्वीं पश्यन्ति, शक्रेशानग्रहणं चोपलक्षणं तेन सौधर्मेशानकल्पनिवासिदेवाः परिगृह्यन्ते, एवं सर्वत्र ज्ञेयं, द्वितीयां च पृथिवीं सनत्कुमारमाहेन्द्रौ—तृतीयतूर्यकल्पदेवेशौ, तृतीयां च ब्रह्मलोकान्त (लोकलान्तक) देवेन्द्रौ, शुक्रसहस्रारसुरेन्द्रौ चतुर्थीं पृथ्वीं पश्यन्तीति सर्वत्र द्वितीयगाथागतक्रिया योज्या, तामेव च पृथ्वीं सर्वे विशुद्धतरां बहुपर्यायां चोत्तरोत्तरा देवा पश्यन्ति, तेषां विमलविमलतरावधिसद्भावात् ॥ ४८ ॥

आणयपाणयकप्पे, देवा पासंति पंचमिं पुढवीं। तं चेव आरणच्चुय ओहीनाणेण पासंति ॥ ४९ ॥

आनतप्राणतयोः कल्पयोः सम्बन्धिनो देवाः पश्यन्ति पञ्चमीं पृथ्वीं, तामेवारणाच्युतयोः सम्बन्धिनो देवा अवधिज्ञानेन

पश्यन्ति, स्वरूपकथनमेवेदं, विमलतरां वहुतरां च ॥ ४९ ॥

छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिण्णलोगनालिं, पासंति अणुत्तरा देवा ॥ ५० ॥

अधस्त्यमध्यमग्रैवेयकविमानवासिनो देवाः षष्ठीं भुवं पश्यन्ति, सप्तमीं च पृथिवीमुपरितनग्रैवेयकनिवासिनः, सम्भिन्नां–किञ्चिदूनां चतसृष्वपि दिक्षु स्वज्ञानेन व्याप्तां लोकनाडीं चतुर्दशरज्जुप्रमाणां कन्याचोलकसंस्थानामनुत्तरविमानवासिनो देवा पश्यन्ति । एवं क्षेत्रतो देवानां भवप्रत्ययावधेर्विषय उक्तः । एतदनुसारेण द्रव्यादिविषयोऽप्यवसेयः ॥ ५० ॥ एवमधो वैमानिकावधिक्षेत्रप्रमाणमभिधायेदानीं तिर्यगूर्ध्वं च तदेव प्रदर्शयन्नाह—

एएसिमसंखिज्जा, तिरियं दीवा य सागरा चेव । बहुअअरं उवरिमगा, ऊड्ढं सगकप्पथूभाई ॥ ५१ ॥

एतेषां सौधर्मादिदेवानां असङ्ख्येयास्तिर्यक् द्वीपाश्च सागराश्चावधिपरिच्छेद्यतया अवसेया इति वाक्यशेषः । तदेव द्वीपसमुद्राऽसङ्ख्येयकं वहुतरकं–प्रभूतप्रभूततरं पश्यन्ति उपर्युपरिदेवलोकनिवासिनो देवाः, उर्द्ध्वं च स्वकल्पस्तुपाद्येव यावत्, आदिशब्दाद् ध्वजादिपरिग्रहः, जघन्यतः पुनरमी सर्वे देवा सौधर्मादयोऽनुत्तरविमानवासिपर्यन्ता अङ्गुलाऽसङ्ख्येयभागमात्रं क्षेत्रं पश्यन्ति । नन्वङ्गुलाऽसङ्ख्येयभागमात्रजघन्यो अवधिस्तिर्यग्मनुष्येष्वेव शेषाणां मध्यम एवेति वक्ष्यते, तत्कथं वैमानिकानां सर्वजघन्य उक्तः ?, उच्यते, सौधर्मादिदेवानां परभविकोऽप्युपपातकालेऽवधिः सम्भवति, उपपातानन्तरं तु देवभवप्रत्ययजस्ततो न कश्चिद्दोषः ॥ ५१ ॥ सम्प्रति सामान्यतो वैमानिकवर्जदेवानामवधिक्षेत्रमाह—

संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा, जहण्णयं पंचवीसं तु ॥ ५२ ॥

खलुए(रे)वार्थः स चावधारणेऽस्य चोभयथा सम्बन्धः, यथा अर्द्धसागरोपमे न्यूने एव चायुषि सति यथोक्तं क्षेत्रं । ततः पूर्वं (परं) सम्पूर्णार्द्धसागरादावायुषि त्वऽसङ्ख्येयानि योजनान्यवधिक्षेत्रमवसेयं, ऊर्द्धमधस्तिर्यक् च संस्थानविशेषाद्वक्ष्यमाणाद्भावनीयं । जघन्यकमवधिक्षेत्रं पञ्चविंशतिरेव योजनानि, तुरेवार्थः, देवानामिति वर्त्तते, एतच्च दशवर्षसहस्रस्थितीनां भवनपतिव्यन्तराणामवसातव्यं, ज्योतिष्काः पुनरसङ्ख्येयस्थितिकत्वाज्जघन्यतोऽपि सङ्ख्येययोजनप्रमितान् सङ्ख्येयान् द्वीपसमुद्रान् पश्यन्ति, उत्कर्षतोऽपि सङ्ख्येययोजनप्रमितानेव सङ्ख्येयान् द्वीपसमुद्रान् केवलमधिकतरान् ॥ ५२ ॥ अथायमेवावधिर्येषामुत्कृष्टादिभेदभिन्नो भवति तान्प्रदर्शयन्नाह—



**उक्कोसो मणुएसुं, मणुस्सतिरिएसु य जहण्णो य । उक्कोस लोगमित्तो, पडिवाइ परं अपडिवाई ॥ ५३ ॥**

इह द्रव्यतः क्षेत्रतः कालतो भावतश्चोत्कृष्टो अवधिर्मनुष्येष्वेव, न देवादिषु, तथा नरतिर्यक्ष्वेव जघन्योऽवधिर्न देवादिषु, च एवार्थः, तथा प्रतिपातिष्ववधिषु मध्ये उत्कृष्टोऽवधिः प्रतिपतितुं शीलमस्येति प्रतिपाती लोकमात्र एव, मात्रशब्दोऽलोकव्यवच्छेदार्थः, यद्यवधिः प्रतिपतति तत उत्कर्षतो लोकमात्र एव, न लोकात्परं प्रदेशमात्रमपि पश्यन्, ततो लोकात् परमेकमप्याकाशप्रदेशं पश्यन्नियमादप्रतिपाती ॥ ५३ ॥ उक्तं क्षेत्रप्रमाणद्वारं १, अधुना संस्थानद्वारव्याचिख्यासयाह—

**थिबुयायार जहण्णो, वट्टो उक्कोसमायओ किंची । अजहण्णमणुक्कोसो य, खित्तओ णेगसंठाणो ॥ ५४ ॥**



स्तिबुकः—उदकबिन्दुस्तस्येवाऽऽकारो यस्यासौ स्तिबुकाकारो जघन्यावधिः, तमेव स्पष्टयति—वृत्तः, सर्वतो वृत्तः, पनकक्षेत्रस्य वर्तुलत्वात्, तथोत्कृष्टः—परमावधिः, आयतः—प्रदीर्घः, किञ्चित्—मनाक्, वह्निजीवसूच्या अवधिमच्छरीरस्य सर्वतो

भ्राम्यमाणतया व्याप्यमानस्य क्षेत्रस्य एतदाकारभावात्, तथा न जघन्यो नाप्युत्कृष्टोऽजघन्योत्कृष्टो मध्यम एव, क्षेत्रतोऽनेकसंस्थानः, च एवार्थः, एवं जघन्योत्कृष्टावधिसंस्थानमुक्तं ॥ ५४ ॥ अथ विमध्यमावधिसंस्थानमाह—

तप्पागारे पल्लग पडहग झल्लरि मुइंग पुप्फ जवे । तिरियमणुएसु ओही, नाणाविहसंठिओ भणिओ ॥५५

तप्रो नाम काष्ठसमुदायविशेषो यो नदीप्रवाहेण प्लाव्यमानो दूरादानीयते, स चायतस्त्र्यस्रश्च भवति, तस्येवाकारो यस्यासौ तप्राकारोऽवधिर्नारकाणां, पल्लको लाटदेशे धान्याधारविशेषः, स चोर्द्ध्वायत उपरि च किञ्चित्संक्षिप्तः, आकार इति वर्त्तते, तस्येवाकारो यस्यासौ पल्लकाकारो भवनपतीनां, एवमाकारशब्दः सर्वत्र योज्यः । पटहः—आतोद्यविशेषः स च किंचिदायत उपर्यधश्च समप्रमाणः, तदाकारोऽवधिर्व्यंतराणाम्, उभयतो विस्तीर्ण्णा चर्मावनद्धमुखा मध्ये संक्षिप्ता ढक्काकारा झल्लरी आतोद्यविशेषरूपा तदाकारोऽवधिः ज्योतिष्कानां, मृदङ्गो—वाद्यविशेषः स चाधस्ताद्विस्तीर्ण उपरि च तनुः सुप्रतीतस्तदाकारोऽवधिः सौधर्माद्यच्युतपर्यन्तदेवानां, 'पुप्फ'त्ति पदैकदेशे पदसमुदायोपचारात् सशिखा पुष्पभृता चङ्गेरी पुष्पचङ्गेरी, तदाकारोऽवधिर्ग्रैवेयकविमानवासिदेवानां, 'जव' इति यवनालक इति द्रष्टव्यं, यवनालको नाम कन्याचोलकः स च मरुमण्डलादिप्रसिद्धश्चरणकरूपेण कन्यापरिधानेन सह सीवितो भवति येन परिधानं न चलाचलं भवति, कन्यानां चैष मस्तकप्रदेशेन प्रक्षिप्यते, तदाकारोऽवधिरनुत्तरसूराणां । एष च नारकादीनामनुत्तरसुरपर्यन्तानामेतदाकारः सर्वकालनियतः प्रत्येतव्यः । तिर्यग्मनुष्येष्ववधिर्नानाविधसंस्थानसंस्थितः, संस्थानशब्दलोपोऽत्र द्रष्टव्यः, स्वयम्भूरमणजलनिधिवासिमत्स्यगणवत्, अपितु तत्रापि मत्स्यानां वलयाकारं संस्थानं निषिद्धं, तिर्यग्मनुष्यावधिस्तु तदाकारोऽपि भवति । भणितस्तीर्थकृदादिभिः, अनेन च

संस्थानप्रतिपादनेनेदमावेदितं–भवनपतिव्यन्तराणामूर्द्धं प्रभूतोऽवधिर्वैमानिकानामधः ज्योतिष्कनारकाणां तिर्यक् विचित्रस्तु नरतिरश्चां ॥ ५५ ॥ उक्तं संस्थानद्वारं २, अथ सप्रतिपक्षानुगामिकद्वारार्थं प्रचिकटयिषयाह—

अणुगामिओ उ ओही, नेरइयाणं तहेव देवाणं । अणुगामी अणणुगामी, मीसो य मणुस्सतेरिच्छे ॥ ५६ ॥

अनुगाम्येवानुगामिकः स्वार्थे कः । आनुगामिकश्चावधिर्द्विधा-गच्छन्तं पुरुषमासमन्तात् अनुगच्छतीत्येवंशीलः अनुगामी अन्तगतो मध्यगतश्च, तत्रान्तगत इति कः शब्दार्थः?, उच्यते, इह पूर्वाचार्यप्रदर्शितमर्थत्रयं, अन्ते–आत्मप्रदेशानां अन्ते गतः, कोऽर्थः इहावधिरुत्पद्यमानः कोपि स्पर्धकरूपतयोत्पद्यते, स्पर्द्धकं च नामावधिज्ञानप्रभायाः गवाक्षजालादिद्वारविनिर्गत-प्रदीपप्रभाया इव प्रतिनियतो विच्छेदविशेषः । तानि चैकजीवस्यासङ्ख्येयानि सङ्ख्येयानि वा भवन्ति, विचित्ररूपाणि कानि-चित्पर्यन्तवर्त्तिष्वात्मप्रदेशेषूत्पद्यन्ते, तत्रापि कानिचित्पुरतः कानिचित्पृष्ठतः कानिचिदधोभागे कानिचिन्मध्यवर्त्तिष्वात्मप्रदे-शेषु, तत्र यः पर्यन्तवर्त्तिष्वात्मप्रदेशेष्ववधिरुत्पद्यते स आत्मनः पर्यन्ते स्थितः इति कृत्वा अन्तगत इत्यभिधीयते, तैरेव पर्यन्तवर्त्तिभिरात्मप्रदेशैः साक्षादवबोधः १, अथवा औदारिकशरीरस्यान्ते गतः–स्थितोऽन्तगतः, औदारिकशरीरमधिकृत्य कयाचिदेकया दिशोपलम्भात्, इदमपि स्पर्द्धकरूपमवधिज्ञानं, अथवा सर्वेषामात्मप्रदेशानां क्षयोपशमभावेऽपि औदारिक-शरीरान्ते कयाचिद्विवक्षितया दिशा यद्वशादुपलभते सो अप्यन्तगतः, विचित्रो हि देशाद्यपेक्षया कर्मणां क्षयोपशमः, ततः सर्वेषामप्यात्मप्रदेशानामित्थम्भूत एव स्वसामग्रीवशात् क्षयोपशमः संवृत्तो यदौदारिकशरीरमपेक्ष्य कयाचिद्विवक्षितया दिशा पश्यतीत्येष द्वितीयोऽर्थः २ । तृतीयः पुनरयं–एकदिग्भाविना तेन यदुद्योतितं क्षेत्रं तस्यान्ते वर्त्तते सोऽवधिरन्तगतः,

अवधिज्ञानवतस्तदन्ते वर्त्तमानत्वात् । अन्तगतश्चावधिस्त्रिधा—पुरतोऽन्तगतः पृष्ठतोऽन्तगतः पार्श्वतोऽन्तगतश्च, तत्र यथा कश्चित्पुरुषो हस्तगृहीतया दीपिकया पुरतः प्रेर्यमाणया पुरत एव पश्यति, नान्यत्र, एवं येनावधिना तथाविधक्षयोपशमभावतः पुरत एव सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि पश्यति, नान्यत्र, सोऽवधिः पुरतोऽन्तगतः, एवं यथा पृष्ठतो हस्तेन धूयमाणया दीपिकया पृष्ठत एव पश्यति स पृष्ठतोऽन्तगतः, येन पुनः पार्श्वत एकतो द्वाभ्यां वा सङ्ख्येयानि असङ्ख्येयानि वा योजनानि पश्यति स पार्श्वतोऽन्तगतः । मध्यगत इत्यत्रापि त्रिधा व्याख्यानं, इह मध्यं प्रसिद्धं दण्डादेरिव, तत्रात्मप्रदेशानां मध्ये—मध्यवर्त्तिष्वात्मप्रदेशेषु गतः—स्थितो मध्यगतः, अयं च स्पर्द्धकरूपः सर्वदिगुपलम्भकारणं मध्यवर्त्तिनामात्मप्रदेशानामवधिरवसातव्यः १, अथवा सर्वेषामप्यात्मप्रदेशानां क्षयोपशमभावेऽपि औदारिकशरीरमध्यभागेनोपलब्धेः, तन्मध्ये गतो मध्यगतः २, अथवा तेनावधिना यदुद्योतितं क्षेत्रं सर्वासु दिक्षु तस्य मध्ये मध्यभागे गतः—स्थितो मध्यगतः अवधिज्ञानिनस्तदुद्योतितक्षेत्रमध्यवर्त्तित्वात् ३ । तत्रेहान्तगतो न ग्राह्यः, देवनारकाणामभ्यन्तरावधित्वात् किन्तु मध्यगतः, असौऽप्यन्त(न्त्य)व्याख्यानरूपो देवनारकाणां स्वावधिद्योतितक्षेत्रमध्यवर्त्तित्वात्, तुरेवार्थः, आनुगामिक एव यथोक्तरूपो नारकाणां नान्यः, तथैवानुगामिक एव देवानां, तथा मनुष्येषु तिर्यक्षु चानुगामिक उक्तशब्दार्थः । तथाऽनानुगामिको अवस्थितशृङ्खलादिनियन्त्रितप्रदीप इव यो गच्छन्तं पुरुषं नानुगच्छति, यस्योत्पन्नस्यावधेर्देशो व्रजति स्वामिना सहाऽपरश्च देशः प्रदेशान्तरचलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति स मिश्र उच्यते । अयं गाथार्थः—देवनारकाणां सर्वात्मप्रदेशजाभ्यन्तरावधिरूपमध्यगतः आनुगामिकोऽवधिः, तिर्यग्मनुष्याणां तु सर्वभेदः—आनुगामिकोऽनानुगामिको मिश्रश्चेति भावार्थः ॥ ५६ ॥ उक्तमानुगामिक-

द्वारं अथ गाथाद्वयेनावस्थितद्वारमाह–अवस्थितत्वं चावधेः क्षेत्रतः उपयोगतो लब्धितश्च, तत्राद्यगाथयाऽऽद्यभेदावाह—

खित्तस्स अवट्ठाणं, तित्तीसं सागरा उ कालेणं । दव्वे भिण्णमुहुत्तो, पज्जवलंभे य सत्तट्ठ ॥ ५७ ॥

अवस्थितिरवस्थानं, अवधेराधाररूपतालक्षणेन पर्यायेण क्षेत्रस्यावस्थानं, कालेन–कालमाश्रित्य त्रयस्त्रिंशत्सागराणि तुरेवार्थः, तथाहि–अनुत्तरसुरा यत्र क्षेत्रे येष्वेव प्रतिनियतेषु क्षेत्रप्रदेशेषु, क्व ?, जन्मसु ये अवगाढास्ते प्रायस्तत्रैवाभवक्षयमवतिष्ठन्ते, ततस्तानधिकृत्योत्कर्षतोऽवधेरवस्थानं त्रयस्त्रिंशत्सागराणि । अथोपयोगमधिकृत्यावधेरवस्थानं द्रव्ये–द्रव्यविषये तत्रान्यत्रक्षेत्रे [ च ] भिन्नश्चासौ मुहूर्त्तश्च भिन्नमुहूर्त्तः, अन्तर्मुहूर्त्तकालं, ततः परं सामर्थ्याऽभावात्, तत्रैव द्रव्ये ये पर्यवाः–पर्यायधर्मास्तल्लाभे पर्यायात् पर्यायान्तरं सञ्चरतोऽवधेरुपयोगमधिकृत्यावस्थानम् सप्त अष्टौ वा समयान् यावत्, न परतः, पर्यायाणां सूक्ष्मतया परतस्तद्विषयेऽवस्थाने सामर्थ्याऽभावात्, अन्ये तु व्याचक्षते–पर्यवा द्विविधाः–गुणा पर्यायाश्च, तत्र सहवर्त्तिनो गुणाः शुक्लत्वादयः, क्रमवर्त्तिनः पर्याया नवपुराणादयः, गुणाः स्थूलाः पर्यायास्तु सूक्ष्माः । यथा यथा च सूक्ष्मं वस्तु तथा तथा उपयोगस्य स्तोककालता, द्रव्यगुणपर्यायाश्च यथोत्तरं सूक्ष्मास्ततो गुणेष्वष्टौ समयान् यावदुपयोगस्यावस्थानं पर्यायेषु तु सप्त ॥ ५७ ॥ अथ लब्धिमधिकृत्यावस्थानकालमानमाह—

अद्धाइ अवट्ठाणं, छावट्ठी सागरा उ कालेणं । उक्कोसगं तु एयं, इक्को समओ जहण्णेणं ॥ ५८ ॥

अद्धा नामावधिज्ञानावरणक्षयोपशमरूपा लब्धिरभिप्रेता, ततोऽद्धायाः–लब्धेः कालेन–कालतोऽवधेरवस्थानं, तत्रान्यत्र वा क्षेत्रे तेष्वन्येषु वा द्रव्यादिषूपयुक्तस्यानुपयुक्तस्य वा षट्षष्टिसागराणि, तुशब्दान्नरभवेन साधिकानि । उपसंहारमाह—

कालतोऽवस्थानमिदमाधारादिषु उत्कृष्टमेवोक्तं ज्ञेयम् । जघन्येन-जघन्यतः पुनरुपयोगलब्धी अङ्गीकृत्यावस्थानं द्रव्यादावप्येकः समयः, तत्र नरतिरश्चां समयादूर्द्ध्वमवधेः प्रतिपातादनुपयोगाद्वा एकसमयावस्थानता ज्ञेया, देवनारकाणां तु येषां भवस्य चरमसमये सम्यक्त्वलाभाद्विभङ्गज्ञानमेवावधिरूपतया परिणमति ततः परं च मृतानां तदवधिज्ञानं प्रच्यवते तेषामवसातव्यम् ॥ ५८ ॥ उक्तमवस्थितद्वारं, अथ चलद्वारमाह—

वुड्ढी वा हाणी वा, चउव्विहा होइ खित्तकालाणं । दव्वेसु होइ दुविहा, छव्विह पुण पज्जवे होइ ॥ ५९ ॥

चलश्चावधिर्द्रव्यादिविषयमङ्गीकृत्य वर्द्धमानको हीयमानको वा भवति, वृद्धिहानी च प्रत्येकं सामान्येनागमे षड्विधे प्रोक्ते, तद्यथा—अनन्तभागवृद्धिः १ असङ्ख्यातभागवृद्धिः २ सङ्ख्यातभागवृद्धिः ३ सङ्ख्यातगुणवृद्धिः ४ असङ्ख्यातगुणवृद्धिः ५ अनन्तगुणवृद्धिः ६, एवमनन्तभागहान्यादिभेदाद् हानिरपि षट् प्रकारा, एतयोश्च षड्विधवृद्धिहान्योर्मध्यादवधिविषयभूतक्षेत्रकालयोराद्यन्तभेदद्वयवर्जिता चतुर्विधा वृद्धिर्हानिर्वा भवति, अनन्तभागवृद्धिरनन्तगुणवृद्धिर्वा तथा अनन्तभागहानिरनन्तगुणहानिर्वा क्षेत्रकालयोर्न सम्भवति, अवधिविषयभूतयोः क्षेत्रकालयोरानन्त्याभावात्, इयमत्र भावना—यावत् क्षेत्रं प्रवर्द्धमानाख्येनावधिना प्रथमं दृष्टं ततः प्रतिसमयं स प्रवर्द्धमानो अवधिः कश्चिदसङ्ख्यातभागवृद्धं पश्यति कोऽपि सङ्ख्यातभागवृद्धं कोऽपि सङ्ख्यातगुणवृद्धं कोऽप्यसङ्ख्यातगुणवृद्धं, तथा प्रथममवधिना हीयमानेन यत् क्षेत्रं दृष्टं ततः प्रतिसमयं कश्चिदसङ्ख्यातभागहीनं पश्यति १, कोऽपि सङ्ख्यातभागहीनं २ कोऽपि सङ्ख्यातगुणहीनं ३ कोऽप्यसङ्ख्यातगुणहीनं एवं क्षेत्रस्य वृद्धिर्हानिर्वा चतुर्द्धा भवति, इत्थं कालेऽपि वृद्धिहान्योश्चातुर्विध्यं भावनीयं, द्रव्येषु पुनरवधिविषयभूतेषु द्विविधा वृद्धिर्हानिर्वा

भवति, तथाहि—यावन्ति द्रव्याणि प्रथममवधिना दृष्टानि ततः परं कोऽपि तेभ्यो अनन्तभागाधिकानि पश्यति, अपरस्तु तेभ्योऽनन्तगुणवृद्धानि, न त्वऽसङ्ख्यातभागादिना वृद्धानि, तथास्वाभाव्यात्, एवं हानिरपि, कोऽपि पूर्वोपलब्धेभ्योऽनन्तभागहीनानि द्रव्याणि पश्यति, कोऽप्यनन्तगुणहीनानि [ नत्वसङ्ख्यातभागादिना हीनानि ] तथास्वाभाव्यादेव, पर्याये पुनः पूर्वोक्ता षड्विधापि वृद्धिर्हानिर्भवति । एतेषां च द्रव्यक्षेत्रकालभावानां परस्परसंयोगे चिन्त्यमाने एकस्य वृद्धावेवापरस्य वृद्धिर्न त्वेकस्य हानावन्यस्य वृद्धिः, एकस्य हानावेवापरस्य हानिर्न त्वेकस्य वृद्धावपरस्य हानिः, अन्यच्च एकस्य द्रव्यादेर्भागेन वृद्धौ हानौ वा जायमानायामपरस्यापि प्रायो भागेनैव वृद्धिहानी भवतः, न तु गुणकारेण, गुणकारेणाप्येकस्य गुणवृद्धिहान्योः प्रवर्त्तमानयोरपरस्यापि प्रायो गुणकारेणैव प्रवर्त्तते, नैव भागेन । ननु क्षेत्राधाराणि द्रव्याणि द्रव्याधाराश्च पर्यायाः, यादृश्येव चाधारस्य वृद्धिराधेयस्यापि तादृश्येव युक्ता, तथा च सति क्षेत्रस्यासङ्ख्येयभागादिवृद्धौ तदाधेयद्रव्याणामपि तन्निबन्धनत्वादसङ्ख्येयभागादिवृद्धिः स्यात्, तथा द्रव्यस्यानन्तभागादिवृद्धौ सत्यां तत्पर्यायाणामप्यनन्तभागादिवृद्धिरेवाप्नोति, न षट्स्थानकं, पर्यायाणां [द्रव्य] निबन्धनत्वात्, उच्यते, सामान्यन्यायमङ्गीकृत्येत्थमेव, कोऽर्थः यदा क्षेत्रानुवृत्त्या पुद्गलाः परिसङ्ख्यायन्ते पुद्गलानुवृत्त्या च तत्पर्यायास्तदा क्षेत्रस्याऽसङ्ख्येयभागादिवृद्धिहान्योः सत्योः द्रव्यस्यापि तदनुवृत्त्या तथैव वृद्धिहानी प्राप्नुतः, द्रव्यस्यापि चानन्तभागादिवृद्धिहान्योस्तत्पर्यायाणामपि तदनुवृत्त्या तथैव वृद्धिहानी स्यातां, न चात्रैकं, यस्मात् क्षेत्रादनन्तगुणा पुद्गलास्तेभ्योऽपि तत्पर्याया अनन्तगुणाः, अवधिश्च क्षयोपशमाधीनः, क्षयोपशमः च तत्तद्रव्यादिसामग्रीवशाद्विचित्रपरिणामः, केवलज्योतिषा च भगवतैवंस्वरूप एवोपलब्धः, ततो यथोक्तस्वरूपे एव वृद्धिहानी प्रतिपत्तव्ये नान्यथेति न कश्चिद्दोषः ॥५९॥ उक्तं चलद्वारं,

अथ तीव्रमन्दद्वारमाह—

फड्डा य असंखिज्जा, संखेज्जा यावि एगजीवस्स । एकफड्डुवओगे, नियमा सव्वत्थ उवउत्तो ॥ ६० ॥

फड्डा य आणुगामी, अणाणुगामी य मीसगा चेव । पडिवाइ अपडिवाई, मीसो य मणुस्सतेरिच्छे ॥ ६१ ॥

स्पर्द्धकानि प्रागुक्तस्वरूपाणि, तानि चैकजीवस्य सङ्ख्येयान्यसङ्ख्येयान्यपि च भवन्ति, तत्रैकस्पर्द्धकोपयोगे सति नियमात्सर्वत्र—सर्वेषु स्पर्द्धकेषु उपयुक्तो भवति, एकोपयोगत्वाज्जीवस्य, एकलोचनोपयोगे द्वितीयलोचनोपयुक्तवत्, प्रकाशमयत्वाद्वा प्रदीपोपयोगवत्, कोऽर्थः—यः प्रकाशमयस्तस्यैकस्मिन्नप्यर्थे प्रकाशकत्वेन व्याप्रियमाणस्य सर्वात्मना व्यापारो न देशेन यथा प्रदीपस्य, जीवोऽपि ज्ञानप्रकाशेन प्रकाशवान् । ततोऽस्यापि सर्वस्पर्द्धकैरेकोपयोगतया सर्वात्मना व्यापार इति । प्रदीपस्य चोपयोगो व्यापार एव ॥ ६० ॥ एतानि च स्पर्द्धकानि त्रिधा भवन्ति, तद्यथा—अनुगमनशीलान्यानुगामिकानि—यत्र प्रदेशे तिष्ठतोऽवधिमतो जीवस्योत्पन्नानि ततोऽन्यत्रापि व्रजतस्तस्यानुयायीनीति भावः । एतद्विपरीतान्यनानुगामिकानि, उभयस्वरूपाणि मिश्राणि, कानिचिद्देशान्तरानुयायीनि कानिचिन्नेति भावः, एतानि च पुनः प्रत्येकं त्रिधा स्युः, तद्यथा—प्रतिपतनशीलानि प्रतिपातीनि, कियन्तमपि कालं स्थित्वा ततो ध्वंसगमनस्वभावानीति भावः, तद्विपरीतान्यप्रतिपातीनि, आमरणान्तभावीनीत्यर्थः । उभयस्वभावानि मिश्राणि, एतानि च स्पर्द्धकानि मनुष्यतिर्यक्षु योऽवधिस्तस्मिन्नेव भवन्ति, न देवनारकावधौ । ननु तीव्रमन्दद्वारे प्रस्तुते स्पर्द्धकावधिकथनं कथं युक्तं ?, उच्यते, इह प्राय आनुगामिकाऽप्रतिपातीनि स्पर्द्धकानि तीव्रविशुद्धियुक्तत्वात्तीव्राणि, अनानुगामिकप्रतिपातीनि त्वविशुद्धत्वान्मन्दानि, मिश्राणि च मध्यमानि, ततस्तीव्रमन्दद्वारमेवेदमित्यदोषः ।

ननु आनुगामिकाऽप्रतिपातिस्पर्द्धकयोः परस्परं कः प्रतिविशेषः को वाऽनानुगामिकप्रतिपातिस्पर्द्धकयोः ?, उच्यते—अप्रतिपातिस्पर्द्धकमानुगामिकमेव भवति, आनुगामिकं तु प्रतिपात्यप्रतिपाति चेति विशेषः, तथा प्रतिपाति पतत्येव, पतितमपि च देशान्तरे गतस्य कदाचिज्जायते, न चेत्थमनानुगामिकमिति विशेषः ॥ ६१ ॥ उक्तं तीव्रमन्दद्वारं अथ प्रतिपातोत्पातद्वारमाह गाथाद्वयेन—

बाहिरलंभे भज्जो, दव्वे खित्ते य कालभावे य । उप्पा पडिवाओऽवि य, तं उभयं एगसमएणं ॥ ६२ ॥

अब्भितरलद्धीए, उ तदुभयं नत्थि एगसमएणं । उप्पा पडिवाओऽवि य, एगयरो एगसमएणं ॥ ६३ ॥

इह द्रष्टुरवधिमतो योऽवधिस्तस्यैव एकस्यां दिशि भवति स बाह्यावधिः, अथवा अनेकास्वपि दिक्षु यः स्पर्द्धकावधिरन्योन्यं विच्छिन्नो भवति सोऽपि बाह्यावधिः । स्थापना० । अथवा सर्वतः परिमण्डलाकारोऽपि योऽवधिरवधिमतोऽङ्गुलमानादिना क्षेत्रव्यवधानेन सर्वतोऽसम्बद्धः सोऽपि बाह्यावधिः । तस्यैवंविधस्य 'बाह्यस्य' बाह्यावधेर्लाभे-प्राप्तौ सत्यां 'भाज्यो' विकल्पनीयः, कः ?, 'उत्पाद' उत्पत्तिः, 'प्रतिपातो' ध्वंसः, तदुभयं च एकसमयेनेति, किं विषय इत्याह—द्रव्ये क्षेत्रे काले भावे च, अपिचशब्दा यथायोगं पूरणसमुच्चयार्थाः, एकस्मिन् द्रव्यादौ विषये बाह्यावधेः कदाचिदुत्पादः कदाचिद्व्ययः कदाचिदुभयं । ननूत्पादप्रतिपातयोः परस्परविरुद्धत्वात्कथमुभयमेकसमयेनेति ?, नैष दोषः, विभागेन भावात्, तथा चात्र दावानलदृष्टान्तः, दावानलः खलु एककाल एव एकतो दीप्यतेऽन्यतश्च ध्वंसते [ ध्वस्यते ] तथा अवधिरप्येकदेशे जायते अन्यत्र प्रच्यवते ॥ ६२ ॥ इह द्रष्टुर्यः सर्वतः सम्बद्धः प्रदीपस्य प्रभानिकरवत्, सोऽभ्यन्तरावधिस्तस्य—अभ्यन्तरावधेर्लब्धिः—प्राप्तिस्तस्यां सत्यां, तुर्विशेषणार्थः, किं विशिनष्टि ? तच्च तदुभयं च [ तदुभयं ]—उत्पादप्रतिपातरूपमुभयं नास्त्येकसमयेन, द्रव्यादौ

विषये इत्यनुवर्त्तते, किं तर्हि ?, उत्पादः प्रतिपातो वा एकतर एवैकसमयेन, अपिरेवार्थः, स च भिन्नक्रमस्तथैव च योजितः, अयं भावार्थः–प्रदीपस्येवोत्पाद एव वा प्रतिपात एव वा एकसमयेनाभ्यन्तरावधेरुपजायते, न तूभयं, अप्रदेशावधित्वात्, न ह्येकस्यैकपर्यायोत्पादव्ययौ युगपद्भवितुमर्हतः, परस्परविरोधात् ॥ ६३ ॥ इदानीं प्रसङ्गत एवोत्पादप्रतिपाताधिकारे द्रव्यपर्याययोः परस्परमुपनिबन्धं प्रतिपादयन्नाह—

दव्वाओ असंखिज्जे संखेज्जे आवि पज्जवे लहइ । दो पज्जवे दुगुणिए, लहइ य एगाउ दव्वाउ ॥ ६४ ॥

परमाण्वादि द्रव्यमेकं पश्यन्नवधिज्ञानी द्रव्यात्सकाशात् तत्पर्यायानुत्कृष्टतोऽसङ्ख्येयात् मध्यमतः सङ्ख्येयांश्चापि 'लभते' पश्यतीत्यर्थः, जघन्यतस्तु द्वौ पर्यायौ द्विगुणितौ लभते च एकस्माद्द्रव्यात्, इदमुक्तं भवति–सामान्यतो वर्णगन्धरसस्पर्शलक्षणांश्चतुरः पर्यायानेकस्मिन् द्रव्ये पश्यति, न त्वेकगुणकालकादीन् बहूनिति । अनन्तांश्च पर्यायानुत्कर्षतोऽपि न प्रेक्षते एकद्रव्यगतान्, अनन्तेषु द्रव्येषु समुदितेषु त्वनन्तांस्तान् पश्यत्येव ॥ ६४ ॥ गतं सप्रसङ्गमुत्पादप्रतिपादद्वारं, इदानीं ज्ञानदर्शनविभङ्गलक्षणं द्वारत्रयं युगपदभिधित्सुराह—

सागारमणागारा, ओहिविभंगा जहण्णगा तुल्ला । उवरिमगेवेज्जेसु उ, परेण ओही असंखिज्जो ॥ ६५ ॥

इह योऽवधिर्विशेषग्राहकः स साकारः, स च सम्यग्दृष्टेः ज्ञानमित्यभिधीयते, स एव मिथ्यादृष्टेर्विभङ्गः, यः पुनः सामान्यग्राहको अवधिर्विभङ्गो वा सोऽनाकारः, स च दर्शनं, तत्र साकारानाकारावधिविभङ्गौ जघन्यकादारभ्य तुल्यो भवतः, लोकपुरुषग्रीवाभवानि ग्रैवेयकानि उपरिमाणि च तानि ग्रैवेयकाणि उपरिमग्रैवेयकाणि तेषु यावत्, तुरेतद्विशिनष्टि–नारक-

द्रव्यपर्याययोः परस्परमुपनिबन्धम् गा. ६४

ज्ञानदर्शनविभङ्गद्वारत्रयम् गा. ६५

भवनपतिदेवेभ्य आरभ्य तिर्यङ्मनुष्यवर्जमुपरिमग्रैवेयकेषु यावत्साकारानाकारावधिविभङ्गकौ तुल्यौ, इयं भावना—नारका भवनपत्यादयश्चोपरितनग्रैवेयकविमानवासिपर्यन्ता देवा ये ये जघन्यतुल्यस्थितयो मध्यमतुल्यस्थितय उत्कृष्टतुल्यस्थितयो वा तेषां तेषां अवधिविभङ्गज्ञानदर्शने क्षेत्रकालरूपौ विषयावधिकृत्य परस्परतस्तुल्ये न तु द्रव्यभावविषयौ तावङ्गीकृत्य, तुल्यस्थितिकानामपि सम्यग्दर्शनं विशुद्धतपःकर्मादिकं च प्राग्भवगतं कारणं प्रतीत्यातिदूरतरं तुल्यत्वाभावात् । तथा ग्रैवेयकविमानेभ्यस्तु परतोऽनुत्तरविमानेषु ज्ञानदर्शनरूपोऽवधिरेव भवति, न तु विभङ्गज्ञानं, मिथ्यादृष्टीनां तत्रोपपाताभावात्, स चाऽसङ्ख्यातक्षेत्रकालविषयो भवति, द्रव्यभावैस्त्वनन्तविषयः, इह तिर्यङ्मनुष्याणां तुल्यस्थितीनामपि क्षयोपशमतीव्रमन्दतादिकारणवैचित्र्यात्तु क्षेत्रकालविषययोरप्यवधिविभङ्गज्ञानदर्शनयोर्विचित्रता, न पुनस्तुल्यतैवेतीह तद्वर्जनं ॥ ६५ ॥ गतं ज्ञानादिद्वारं ९–१०–११, अथ देशद्वारं प्रचिकटयिषुरिदमाह—

नेरइयदेवतित्थंकरा य ओहिस्सऽबाहिरा हुंति । पासंति सव्वओ खलु, सेसा देसेण पासंति ॥ ६६ ॥

नैरयिकाश्च देवाश्च तीर्थकराश्च ते नैरयिकदेवतीर्थकराः, चोऽवधारणे भिन्नक्रमश्च, अवधेः—अवधिज्ञानस्याबाह्या एव, अवध्युपलब्धक्षेत्रस्यान्तर्वर्त्तन्ते, न कदाचनापि बाह्या भवन्तीत्यर्थः, सर्वतोऽवभासकत्वात्तदवधेः प्रदीपवत् । तथा पश्यन्ति सर्वतः, खलुरेवार्थः, सर्वास्वेव दिग्विदिक्ष्विति । नन्ववधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य लब्धत्वात्सर्वतोग्रहणमतिरिच्यते, नैष दोषः, अभ्यन्तरत्वाभिधानेऽपि सर्वतो दर्शनाप्रतीतेः, न खल्ववधेरभ्यन्तरत्वेऽपि सति [सर्वे]सर्वतः पश्यन्ति, कस्यचिद्दिगन्तरालादर्शनात् विचित्रत्वादवधेः, ततः सर्वतो दर्शनख्यापनार्थं सर्वत इत्युक्तं, शेषास्तिर्यङ्नरा एव देशेन—एकदे-

शेन पश्यन्ति, न तु शेषा देशत एव, तिर्यङ्नराणां देशतः सर्वतश्च यथायोगमवधिना दर्शनात्, इति सावधारणं ज्ञेयम्। अथवाऽन्यथा व्याख्यायते–नैरयिकदेवतीर्थकरा अवधेरबाह्या भवन्ति, कोऽर्थः ?–नियतावधयो भवन्ति, नियमेनैषामवधिर्भवतीति भावः, एवं चाभिहिते सति संशयः–किं ते देशेन पश्यन्ति उत सर्वत इति, तदपनोदार्थमाह–पश्यन्ति सर्वतः खलु न तु देशतः। अपर( अत्र पर ) आह–ननु पश्यन्ति सर्वतः खल्वित्येतावदेवास्तु अवधेरबाह्या भवन्तीत्येतन्न युक्तं, यतो नियतावधित्वप्रतिपादनार्थमिदमुच्यते, नियतावधित्वं च देवनारकाणां 'दुण्हं भवपच्चइअं, तंजहा–देवाणं नेरइआणं च' इति वचनात्सिद्धं; तीर्थकृतां तु पारभविकावधिसमन्वागमस्यातिप्रसिद्धत्वात्, उच्यते–इह यद्यपि 'दुण्हं भवपच्चइयं' इत्यादिवचनतो नारकादीनां नियतावधित्वं लब्धं, तथापि सर्वकालं तेषां नियतोऽवधिरिति न लभ्यते, तत्ख्यापनार्थमवधेरबाह्या भवन्तीत्युक्तं। यद्येवं तर्हि तीर्थकृतामवधेः सर्वकालावस्थायित्वं विरुध्यते, न, छद्मस्थकालस्यैव तेषां विवक्षणात्। अथवा केवलोत्पत्तावपि वस्तुतस्तत्परिच्छेदस्याप्यनष्टत्वात्, केवलेन सुतरां सम्पूर्णानन्तधर्मकवस्तुपरिच्छित्तेः, शेषं प्राग्वत् ॥ ६६ ॥ गतं देशद्वारं १२, अथ क्षेत्रद्वारं विवरीषुराह—

**संखिज्जमसंखिज्जो, पुरिसमबाहाइ खित्तओ ओही। संबद्धमसंबद्धो, लोगमलोगे य संबद्धो ॥ ६७ ॥**

कश्चित् क्षेत्रतोऽवधिरवधिमति जीवे प्रदीपे प्रभापटलमिव सम्बद्धो लग्नो भवति, जीवावष्टब्धक्षेत्रादारभ्य निरन्तरं द्रष्टव्यं वस्तु प्रकाशयतीति भावः, कश्चित्पुनरतिविप्रकृष्टं तमोव्याकुलमन्तरालवर्त्तिनं प्रदेशमुल्लङ्घ्य दूरस्थितभित्त्यादिप्रतिस्फलितप्रदीपप्रभेवासम्बद्धो जीवे भवति, कया हेतुभूतयासम्बद्ध इत्याह–'पुरिसमबाहाए' इति मकारोऽलाक्षणिकः, पूर्यते सुखदुःखा-

भ्यामिति पुरुषः, तस्माद् अवाधा-अपान्तरालं पुरुपावाधा तया हेतुभूतया असम्वद्धः । स च सम्वद्धोऽसम्वद्धश्चावधिः क्षेत्रतः कियान् भवतीत्याह-सङ्ख्येयोऽसङ्ख्येयश्च योजनापेक्षया भवति, अत्रापि मः पूर्ववत्, असम्वद्धोऽप्यवधिः क्षेत्रतः सङ्ख्येयानि वा योजनानि स्यादऽसङ्ख्येयानि वा, एवं सम्वद्धोऽपि, पुरुपस्यावधेश्चापान्तरालमपि सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि भवति । सा च पुरुषावाधा असम्वद्धे एवावधौ भवति न तु सम्वद्धे, तत्र सम्वद्धत्वेनैव तदसम्भवात्, इह चासम्वद्धेऽवधावपान्तराले च चतुर्भङ्गिका-सङ्ख्येयमन्तरं सङ्ख्येयोऽवधिः १, सङ्ख्येयमन्तरमसङ्ख्येयोऽवधिः २, असङ्ख्येयमन्तरं सङ्ख्येयोऽवधिः ३, असङ्ख्येयमन्तरमसङ्ख्येयोऽवधिः ४, सम्वद्धे त्ववधौ विकल्पाभावः, तदुत्थानहेतोरन्तरलक्षणस्य द्वितीयपदस्य तत्राभावात् । तथायमवधिर्लोके अलोके च सम्वद्धोऽपि भवति । इह लोकशब्देन लोकान्तः परिगृह्यते, तथा पूर्वसूरिकृतव्याख्यानात्; अत्रापि चतुर्भङ्गिका-पुरुषे सम्वद्धो लोकान्ते चायं च लोकप्रमाणावधिरेव १, पुरुपे सम्वद्धो न लोकान्ते देशतोऽभ्यन्तरावधिः २, न पुरुषे सम्वद्धः किन्तु लोकान्ते एकदिग्वर्त्ती वाह्यावधिः ३, शून्योऽयं भङ्ग इति हारिभद्रीया टीका तदसम्यक्, चूर्णौ भाष्ये चाऽप्रतिपेधादसम्भवहेत्वभावाच्च, तथा न लोकान्ते सम्वद्धो नापि पुरुपेऽसम्वद्धो वाह्यावधिरेव स्तोकदेशवर्त्ती ४, यस्त्वलोके सम्वद्धः स पुरुषे नियमात् सम्वद्ध एव, अभ्यन्तरावधेरेवालोकदर्शनसमर्थत्वात् ॥ ६७ ॥ गतं क्षेत्रद्वारं १२, गतिद्वारमाह—

गइ नेरइयाईआ, हिट्ठा जह वण्णिया तहेव इहं। इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥ ६८ ॥

गतिर्नैरयिकादिका, गतिग्रहणं शेषस्येन्द्रियादिद्वारकलापस्योपलक्षणं, ततोऽयमर्थः-ये गत्यादयः सत्पदप्ररूपणाहेतवः ये च द्रव्यप्रमाणादयोऽष्टौ द्वारविशेपास्ते यथा अधस्तान्मतिश्रुतयोर्वर्णितास्तथैवेहाऽपि द्रष्टव्याः, अयं तु विशेपः-ये पूर्वं मति

ज्ञानस्य प्रतिपत्तारः प्रागुक्तास्तेऽवधिज्ञानस्यापि प्रतिपत्तव्याः, नवरं पूर्वं मतेरवेदका अकषायिणो मनःपर्यायज्ञानिनश्च पूर्वप्रतिपन्ना एवोक्ताः, इह तु प्रतिपद्यमाना अपि द्रष्टव्याः, यतः श्रेणिद्वये वर्त्तमानानामवेदकानामकषायाणां च केषाञ्चिदवधिरुत्पद्यते, येषां चानुत्पन्नावधीनां मतिश्रुतचारित्रवतां प्रथममेव मनःपर्यायज्ञानमुत्पद्यते ते च मनःपर्यायज्ञानिनः केचित्पश्चादवधेः प्रतिपत्तारः स्युः। अन्यच्च–अनाहारका अपर्याप्तकाश्च मतेः पूर्वप्रतिपन्ना एवोक्ताः, न तु प्रतिपद्यमानकाः, इह तु ये अप्रतिपतितसम्यक्त्वास्तिर्यङ्मनुष्येभ्यो देवनारका जायन्ते ते अपान्तरालगत्यादावधेः प्रतिपद्यमानका अपि प्रतिपत्तव्याः, शक्तिमङ्गीकृत्येति भावार्थः। पूर्वप्रतिपन्नाः पुनर्ये एव मतेः प्रागुक्तास्ते एव द्रष्टव्याः, नवरं द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियतिरश्चो मुक्त्वा, ते हि सास्वादनसम्यग्दृष्टयो मतेः पूर्वप्रतिपन्ना उक्ताः, अवधेस्तु न प्रतिपद्यमानका नापि पूर्वप्रतिपन्ना इति, शेषं तथैव। एतदेव विनेयजनानुग्रहाय सविस्तरं भाव्यते, तत्रैवं सत्पदप्ररूपणावतारः–कोऽपि शिष्यो गुरुं पृच्छति, भगवन् ! अवधिज्ञानं किमस्ति? नास्ति? इति, गुरुराह नियमादस्ति, कथमवगन्तव्यं?, गुरुराह 'गइ इंदिए'त्यादि गाथाद्वयोक्तगत्यादिमार्गणास्थानैर्विंशत्या, तत्र गतिद्वारे चतुर्विधायामपि गताववधेः पूर्वप्रतिपन्ना नियमतः सन्ति, अन्ये भाज्याः १, इन्द्रियद्वारे एकद्वित्रिचतुरिन्द्रियेषूभयाभावः, पञ्चेन्द्रियेषु गतिवत् २, पृथिव्यप्तेजोवायुवनस्पतिषूभयाभावः, त्रसकायेषु गतिवत् ३, मनोरहितवाग्योगेषु केवलकाययोगेषु चोभयाभावः ४, त्रिष्वपि वेदेषु गतिवत्, अवेदकेषु तूभयमपि भाज्यं ५, एवं कषायद्वारेऽपि ६, उपरितनीषु तिसृषु लेश्यासु गतिवत्, आद्यासु तिसृष्वाद्याः सन्ति न त्वितरे, सम्यक्त्वद्वारे निश्चयव्यवहाराभ्यां विचारः, तत्र व्यवहारनयमतेन मिथ्यादृष्टिः सम्यग्दृष्टिश्चावधेः प्रतिपत्ता, पूर्वप्रतिपन्नस्तु सम्यग्दृष्टिरेव, निश्चयनयमतेन प्रतिपद्यमानकः पूर्वप्रतिपन्नश्चावधेः

सम्यग्दृष्टिरेव ८, ज्ञानदर्शनद्वारयोर्गतिवत् ९-१०, [ संयतद्वारे संयता असंयताः ] संयतासंयता गतिवत् ११, साकारोपयोगे आद्या नान्ये ( अन्ये भाज्याः ) गतिवत्। अनाकारोपयोगे आद्या [ एव ] नान्ये १२, आहारका गतिवत्, अनाहारकाश्चापान्तरालगतौ आद्या अपरे च सम्भवन्ति, प्रतिपतितसम्यक्त्वानां तिर्यङ्मनुष्येभ्यो देवनारकत्वेनोत्पद्यमानानामवधेः प्रतिपत्तेरपि सम्भवात् १३, भाषकपरीत्तद्वारे प्राग्वत् १४-१५, पञ्चिः पर्याप्तिभिर्ये पर्याप्तास्ते आद्या सन्ति अन्ये भाज्याः, अपर्याप्तका अपि षड्पर्याप्त्यपेक्षया करणापर्याप्तास्ते द्वे सम्भवन्ति १६, सूक्ष्मादीनि द्वाराणि ४ द्रव्यप्रमाणादीनि ८ च प्राग्वत्, उक्तमवधिज्ञानं, तच्चतुर्द्धा द्रव्यादिभेदात्, तत्र द्रव्यतोऽवधिज्ञानी जघन्यतोऽनन्तानि रूपिद्रव्याणि उत्कर्षतः सर्वाण्यपि रूपिद्रव्याणि जानाति पश्यति च, क्षेत्रतो जघन्यतोऽङ्गुलासङ्ख्येयभागं उत्कर्षतोऽलोके लोकप्रमाणमात्राणि सङ्ख्यातीतानि खण्डानि, कालतो जघन्यतोऽसङ्ख्येयभागमावलिकाया उत्कर्षतोऽसङ्ख्येया उत्सर्पिण्यवसर्पिणीः, भावतो जघन्यतोऽनन्तान् भावान् सर्वभावानां चानन्तभागं जानाति पश्यति ॥ ६८ ॥ एष चावधिः ऋद्धिविशेषो वर्ण्यते, तत ऋद्धिप्रतिपादनावसाराच्छेषर्द्धयोऽपि वर्ण्यन्ते, ता एवाह—

**आमोसहि विप्पोसहि, खेलोसहि जल्लमोसही चेव। संभिन्नसो उज्जुमइ, सव्वोसहि चेव बोद्धव्वो ॥ ६९ ॥**

**चारणआसीविस, केवली य मणनाणिणो य पुव्वधरा। अरहंत चक्कवट्टी, बलदेवा वासुदेवा य ॥ ७० ॥**

आमर्षणमामर्षः—संस्पर्शनं, स एवौषधिर्यस्यासावामर्षौषधिः, करादिसंस्पर्शनमात्रादेव व्याध्यपनयनसमर्थः, लब्धिलब्धिमतोरभेदोपचारात्साधुरेवामर्षौषधिर्लब्धिरित्यर्थः, एवं शेषपदेष्वपि भावना कार्या। तथा मूत्रस्य पुरीषस्य वाऽवयवो विप्रुड् इत्युच्यते, अन्ये त्वाहुर्विडिति विष्टा प्र( प्रु ) इति प्रश्रवणं, ते औषधिर्यस्यासौ विप्रुडौषधिः, तथा खेलः—श्लेष्मा जल्लो—मलः,

सुगन्धाश्चैते भवन्ति विडादयस्तल्लब्धिमतां, इयमत्र भावना—इहामर्षौषधिलब्धिः कस्यापि शरीरैकदेशे समुत्पद्यते, कस्यापि सर्वस्मिन् शरीरे, तेनात्मानं परं वा यदा व्याध्यपगमबुद्ध्या परामृशति तदा तदपगमो भवति, विडादिभिरपि लब्धिमन्तो यदात्मानं परं वा रोगापनयनबुद्ध्या परामृशति तदा तद्रोगापगमः। तथा यः सर्वैरपि शरीरदेशैः शृणोति स सम्भिन्नश्रोताः, यद्वा श्रोतांसि—इन्द्रियाणि सम्भिन्नान्येकैकशः सर्वविषयैर्यस्य स सम्भिन्नश्रोताः—एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विषयान् योऽवगच्छति स[सम्भिन्नश्रोता]इत्यर्थः, यद्वा श्रोतांसि—इन्द्रियाणि सम्भिन्नानि—परस्परत एकरूपतामापन्नानि यस्य स तथा, अथवा द्वादशयोजनविस्तृतस्य चक्रवर्त्तिकटकस्य युगपत् ब्रुवाणस्य तत्तूर्यसङ्घातस्य वा युगपदास्फाल्यमानस्य सम्भिन्नान् शब्दान् शृणोति स तथा। एवं च सम्भिन्नश्रोतृत्वमपि लब्धिरेव। तथा ऋज्वी—प्रायो घटादिमात्रसामान्यग्राहिणी मतिः ऋजुमतिः—विपुल[मति]मनःपर्यायज्ञानापेक्षया किञ्चिदविशुद्धतरं मनःपर्यायज्ञानमेवेत्यर्थः। तथा सर्व एव विण्मूत्रकेशनखादयोऽवयवाः सुरभयो व्याध्यपनयनसमर्थत्वादौषधयो यस्यासौ सर्वौषधिः, अथवा सर्वा—आमर्षौषध्यादिका औषधयो यस्यैकस्यापि साधोः स (सर्वौषधिः) एवमेते ऋद्धिविशेषा बोद्धव्याः॥ ६९॥ अतिशायिगमनागमनलब्धिसम्पन्नाश्चारणाः ते च द्विधा—जङ्घाचारणा विद्याचारणाश्च, ये चारित्रतपोविशेषप्रभावतः समुद्भूतातिशय(शायि)गमनागमनलब्धिसम्पन्नास्ते जङ्घाचारणाः, ते च प्रथमोत्पातेन त्रयोदशं रुचकद्वीपं यान्ति वलन्तः प्रथमोत्पातेन नन्दीश्वरे द्वितीयेन यतो गतास्तत्राऽऽयान्ति, ऊर्द्ध्वमेकेनैव मेरुशिरसि पाण्डुकवनं वलन्त एकेन नन्दनवनं द्वितीयेन स्वस्थानं, तेषां हि चारित्रातिशयप्रभावतो भवति, लब्धिरपि हीयते ततो वलन्तो द्वाभ्यामुत्पाताभ्यां स्वस्थानं यान्तीति। ये पुनर्विद्यावशतः समुत्पन्नगमनागमनलब्धयस्ते विद्याचारणाः, ते चैकोत्पातेन मानुषो-

त्तरं द्वितीयेन नन्दीश्वरं यान्ति, वलन्तः एकेनैव स्वस्थानं, ऊर्द्ध्वमेकेन नन्दनं द्वितीयेन पाण्डुकं वलन्त एकेनैव स्वस्थानं, ते रविकरानपि स्वीकृत्य गच्छन्ति, जङ्घाचारणास्त्वेवमेव विद्याचारणो हि विद्यावशाद्भवति, विद्या च परिशील्यमाना स्फुटा स्फुटतरोपजायते, ततः प्रतिनिवर्त्तमानस्य शक्त्यतिशयसम्भवादेकेनैवोत्पातेन स्वस्थानमायान्ति । तथा आश्यो दंष्ट्रास्तासु विषं येषां ते आशीविषाः, ते द्विधा—जातितः कर्मतश्च, जातितो वृश्चिकमण्डूकोरगमनुष्यजातयः । वृश्चिकविषं हि उत्कर्षतो [अर्द्ध] भरतक्षेत्रप्रमाणं शरीरं व्याप्नोति, मण्डूकविषमपि भरतक्षेत्रप्रमाणं[ भुजङ्गमविषं जम्बूद्वीपप्रमाणं, मनुष्यविषं समयक्षेत्रप्रमाणं ], कर्मतश्च पञ्चेन्द्रियतिर्यग्योनयो मनुष्याः, देवाश्चासहस्रारात्, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकादिसाध्यां क्रियां कुर्वन्ति, शापप्रदानादिना परं व्यापादयन्तीति भावः। देवास्त्वपर्याप्तावस्थायां तच्छक्तिमन्तो ज्ञेयाः, ते हि पूर्वं नरभवे समुपार्जिताशीविषलब्धयः [सहस्रारान्तदेवेष्वभिनवोत्पन्ना अपर्याप्तावस्थायां प्राग्भविकाशीविषलब्धि] संस्कारादाशीविषलब्धिमन्तो व्यवह्रियन्ते, ततः परं तु पर्याप्तावस्थायां संस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः, तेऽपि शापादिना परं व्यापादयन्ति तथा (तथापि) न लब्धिव्यपदेशः, भवप्रत्ययतस्तथारूपसामर्थ्यस्य सर्वसाधारणत्वात्, गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरिति प्रसिद्धं । केवलिनश्च प्रसिद्धाः, मनोज्ञानिन इति मनःपयार्य [ ज्ञानिनः, मनःपर्याय ] ज्ञानं विपुलमतिरूपं गृह्यन्ते ऋजुमतिरूपस्य प्रागेव गृहीतत्वात् तत्र, विपुलं—विशेषोपेतं वस्तु मन्यते—गृह्णातीत्यर्थः। पूर्वाणि धारयन्ति पूर्वधरा—दशचतुर्दशपूर्वविदः, अर्हन्तश्चक्रवर्तिनो वलदेवा वासुदेवाश्च प्रसिद्धा एव, एते हि सर्वे चारणादयो लब्धिविशेषाः ॥ ७० ॥ इह चार्हत्त्वं चक्रवर्तित्वं वासुदेवत्वं च ऋद्धयः प्रतिपादितास्तत्र तदतिशयप्रतिपादनार्थं गाथापञ्चकमाह—

सोलस रायसहस्सा, सव्वबलेणं तु संकलनिबद्धं । अंछंति वासुदेवं, अगडतडंमी ठियं संतं ॥ ७१ ॥
घित्तूण संकलं सो वामगहत्थेण अंछमाणाणं । भुंजिज्ज व लिंपिज्ज व महुमहणं ते न चायंति ॥ ७२ ॥
दोसोला बत्तीसा, सव्वबलेणं तु संकलनिबद्धं । अंछंति चक्कवट्टिं, अगडतडंमी ठियं संतं ॥ ७३ ॥
घित्तूण संकलं सो, वामगहत्थेण अंछमाणाणं । भुंजिज्ज व लिंपिज्ज व, चक्कहरं ते न चायंति ॥ ७४ ॥
जं केसवस्स उ बलं, तं दुगुणं होइ चक्कवट्टिस्स । तत्तो बला बलवगा, अपरिमियबला जिणवरिंदा ॥ ७५ ॥

षोडश राजसहस्राणि सर्वबलेन हस्त्यश्वरथपदातिरूपेण समन्वितानि श्रृङ्खलानिबद्धं 'अंछंति' देशीवचनमेतत् आकर्षन्ति वासुदेवं अगडतटे–कूपतटे स्थितं सन्तं ॥ ७१ ॥ गृहीत्वा श्रृङ्खलामसौ वामहस्तेन 'अंछमाणाणं' ति आकर्षतां, भुञ्जीत वीटकादि विलिम्पेद्वा न पुनस्ते मधुमथनं शक्नुवन्ति आक्रष्टुमिति वाक्यशेषः ॥ ७२ ॥ द्वौ षोडशकौ इत्यभिधानं वासुदेवात् चक्रवर्त्तिनो द्विगुणर्द्धिख्यापनार्थं, राजसहस्राणीति गम्यते, शेषं सुगमं ॥ ७३ ॥ पूर्ववत् ॥ ७४ ॥ यत्केशवस्य तु बलं तद् द्विगुणं भवति चक्रवर्त्तिनः, ततः शेषबलात् 'बला'बलदेवा बलवन्तः, केशवबलापेक्षया त्वर्द्धबलाः, निरवशेषवीर्यान्तरायक्षयादपरिमितं बलं येषां तेऽपरिमितबला जिनवरेन्द्राः, अथवा ततश्चक्रवर्त्तिबलाद्बलवन्ता जिनवरेन्द्राः, कियता बलेनेत्याह–अपरिमितबला इति । तदेवमुक्ता लब्धयः । एताश्चान्यासामपि क्षीरास्रवमध्वास्रवसर्पिरास्रवकोष्ठबुद्धि-बीजबुद्धिपदानुसारित्वाक्षीणमहासनत्वादिलब्धीनामुपलक्षणं, तेन ता अपि प्रतिपत्तव्याः, तत्र पुण्ड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्द्धार्द्धक्रमेण दीयते यावदेवमेकस्याः पीतगोक्षीराया गावः क्षीरं, तत्किल चातुरक्यमित्यागमे गीयते, तद्यथोपभुज्यमान-

मतीव मनःशरीरप्रह्लादहेतुरुपजायते तथा यद्वचनमाकर्ण्यमानं मनःशरीरसुखोत्पादनाय प्रभवति ते क्षीराश्रवाः, क्षीरमिव येषां वचनमासमन्तात् स्रवन्तीति क्षीरास्रवाः, एवमग्रेऽपि। मध्वपि किमपि अतिशायि शर्करादिमधुरद्रव्यं द्रष्टव्यं, सर्पिर्घृतं, कोष्ठ इव धान्यं येषां बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति न किमपि तयोः कालान्तरेऽपि गलति ते कोष्ठबुद्धयः, कोष्ठ इव बुद्धिर्येषां ते, एकमपि सूत्रपदमवधार्य शेषमश्रुतमपि तदवस्थमेव ये श्रुतमवगाहते ते पदानुसारिबुद्धयः, येषां पुनर्बुद्धिरेकमर्थपदं तथाविधमनुसृत्य शेषमश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते [ते] बीजबुद्धयः, येषां भिक्षा अन्यैर्बहुभिरप्युपभुज्यमाना न निष्ठां याति किन्तु तैरेव जिमितैस्तेऽक्षीणमहानसाः आदिग्रहणाद्गणधरत्वपुलाकत्वतैजससमुद्घाताहारकशरीरकरणादिलब्धयो वेदितव्याः। अर्हत्त्व १ बलदेवत्व २ वासुदेवत्व ३ चक्रित्व ४ सम्भिन्नश्रोतश्च (स्त्व) ५ जङ्घाचरणत्व ६ पूर्वधरत्वानि ७ इत्येताः सप्त लब्धयो भव्यस्त्रीणां नोपजायन्ते, अभव्यपुरुषाणां ऋजुमतित्वविपुलमतित्वलब्धी अपि, अभव्यस्त्रीणां क्षीरास्रवमध्वास्रव [ सर्पिरास्रव ] लब्धयोऽपि, शेषास्तु भवन्तीति सामर्थ्यादवसीयते। अन्ये त्वेवमाहुः— आमर्पौषधिः १ खेलौषधिः १ जल्लौषधिः ३ विप्रुट्प्रश्रवणौषधिः ४ सर्वौषधिः ५ कोष्ठबुद्धिः ६ बीजबुद्धिः ७ पदानुसारी ८ सम्भिन्नश्रोता ९ ऋजुमतिः १० विपुलमतिः ११ क्षीरास्रवः १२ अक्षीणमहानसत्वं १३ वैक्रियत्वं १४ जङ्घाचारणत्वं १५ विद्याधरत्वं १६ अर्हत्त्वं १७ चक्रित्वं १८ बलदेवत्वं १९ वासुदेवत्वं २० एता विंशतिरेव लब्धयो भव्यपुरुषाणां भवन्ति, एतदसम्यक् अन्यासामपि भवसिद्धिकयोग्यानां गणधरत्वपुलाकत्वादिलब्धीनां सद्भावात्, नाप्येता भवसिद्धिकयोग्या एव-वैक्रियविद्याधरत्वलब्धीनामामर्पौषध्यादिलब्धीनामपि चाऽभव्यानामपि सम्भवात् ॥ ७५ ॥ इदानीं मनःपर्यायज्ञानं लब्धि,

निरूपणायां सामान्यतोऽपदिष्टमपि विषयस्वाम्यादिविशेषोपदर्शनाय ज्ञानपञ्चकक्रमायातमभिधित्सुराह—

मणपज्जवनाणं पुण, जणमणपरिचिन्तियत्थपायडणं । माणुसखित्तनिबद्धं, गुणपच्चइयं चरित्तवओ ॥ ७६ ॥

मनःपर्यायज्ञानं प्राग्निरूपितशब्दार्थं, पुनः विशेषणार्थः, स चावधिज्ञानादिदं स्वाम्यादिभेदाद्भिन्नमिति विशेषयति, अवधिज्ञानमविरतसम्यग्दृष्टेरपि भवति, मनःपर्यायज्ञानं पुनरप्रमत्तसंयतस्यामर्षौषध्याद्यन्यतमर्द्धिप्राप्तस्यैव, तच्च द्रव्यतः संज्ञिमनोद्रव्यविषयं क्षेत्रतो मनुष्यक्षेत्रगोचरं कालतोऽतीतानागतपल्योपमाऽसङ्ख्येयभागविषयं भावतो मनोगतानन्तपर्यायालम्बनं, ततोऽवधेर्भिन्नं, जनानां मनांसि जनमनांसि तैः परिचिन्तितश्चासावर्थश्च स, तथा स प्रकट्यते—प्रकाश्यतेऽनेनेति जनमनःपरिचिन्तितार्थप्रकटनं, मानुषक्षेत्रनिबद्धं, न तद्बहिर्व्यवस्थितप्राणिमनोद्रव्यविषयमिति भावः, गुणाः—क्षान्त्यादयः ते प्रत्ययाः—कारणानि यस्य तद्गुणप्रत्ययं, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवतोऽप्रमत्तसंयतस्यैवेदं भवति । इदं च सामान्यतः चतुर्विधं प्रज्ञप्तं, तद्यथा—द्रव्यतो ऋजुमतिरनन्तानन्तप्रादेशिकान्मनोभावपरिणतपुद्गलस्कन्धान् जानाति, तानेव विपुलमतिर्विशुद्धतरान् १ क्षेत्रत ऋजुमतिरधो अधोलौकिकग्रामेषु यः सर्वाधस्तन आकाशप्रदेशप्रतरस्तं यावत्, ऊर्द्ध्वं यावत् ज्योतिश्चक्रस्योपरितलं, तिर्यग् यावदर्द्धतृतीयद्वीपसमुद्रेषु अर्द्धतृतीयाङ्गुलहीनेषु संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तानां मनोगतान् भावान् जानाति, विपुलमतिरर्द्धतृतीयैरङ्गुलैरभ्यधिकेषु २, कालत ऋजुमतिरतीतमनागतं च पल्योपमस्यासङ्ख्येयं भागं, विपुलमतिरधिकतरं विशुद्धतरं च ३, भावत ऋजुमतिरनन्तान् भावान् विपुलमतिस्तानेवाभ्यधिकान् ४, इदं च मनःपर्यायज्ञानं मनोद्रव्याणां पर्यायानेव गृह्णदुपजायते, पर्यायाश्च विशेषाः, विशेषग्राहकं च ज्ञानमतो मनःपर्यायज्ञानमेव भवति न तु मनः-

पर्यायदर्शनमिति। मनःपर्यायज्ञानी च साक्षान्मनोद्रव्यपर्यायानेव पश्यति, बाह्यास्तु तद्विषयभावापन्नाननुमानतो जानाति, कुतः?, मनसो मूर्त्तामूर्त्तद्रव्यालम्बनत्वात् छद्मस्थस्य चामूर्त्तदर्शनविरोधात् । सत्पदप्ररूपणादयस्त्ववधिज्ञानवदवगन्तव्याः, नानात्वं चानाहारकापर्याप्तकौ न च प्रतिपद्यमानकौ नापि पूर्वप्रतिपन्नाविति ॥ ७६ ॥ अथावसरप्राप्तं केवलज्ञानं प्रतिपादयन्नाह—

अह सव्वदव्वपरिणामभावविण्णत्तिकारणमणंतं। सासयमप्पडिवाइ, एगविहं केवलण्णाणं ॥ ७७ ॥

अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेष्विति वचनादिहाऽथशब्द उपन्यासार्थः, सर्वाणि च तानि द्रव्याणि च—जीवादीनि तेषां परिणामाः—प्रयोगविस्रसोभयजन्या उत्पादादयः पर्यायाः सर्वद्रव्यपरिणामास्तेषां भावः—सत्ता स्वलक्षणं [वा]स्वं स्वमसाधारणं रूपमित्यर्थः, तस्य विशेषेण ज्ञपनं लब्धिर्विज्ञप्तिः, विज्ञानं वा विज्ञप्तिः परिच्छेद इत्यर्थः, तस्याः कारणं, हेतुः सर्वद्रव्यपरिणामभावविज्ञप्तिकारणं केवलज्ञानमिति सम्बध्यते तच्च ज्ञेयानन्तत्वादनन्तं । तथा शश्वद्भवं शाश्वतं, सदोपयोगवदिति भावार्थः। न प्रतिपाति अप्रतिपाति, सदावस्थायीति । ननु यच्छाश्वतं तदप्रतिपात्येव ततः किमनेन विशेषणेन?, उच्यते, शाश्वतं नामानवरतं भवदुच्यते, तच्च कियत्कालं भवति, यावद्भवति तावन्निरन्तरभवनाच्छाश्वतं, ततः सकलकालभावप्रतिपत्त्यर्थमप्रतिपातिविशेषणोपादानं, एष तात्पर्यार्थः—अनवरतं सकलकालं भवति, अथवा एकपदव्यभिचारेऽपि विशेषणविशेष्यभावो भवतीति ज्ञापनार्थं विशेषणद्वयोपादानम्, तथाहि—शाश्वतमप्रतिपात्येव भवति, अप्रतिपाति तु शाश्वतमशाश्वतं च, यथाऽवधिज्ञानं, एकविधमेकप्रकारं तदावरणक्षयस्यैकरूपत्वात् ॥ ७७ ॥ उपकार्यकृतोपकारानपेक्षं सकलसत्त्वानुग्रहाय सवितेव प्रकाशं देशनामातनोति, तत्राव्युत्पन्नविनेयानां केषाञ्चिदेवमाशङ्का भवेत्—तीर्थकृतोऽपि तावद्द्रव्यश्रुतं

ध्वनिरूपं विद्यते, द्रव्यश्रुतं च भावश्रुतपूर्वकं, ततो भगवानपि श्रुतज्ञानीति, तदाशङ्कापनोदार्थमाह—

केवलणाणेणऽत्थे, णाउं जे तत्थ पण्णवणजोग्गे। ते भासइ तित्थयरो, वयजोग सुयं हवइ सेसं ॥ ७८ ॥

इह तीर्थकरः केवलज्ञानेनार्थान् धर्मास्तिकायादीन् मूर्त्तामूर्त्तान् अभिलाप्यानभिलाप्यान् ज्ञात्वा–विनिश्चित्य, केवलज्ञानेनैव ज्ञात्वा न तु श्रुतज्ञानेन, तस्य क्षायोपशमिकभावातिक्रमात्, सर्वक्षये देशक्षयाभावात्, ये तत्र तेषामर्थानां मध्ये प्रज्ञापनयोग्या अभिलाप्या इत्यर्थः तान् भाषते, नेतरान्, तानपि प्रज्ञापनायोग्यान् भाषते, न सर्वान्, तेषामनन्तत्वाद्वाचः क्रमवर्त्तित्वाच्चायुषः परिमितत्वाच्च भाषितुमशक्यत्वात्, किन्तु कतिपयानैवानन्तभागमात्रान् । तत्रापि तान्कतिपयानेव भाषते ग्राहकापेक्षया योग्यान्, तत्रापि यावन्मात्रे भणिते शेषं स्वयमभ्यूहितुमीष्टे तावन्मात्रं, न त्वभ्यूह्यमपि । तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, तस्य भाषापर्याप्त्यादिनामकर्मोदयनिबन्धनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च वाग्योगो भवति श्रुतं शेषमित्यप्रधानं द्रव्यश्रुतं, श्रोतॄणां भावश्रुतकारणतया द्रव्यश्रुतं व्यवह्रियते इति तात्पर्यार्थः, अन्ये त्वेवं पठन्ति 'वयजोग सुयं हवइ तेसिं' तत्रायमर्थः–तेषां श्रोतॄणां श्रुतकारणत्वात् वाग्योगः श्रुतं भवति, अथवा वाग्योगश्रुतं द्रव्यश्रुतमेवेति । तत्केवलज्ञानं स्वामिनमधिकृत्य द्विविधं, भवस्थकेवलज्ञानं सिद्धकेवलज्ञानं च, तत्र यन्मनुष्यभवेऽवस्थितस्य चतुर्ष्वघातिकर्मस्वक्षीणेषु केवलज्ञानं तद्भवस्थके०, यत्पुनरशेषेषु कर्मांशेष्वपगतेषु सिद्धत्वावस्थायां तत्सिद्धकेव०, आद्यं द्विविधं–सयोगिभवस्थकेव० अयोगिभवस्थके०, तत्र केवलज्ञानोत्पत्तेरारभ्य यावदद्यापि शैलेश्यवस्थां न प्रतिपद्यते तावत् सयोगि० भवस्थके० शैलेश्यवस्थायां तु अयोगि-

भवस्थके० । तत्र यत्सयोगिभवस्थकेवलज्ञानं तद्विविधं–प्रथमसमयसयोगिभवस्थकेवलज्ञानं १ अप्रथमसमयस० च २ । तत्र यस्मिन्समये केवलमुत्पन्नं तस्मिन्समये तत्प्रथमसमयस०, शेषेषु तु समयेषु शैलेशीप्रतिपत्तेरर्वाक् वर्त्तमानमप्रथमसमयसयोगिभ०, अथवाऽन्यथा द्विविधं चरमसमयसयोगिभवस्थकेवलज्ञानं १, अचरमसमयसयोगिभ० २ । तत्र यत्सयोगित्वावस्थायाश्चरमसमये वर्त्तमानं तच्चरमस० १, ततः प्राक् शेषेषु समयेषु वर्त्तमानमचरमस० २, तथा अयोगिभवस्थकेवलज्ञानमपि द्विविधं, प्रथमसमयायोगिभ० १ अप्रथमस० २ च, अथवा चरमसमयायोगिभ० १ अचरमसमयायोगिभ० २, प्रथमाप्रथमचरमाचरमसमयभावना प्रागुक्तानुसारेण स्वयमभ्यूह्या । सिद्धकेवलज्ञानं द्विविधं–अनन्तरसिद्धकेवलज्ञानं परम्परसिद्धकेवलज्ञानं च, तत्र यस्मिन्समये सिद्धो जायते तस्मिन्समये वर्त्तमानमनन्तरसिद्धकेवलज्ञानं १ सिद्धत्वद्वितीयादिसमयेषु वर्त्तमानं परम्परसिद्धके० २, तत्रानन्तरसिद्धकेवलज्ञानमुपाधिभेदात्पञ्चदशविधं प्रज्ञप्तं, तद्यथा–तीर्थसिद्धकेवलज्ञानं १ अतीर्थसिद्धके० २ तीर्थकरसिद्धके० ३ अतीर्थकरसिद्धके० ४ स्वयम्बुद्धसिद्धके० ५ प्रत्येकबुद्धसि० ६ बुद्धबोधितसि० ७ स्त्रीलिङ्गसिद्धके० ८ पुरुषलिङ्गसिद्ध० ९ नपुंसकलिङ्गसि० १० स्वलिङ्गसिद्धके० ११ अन्यलिङ्गसिद्ध० १२ गृहिलिङ्गसि० १३ एकसिद्धके० १४ अनेकसिद्धके० १५ । तत्र ये तीर्थकराणां तीर्थे वर्त्तमाने सिद्धास्तेषां यत्केवलज्ञानं तत्तीर्थसि० १, ये पुनस्तीर्थकराणां तीर्थेऽनुत्पन्ने व्यवच्छिन्ने वा सिद्धास्तेषामतीर्थसिद्ध० २, तीर्थकराः सन्तो ये सिद्धास्तेषां तीर्थ[कर]सि० ३, शेषाणामतीर्थकरसि० ४, स्वयम्बुद्धाः सन्तो ये सिद्धास्तेषां स्वयम्बुद्धसिद्ध० ५, प्रत्येकबुद्धाः सन्तो ये सिद्धास्तेषां प्रत्ये० ६ । ननु स्वयम्बुद्धप्रत्येकबुद्धानां कः प्रतिविशेषः?, उच्यते, बोध्युपधिश्रुतलिङ्गकृतः, तथाहि–स्वयम्बुद्धा बाह्यप्रत्ययमन्तरेणैव बुध्यन्ते, निजजाति-

अनन्तर-सिद्धाः

स्मरणादिना बुद्धाः स्वयम्बुद्धाः, ते च द्विधा—तीर्थकरास्तद्व्यतिरिक्ताश्च, तेषां चोपधिर्द्वादशविध एव पात्रकादिकः, पूर्वाधीतं श्रुतं भवति वा न वा, यदि स्यात्ततो देवता लिङ्गं प्रयच्छति गुरुसन्निधौ वा गत्वा प्रतिपद्यते, यदि च एकाकिविचरणसमर्थः इच्छा च तस्य तथारूपा जायते तत एकाकी विहरति अन्यथा गच्छवासेऽवतिष्ठते । अथ पूर्वाधीतं श्रुतं न स्यात्तर्हि नियमाद् गुरुसन्निधौ गत्वा लिङ्गं प्रतिपद्यते, गच्छं चावश्यं न मुञ्चति । प्रत्येकबुद्धास्तु बाह्यप्रत्ययमपेक्ष्य बुध्यन्ते, प्रत्येकं वृषभादिकं कारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धाः, तथा च श्रूयते बाह्यप्रत्ययसापेक्षा करकण्ड्वादीनां बोधिः, बहिःप्रत्ययमपेक्ष्य ते च बुद्धाः सन्तो नियमतः प्रत्येकमेव विहरन्ति, न गच्छवासिनः । तेषां चोपधिर्द्विधा—जघन्यत उत्कर्षतश्च, तत्र जघन्यतो द्विविधः उत्कर्षतो नवविधः प्रावरणवर्जः, पूर्वाधीतं श्रुतं नियमतो भवति, तच्च जघन्यत एकादशाङ्गानि उत्कर्षतः किञ्चिन्न्यूनानि दशपूर्वाणि, तथा लिङ्गं देवता प्रयच्छति लिङ्गरहितो वा कदाचिद्भवतीतिविशेषः । तथा बुद्धैराचार्यादिभिः बोधितस्य यत्केवलज्ञानं तद्बुद्धबोधितके० ७ स्त्रिया लिङ्गं स्त्रीलिङ्गं स्त्रीत्वस्योपलक्षणं, तच्च त्रिधा, तद्यथा—वेदः शरीरनिर्वृत्तिः नेपथ्यं च, तत्रेह शरीरनिर्वृत्त्या प्रयोजनं, न वेदनेपथ्याभ्यां, वेदे सति सिद्धत्वाभावात्, नेपथ्यस्य चाप्रमाणत्वात्, तस्मिन् स्त्रीलिङ्गे वर्त्तमाना ये सिद्धास्तेषां केवलज्ञानं स्त्रीलिङ्गसि० ८, एवं पुरुषलिङ्गसि० ९, नपुंसकलिङ्गसिद्धकेवलज्ञानेऽ(नम)पि १०, स्वलिङ्गे—रजोहरणादौ सिद्धानां केवलज्ञानं स्वलिङ्गसि० ११, ये अन्यस्मिन् लिङ्गे वर्त्तमानाः सम्यक्त्वं प्रतिपद्य भावनाविशेषात्केवलज्ञानमुत्पाद्य केवलोत्पत्तिसमकालमेव कालं कुर्वन्ति तेषामन्यलिङ्गसि० १२, यदि पुनस्ते अन्यलिङ्गस्थिताः केवलमुत्पाद्याऽऽत्मनोऽपरिक्षीणमायुः पश्यन्ति ततः साधुलिङ्गमेव गृह्णन्ति, गृहिलिङ्गे स्थिताः सन्तो ये सिद्धास्तेषां गृहिलिङ्गसि० १३, यस्मिन्समये

विवक्षितजीवः सिद्धस्तस्मिन् समये यद्यन्यः कोऽपि न सिद्धस्तस्य एकसिद्धके० १४, एकस्मिन् समयेऽनेकेषां सिद्धानामनेकसिद्धके० १५, एकस्मिंश्च समयेऽनेके सिद्ध्यन्त उत्कर्षतोऽष्टोत्तरशतं, यत उक्तं–"बत्तीसा अडयाला सट्ठी बावत्तरी अ बोद्धव्वा । चुलसीइ छन्नउई दुरहिअमट्ठुत्तरसयं च ॥ १ ॥" अस्या व्याख्या–अष्टौ समयान् यावन्निरन्तरमेकादयो द्वात्रिंशत्पर्यन्ताः सिद्ध्यन्तः प्राप्यन्ते, प्रथमसमये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्सिद्ध्यन्तः प्राप्यन्ते, द्वितीयेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्, एवं यावदष्टमेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतः द्वात्रिंशत्, ततः परमवश्यमन्तरं । तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिद्ध्यन्तः सप्त समयान् यावत् प्राप्यन्ते, परतो नियमादन्तरं, तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः षट् समयान् यावत्, परतोऽन्तरमेव । तथैकषष्ट्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः पञ्च समयान् यावत्, ततोऽन्तरमेव । एवमेव त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ताश्चतुरः समयान् यावत्, पञ्चाशीत्यादयः षण्णवतिपर्यन्तास्त्रीन् समयान्, सप्तनवत्यादयो द्व्युत्तरशतादयो(शतपर्यन्ता द्वौ समयौ, त्र्युत्तरशतादयो) अष्टोत्तरशतपर्यन्ताः सिद्ध्यन्त एकमेव समयं यावत् प्राप्यन्ते न द्वित्रादिसमयानीति । परम्परसिद्धकेवलज्ञानमनेकविधं प्रज्ञप्तं, तद्यथा–अप्रथमसमयसिद्धकेवलज्ञानं, सिद्धत्वद्वितीयसमयकेवलमिति भावः, द्विसमयसिद्धकेवलज्ञानं, सिद्धत्वतृतीयसमयकेवलमित्यर्थः, एवं त्रिसमयसिद्धके० चतुःसमयसिद्धके० यावत्सङ्ख्येयसमयसिद्धके० असङ्ख्येयसमयसिद्धके० अनन्तसमयसिद्धकेवलज्ञानं । तदेवमुक्तं केवलज्ञानस्वरूपं, अथास्य गत्यादिद्वारविषया सत्पदप्ररूपणता द्रव्यप्रमाणादीनि च विभाव्यन्ते, तत्र सत्पदप्ररूपणतायां गत्यादीनि विंशतिद्वाराणि अङ्गीकृत्य यथाक्रमं सिद्धिगतौ मनुष्यगतौ च केवल-

ज्ञानं १ [नोइन्द्रिय] अतीन्द्रियेषु २ त्रसकायाकाययोः ३ सयोगायोगयोः ४ अवेदेषु ५ अकषायेषु ६ शुक्ललेश्यालेश्ययोः ७ सम्यग्दृष्टिषु ८ केवलज्ञानिषु ९ केवलदर्शनिषु १० संयतेषु तथा नोसंयता नोऽसंयताश्चेति नोसंयतासंयताः तेषु च ११ । एवमग्रेऽपि तेऽभ्यूह्याः, साकारानाकारोपयोगयोः १२ आहारकानाहारकयोः १३ भाषकाभाषकयोः १४ परीत्तेषु नोपरीत्तापरित्तेषु च १५ पर्याप्तेषु नोपर्याप्तापर्याप्तेषु च १६ वादरेषु नोसूक्ष्मवादरेषु च १७ [संज्ञिषु] नोसंज्ञ्यसंज्ञिषु १८ भव्येषु नोभव्याभव्येषु च १९ चरमेषु, भवस्थकेवलिनां चरमत्वात्, अचरमेषु च सिद्धानां भवान्तरप्राप्त्यभावादचरमत्वात् २०, पूर्वप्रतिपन्नप्रतिपद्यमानकयोजना तु स्वधिया कर्त्तव्या १ । द्रव्यप्रमाणद्वारे प्रतिपद्यमानकानाश्रित्योत्कर्षतोऽष्टोत्तरशतं केवलिनां प्राप्यते, पूर्वप्रतिपन्नाश्च जघन्यत उत्कर्षतश्च कोटीपृथक्त्वप्रमाणा भवस्थकेवलिनः प्राप्यन्ते, सिद्धा अनन्ताः २, क्षेत्रस्पर्शनाद्वारयोस्तु जघन्यतो लोकस्यासङ्ख्येयभागे केवली लभ्यते, उत्कर्षतस्तु सर्वलोके ३–४, कालद्वारे साद्यपर्यवसितं कालं सर्वोऽपि केवली भवति ५, अन्तरं तु केवलज्ञानस्य न विद्यते प्रतिपाताभावात् ६, भागद्वारं मतिज्ञानवत् ७, भावद्वारे क्षायिके भावे ८, अल्पबहुत्वद्वारं मतिज्ञानिवत् ९ । तच्च केवलज्ञानं समासतश्चतुर्विधं प्रज्ञप्तं, द्रव्यादिभेदात्, तत्र द्रव्यतः सर्वद्रव्याणि जानाति पश्यति च केवली, क्षेत्रतः सर्वक्षेत्रं, कालतः सर्वकालं, भावतः सर्वान् भावान् ॥ ७८ ॥ उक्तं केवलज्ञानं, तदभिधानाच्च नन्दी, तदभिधानान्मङ्गलमिति । तदेवं मङ्गलस्वरूपाभिधानद्वारेण ज्ञानपञ्चकमुक्तं, इह तु प्रकृते श्रुतज्ञानाधिकारः, तथा चाह—

इत्थं पुण अहिगारो, सुयनाणेणं जओ सुएणं तु । सेसाणमप्पणोऽविअ, अणुओगु पईवदिट्ठंतो ॥ ७९ ॥

अत्र पुनः (श्रुतज्ञानेन) प्रकृतेऽधिकारः श्रुतज्ञानेनैव शेषाणां मत्यादिज्ञानानां आत्मनोऽपि चानुयोगो व्याख्यानं क्रियते

इति वाक्यशेषः स्वपरप्रकाशकत्वात्तस्य, तथा चात्र प्रदीपदृष्टान्तः, यथा प्रदीपः स्वपरप्रकाशकत्वात्स एव हि गृहेऽधिक्रियते एवमिहापि श्रुतज्ञानमिति भावः ॥ ७९ ॥ इति पीठिका समाप्ता ॥

सम्प्रति मङ्गलसाध्यः प्रकृतोऽनुयोग उपदर्श्यते—स च स्वपरप्रकाशकत्वात् गुर्वायत्तत्वाच्च श्रुतज्ञानस्य । ननु आवश्यकस्यानुयोगः प्रकृत एव, पुनः श्रुतज्ञानस्येत्ययुक्तं, उच्यते, आवश्यकमिदं श्रुतान्तर्गतमित्येतदर्थप्रकाशकत्वादेतद्वाक्यस्येत्यदोषः, ननु यदि आवश्यकस्यानुयोगस्तदाऽऽवश्यकं किं अङ्गं १, अङ्गानि २, श्रुतस्कन्धः ३, श्रुतस्कन्धाः ४, अध्ययनं ५, अध्ययनानि ६, उद्देशकः ७, उद्देशका वा ८?, उच्यते, आवश्यकं श्रुतस्कन्धोऽध्ययनानि च, न शेषा विकल्पाः । ननु नन्दीव्याख्याने अङ्गानङ्गप्रविष्टश्रुतनिरूपणायामनङ्गतास्याभिहितैव ततश्च किमङ्गमङ्गानीत्याद्याशङ्कानुपपत्तिरिति, उच्यते, न अवश्यं शास्त्रादौ नन्द्यध्ययनार्थकथनं कर्त्तव्यमिति तद्व्याख्याऽनियमप्रदर्शनार्थत्वाददोषः, अकृते चाऽऽशङ्का सम्भवति । ननु मङ्गलार्थं शास्त्रादाववश्यमेव नन्द्यध्ययनात् कथमनियम इति, उच्यते, ज्ञानाभिधानमात्रस्यैव मङ्गलत्वान्नावश्यमवयवार्थाभिधानं कर्त्तव्यं, तदकरणे चाशङ्का सम्भवति, किञ्च—आवश्यकव्याख्यानारम्भे शास्त्रान्तरव्याख्यानारम्भोऽयुक्त एव, शास्त्रान्तरं च नन्दी, पृथक्श्रुतस्कन्धत्वात्, ननु यद्येवं तदिहावश्यकश्रुतस्कन्धानुयोगारम्भे किमिति तदनुयोग इति, उच्यते, शिष्यानुग्रहार्थं, न त्वयं नियम इति, अपवादप्रदर्शनार्थं वा, एतदुक्तं भवति—कदाचित्पुरुषाद्यपेक्षया उत्क्रमेणापि अन्यारम्भेऽपि चान्यद्व्याख्यायत इति । तत्र शास्त्राभिधानं आवश्यकश्रुतस्कन्धः, तद्भेदाश्चाध्ययनानि, तस्मादावश्यकं निक्षेप्तव्यं, श्रुतस्कन्धश्च । किञ्च—किमिदं शास्त्राभिधानं प्रदीपाभिधानवद्यथार्थमाहोस्वित्पलाशाभिधानवदयथार्थं उत डित्थाद्यभिधानवदनर्थकमेवेति परीक्ष्यं,

यदि च यथार्थं तत उपादेयं, ततः शास्त्राभिधानमेवालोच्यते । श्रमणादिभिरवश्यमुभयकालं कर्त्तव्यमित्यावश्यकं । यदि वा ज्ञानादिगुणकदम्बकं मोक्षो वा आ—समन्ताद्वश्यं क्रियतेऽनेनेत्यावश्यकं, यद्वा 'वस निवासे' गुणशून्यमात्मानमावासयति गुणैरिति आवासकं, गुणसान्निध्यमात्मनः करोति इति भावार्थः । तच्च नामादिचतुर्भेदाच्चतुर्विधं, तत्र यस्य जीवस्याजीवस्योभयस्य वावश्यकमिति नाम क्रियते तन्नामावश्यकं । तथा काष्ठकर्मादिषु अक्षवराटिकादिषु वा सद्भावस्थापनया [ असद्भावस्थापनया वा ] यदावश्यकमिति स्थाप्यते तत् स्थापनावश्यकं । द्रव्यावश्यकं द्विधा—आगमतो नोआगमतश्च, तत्राऽऽगमतो यस्यावश्यकमिति पदं शिक्षितं स्थितं जितं परिजितं नामसमं घोससमं अहीनाक्षरं अनत्यक्षरं अव्याविद्धाक्षरं अस्खलितं अमिलितं अव्यत्याम्रेडितं प्रतिपूर्णं प्रतिपूर्णघोषं कण्ठौष्ठविप्रमुक्तं वाचनोपगतं भवति स पुरुषो द्रव्यावश्यकं । तत्र शिक्षितं पठनक्रियया अन्तं नीतं १, तदेवाविस्मरणतश्चेतसि स्थितत्वात्स्थितं २, परावर्त्तनं कुर्वतः परेण वा क्वचित्पृष्टस्य यच्छीघ्रमागच्छति तज्जितं ३, अक्षरसङ्ख्यया पदसङ्ख्यया वा परिच्छिन्नं मितं ४, परि-समन्ताज्जितं परावर्त्तनं कुर्वतो यत्क्रमेणोत्क्रमेण वा समागच्छतीति भावः ५, नामसमं यथा कस्यचित्स्वनाम शिक्षितं स्थितं जितं परिजितं च भवति तथैव तदपीति भावः ६, यथा गुरुणाभिहिता घोषाः तथा यत्र शिष्येणापि सम्यगुच्चार्यन्ते तत् घोषसमं ७, एकेनाप्यक्षरेणाहीनमहीनाक्षरं ८, एकेनाप्यक्षरेणानधिकमनत्यक्षरं ९, तथा न व्याविद्धानि—विपर्यस्तरत्नमालागतरत्नानीव विपर्यस्तान्यक्षराणि यत्र तदव्याविद्धाक्षरं १० उपलशकलाद्याकुलभूभागे लाङ्गलमिव यन्न स्खलति तदस्खलितं ११ अनेकशास्त्रसम्बधीनि सूत्राण्येकत्र मीलयित्वा यत्पठ्यते तन्मिलितं यन्न तथा तदमीलितं १२, अव्यत्याम्रेडितमस्थानविरतिरहितं १३,

अत एव प्रतिपूर्णं हीनाधिकाक्षराभावात् १४, प्रतिपूर्णघोषं गुरुवत् सम्यगुदात्तादिघोषाणामुच्चारणात् १५, वाचनया प्रश्नेन परिवर्त्तनया धर्मकथया नानुप्रेक्षया उपगतं प्राप्तं वाचनोपगतं १७, शेषं सुगमं, नोआगमतो द्रव्यावश्यकं त्रिविधं-ज्ञशरीर-भव्यशरीरद्रव्यावश्यके २ पूर्ववत्, तद्व्यतिरिक्तं त्रिधा-लौकिकं १ कुप्रावचनिकं २ लोकोत्तरं च ३, तत्र ये इमे राजेश्वरतल-वरमाण्डलिकादयः प्रातरुत्थाय शरीरचिन्तामुखदन्तप्रक्षालनराजकार्यादि कुर्वन्ति तल्लौकिकं द्रव्यावश्यकं १, यः पुनश्चरक-प्रमुखाः परिव्राजकाः प्रातरुत्थाय स्कन्दादिदेवतागृहसम्मार्जनोपलेपनधूपदानादि कुर्वन्ति तत् कुप्रावचनिकं द्र० २, यत्पुनरेते श्रमणगुणमुक्तयोगिनः षड्जीवनिकायनिरनुकम्पा हया इवोद्दामानो गजा इव निरङ्कुशाः पाण्डुरपटप्रावरणा जिनानामनाज्ञया स्वच्छन्दसो विहृत्योभयकालमावश्यककरणायोपतिष्ठन्ते तल्लोकोत्तरं द्रव्यावश्यकं, भावशून्यत्वेनाभिप्रेतफलाभावात्। भावावश्यक-मपि द्विधा-आगमतो नोआगमतश्च, तत्रागमतो भावावश्यकमावश्यकज्ञाता उपयुक्तः, तदुपयोगानन्यत्वात्, अथवाऽऽवश्यकार्थो-पयोगपरिणाम एव; नोआगमतस्त्रिविधं-लौकिकादिभेदात्, तत्र यत्पूर्वाह्णे भारतव्याख्यानमपराह्णे रामायणव्याख्यानं तल्लौकिकं भावावश्यकं, यत्पुनरेते चरकादिपाषण्डस्था निजनिजदेवतास्मरणजापप्रमुखमनुष्ठानं कुर्वन्ति तत् कुप्रावचनिकं भावावश्यकं २, यत् पुनः श्रमणादिचतुर्विधः सङ्घ एकान्ते विशुद्धचित्त उभयकालं प्रतिक्रमणं करोति तल्लोकोत्तरं [ नोआगमतो ] भावावश्यकं ३; ज्ञानक्रियारूपोभयपरिणामात्मकत्वान्मिश्रवचनश्चात्र नोशब्दः, अनेनैव च लोकोत्तरेणेहाधिकारः, अस्य चामूनि एकार्थिकानि-आवश्यकं १, अवश्यकरणीयं २, ध्रुवनिग्रहो ३, विशुद्धिः ४, अध्ययनषट्कवर्गः ५, न्यायः ६ आराधना ७ मार्गः ८ इति, आवश्यक-शब्दव्युत्पत्तिप्रदर्शिका चेयं गाथा-'समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अंतो अहोनिसस्स य तम्हा आवस्सयं

नाम ॥ १ ॥ ( अनु. गा. ३ ) तथा श्रुतमपि चतुर्विधं नामादिभेदात्, तत्र नामस्थापने सुप्रतीते, द्रव्यश्रुतं द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता तत्र चानुपयुक्तः, नोआगमतस्त्रिविधं—ज्ञशरीरभव्यशरीरे प्राग्वत्, तद्व्यतिरिक्तं तु पुस्तकपत्रन्यस्तं, भावश्रुतं द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता उपयुक्तः, नोआगमतो द्विधा-लौकिकं लोकोत्तरं च, तत्राद्यं भारतरामायणादि, द्वितीयं द्वादशाङ्गं गणिपिटकं । आवश्यकं च नोआगमतो भावश्रुतं, नोशब्दोऽत्रैक[ देश ] वचनः, तस्य चेमान्येकार्थिकानि—श्रुतं १, सूत्रं २, ग्रन्थः ३ सिद्धान्तः ४ प्रवचनं ५ आज्ञा ६ वचनं ७ उपदेशः ८ प्रज्ञापना ९ आगमः १० इति । स्कन्धोऽपि चतुर्द्धा—तथैव, तत्राद्यभेदौ प्रतीतौ, द्रव्यस्कन्धो द्विधा, आगमादिभेदात्, तत्रागमतः प्राग्वत्, नोआगमतोऽपि प्राग्वत्त्रिधा, आद्यभेदौ प्रतीतौ, तद्व्यतिरिक्तस्त्रिविधः-सचित्तोऽचित्तो मिश्रश्च, सचित्तो द्विपदादिः, अचित्तो द्विप्रदेशिकादिः, मिश्रः सेनादेर्देशादिः, भावस्कन्धो द्विधा—आगमतो ज्ञाता उपयुक्तः १, नोआगमतस्त्विदमावश्यकं, नोशब्दो देशवचनः, सकलश्रुतस्कन्धापेक्षया आवश्यकश्रुतस्कन्धस्य एकदेशत्वात्, सामायिकादीनां श्रुतविशेषाणां स्कन्धः श्रुतस्कन्धः, आवश्यकं च तत् श्रुतस्कन्धश्च आवश्यकश्रुतस्कन्धः । ननु कस्मादिदमावश्यकं षडध्ययनात्मकं ?, उच्यते, षडर्थाधिकारभावात्, ते चामी सामायिकादीनां यथायोगमवसेयाः, "सावज्जजोगविरई १ उक्कित्तण २ गुणवओ अ पडिवत्ती ३ । खलिअस्स निंदणा ४ वणतिगिच्छा ५ गुणधारणा चेव ६ ॥ १ ॥" ( अनु० गा० ६ ) अस्या व्याख्या—सहावद्येन पापेन वर्त्तन्ते इति सावद्याश्च ते योगा व्यापाराश्चेति, तेषां विरतिर्विरमणं सामायिकार्थाधिकारः १ उत्कीर्त्तनेति गुणोत्कीर्त्तना अर्हतां चतुर्विंशतिस्तवस्य २, गुणा ज्ञानादयो मूलोत्तराख्या वा, तद्वतः प्रतिपत्तिर्वन्दनाध्ययनस्य ३, चः समुच्चये, स्खलितस्य निन्दना प्रतिक्रमणस्य ४, चारि-

त्रात्मनो व्रणचिकित्साऽपराधव्रणसंरोहणं कायोत्सर्गस्य ५ अपगतव्रतातिचारेतरोपचितकर्मविशरणार्थमनशनादिगुणसन्धारणा प्रत्याख्यानस्य ६, कोऽर्थः—अनन्तराभिहितपञ्चविधावश्यकानुष्ठानेनापगता ये व्रतानामतिचारास्तेभ्यो ये इतरे सामायिककायोत्सर्गान्तपञ्चविधावश्यकादशुद्धास्तैरुपचितं यत्कर्म तद्विशरणार्थमनशनादिगुणसन्धारणा प्रत्याख्यानस्याधिकारः, इदमुक्तं भवति-इह केचिदतिचारा मन्दक्लेशजनिताः कायोत्सर्गावसानावश्यकानुष्ठानतोऽपि निवर्त्तन्ते, अपरे अधिकतरसंक्लेशनिवर्त्त्याः तपःशोध्या भवन्ति, तैर्यदुपचितकर्म तन्निर्जरणार्थं अनशनादिगुणप्रतिपत्तिरधिकारः षष्ठावश्यकस्य ६ । तत्र प्रथममध्ययनं सामायिकं समभावलक्षणत्वाच्चतुर्विंशतिस्तवादीनां च तद्भेदत्वात्प्राथम्यमस्य, अस्य च महापुरस्येव चत्वार्यनुयोगद्वाराणि, अनुयोगो नाम सूत्रस्य व्याख्यानं तस्य द्वाराणीव द्वाराणि—तत्प्रवेशमुखानीति, यथाहि—अकृतद्वारं नगरमनगरमेव भवति, कृतैकद्वारमपि हस्त्यश्वादिसङ्कुलत्वात् दुःखसञ्चारं, कृतचतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं, एवं सामायिकपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति, कृतैकानुयोगद्वारमपि कृच्छ्रेण द्राघीयसा च कालेनाधिगम्यते, विहितसप्रभेदोपक्रमादिद्वारचतुष्टयं तु सुखाधिगममल्पीयसा च कालेनाधिगम्यते, ततः फलवाननुयोगद्वारोपन्यासः, तानि चामूनि—उपक्रमो निक्षेपोऽनुगमो नयश्च, तत्र शास्त्रमुपक्रम्यते—समीपमानीयते निक्षेपस्यानेनेति उपक्रमः, शास्त्रस्य न्यासदेशानयनमित्यर्थः, निक्षेपयोग्यताऽऽपादनमिति यावत्, उपक्रमान्तर्गतभेदैर्हि विचारितं निक्षिप्यते नान्यथेति, निक्षेपणं निक्षेपो—नामादिभेदैः शास्त्रस्य न्यसनं, एवमनुगमनमनुगमः, अनुगम्यते वा शास्त्रमनेनेत्यनुगमः—सूत्रस्यानुकूलः परिच्छेदः । एवं नयनं नीयते वाऽनेनेति नयः—वस्तुनो वाच्यस्य पर्यायाणां सम्भवतोऽधिगम इत्यर्थः । आह—एषामुपक्रमादिद्वाराणां किमित्येवं क्रमः ?, उच्यते, न ह्यनुपक्रान्तमसमीपी-

भूतं सत् निक्षिप्यते, न चाऽनिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचार्यते, अतोऽयमेव क्रमः। तत्रोपक्रमो द्विविधः—शास्त्रीयः १ इतरश्च २, तत्रेतरः षड्प्रकारः—नाम १ स्थापना २ द्रव्य ३ क्षेत्र ४ काल ५ भाव ६ भेदात्, नामस्थापने सुगमे, द्रव्योपक्रमो द्विधा—[ आगमतो नोआगमतश्च ] तत्रागमत उपक्रमपदार्थज्ञः तत्र चानुपयुक्तः, नोआगमतस्त्रिधा—ज्ञशरीरभव्यशरीरे प्रतीते, तद्व्यतिरिक्तस्त्रिधा—सचित्ताचित्तमिश्रभेदात्, तत्र सचित्तद्रव्योपक्रमस्त्रिधा—द्विपदचतुष्पदापदोपाधिभेदात् , पुनरेकैको द्विधा—परिकर्मणि वस्तुविनाशे च, तत्र परिकर्म नाम द्रव्यस्य गुणविशेषपरिणामकरणं, वस्त्वभावापादनं वस्तुविनाशः, तत्र परिकर्मणि सति द्विपदोपक्रमो यथा घृताद्युपभोगेन पुरुषस्य वर्णादिकरणं अथवा कर्णस्कन्धवर्द्धनादि, अन्ये तु शास्त्रगन्धर्वनृत्यादिकलासम्पादनमपि द्रव्योपक्रमं व्याचक्षते, इदं पुनरसाधु, विज्ञानविशेषात्मकत्वाच्छास्त्रादिपरिज्ञानस्य, तस्य च भावत्वात् , किन्त्वात्मद्रव्यसंस्कारविवक्षापेक्षया शरीरवर्णादिकरणवत्स्यादपीति। एवं शुकसारिकादीनामपि शिक्षागुणविशेषकरणं भावनीयं, एवं गजादीनां शिक्षागुणविशेषकरणे चतुष्पदोपक्रमः, अपदानां वृक्षादीनां वृक्षायुर्वेदोपदेशात् वार्द्धक्यादिगुणापादनमपदोपक्रमः। वस्तुविनाशे सति पुरुषादीनां त्रयाणामपि खड्गादिभिर्विनाशः। तथाऽचित्तद्रव्योपक्रमः परिकर्मणि यथा पद्मरागमणेः क्षारमृत्पुटपाकादिना वैमल्यापादनं, तद्विनाशे च विनाशः। मिश्रद्रव्योपक्रमः परिकर्मणि कटकादिविभूषितपुरुषादिद्रव्यस्य शिक्षापादनं, वस्तुविनाशे च खड्गादिभिर्विनाशः। कारकयोजना स्वधिया भावनीया, तद्यथा—द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्द्रव्ये द्रव्येषु वा उपक्रमो द्रव्योपक्रमः, तत्र द्रव्यस्योपक्रमो यथा एकस्य पुरुषस्य शिक्षाकरणं, द्रव्याणां तेषां बहूनां, द्रव्येण फलकेन समुद्रतरणं, द्रव्यैर्बहुभिः फलकैर्नावं निष्पाद्य समुद्रोल्लङ्घनं, कस्याप्येकस्मिन्

फलके उपविष्टस्य शिक्षाकरणं, द्रव्येषु बहुषूपविष्टस्य, तथा क्षेत्रोपक्रमोऽपि द्विधा-परिकर्मणि वस्तुविनाशे च, परिकर्मणि क्षेत्रोपक्रमो नावा समुद्रस्योल्लङ्घनं हलादिभिर्वा इक्ष्वादिक्षेत्रस्य परिकर्मणा, वस्तुविनाशे क्षेत्रोपक्रमो गजबन्धनादिभिः क्षेत्रस्य विरूपीकरणं। ननु क्षेत्रममूर्त्तं नित्यं च, अतस्तस्य कथं करणविनाशौ?, उच्यते, तात्स्थ्यात्तद्व्यपदेश इति कृत्वा तद्व्यवस्थित-द्रव्यकरणविनाशभावादुपचारतोऽदोषः, तथा कालो नाम वर्त्तनादिरूपत्वाद्द्रव्यपर्यायस्ततो द्रव्यस्य परिकर्मणि विनाशे वा कालस्यापि तावुपचर्येते, इति कालोपक्रमः, चन्द्रोपरागादिपरिज्ञानलक्षणे वा। भावोपक्रमो द्विधा-आगमतो ज्ञाता उपयुक्तः, नोआगमतो द्विधा-प्रशस्तोऽप्रशस्तश्च, अप्रशस्तभावोपक्रमे ब्राह्मणीगणिकामात्यादीनामुदाहरणानि, प्रशस्तः श्रुतादि-निमित्तमाचार्यभावोपक्रमः, ननु व्याख्याङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकं, [तदसम्यक्], तस्यापि व्याख्याङ्गत्वात्, उक्तं च "गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि। तस्माद्गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यं ॥ १ ॥" (प्रश. ६९) ननु यद्येवं तर्हि गुरुभावोपक्रमो अभिधातव्यो न शेषा निष्प्रयोजनत्वात्, न, गुरुचित्तप्रसादनार्थमेव तेषामुप-योगित्वात्, तथाहि-गुरोस्तथाविधकार्योत्पत्तौ तच्चित्तप्रसादनार्थमेवाशनादिद्रव्यं, व्याख्यास्थानादिक्षेत्रं, प्रव्रज्यादिलग्नादिकालं चोपक्रमतो विनेयस्य द्रव्याद्युपक्रमा अपि सार्थका एव, अथवोपक्रमसाम्यात्प्रकृते निरुपयोगिनोऽपि अन्यत्रोपयोक्ष्यन्ते इत्यु-पन्यस्तत्वाददोषः। अथ शास्त्रीय उच्यते, असावपि षोढा, तद्यथा-आनुपूर्वी १ नाम २ प्रमाणं ३ वक्तव्यता ४ अर्थाधिकारः ५ समवतारः ६, तत्रानुपूर्वी दशधा, तद्यथा-नामानुपूर्वी १ स्थापना० २ द्रव्या० ३ क्षेत्रा० ४ काला० ५ गणना० ६ उत्कीर्त्तना० ७ संस्थाना० ८ सामाचार्यानुपूर्वी ९ भावानुपूर्वी १०, एतासु दशस्वानुपूर्वीषु यथासम्भवमवतारणीयमिदं सामा-

यिकाध्ययनं, विशेषस्तूत्कीर्त्तनानुपूर्व्यां गणनापूर्व्यां च समवतरति, उत्कीर्त्तनं नाम संशब्दनं यथा सामायिकं चतुर्विंशतिस्तव इत्यादि, गणनं–परिसङ्ख्यानं, एकं द्वे त्रीणि चत्वारीत्यादि, सा च गणनानुपूर्वी त्रिधा–पूर्वानुपूर्वी १ पश्चानुपूर्वी २ अनानुपूर्वी च ३, तत्र पूर्वानुपूर्व्यां प्रथमं, पश्चानुपूर्व्यां षष्ठं, अनानुपूर्व्यां त्वनियतं–क्वचित्प्रथमं क्वचिद्द्वितीयमित्यादि, तत्रानानुपूर्वीणामयं करणोपायः–"एगादेगुत्तरगा छगच्छगया परोप्परऽब्भत्था। पुरिमंतिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥ १॥" (वि. ९४२) व्याख्या–एकाद्या एकोत्तरका अङ्का व्यवस्थाप्यन्ते, ते चेह षडध्ययनप्रस्तावात् षट्गच्छगताः समवसेयाः, तत्र षण्णां गच्छः–समुदायः षड्गच्छस्तं गतास्तत्प्रतिबद्धाः, ते च एवं परस्पराभ्यस्ताः–परस्परगुणिताः, एकोत्तरकाः षडध्ययनविषयाः षडङ्का व्यवस्थाप्यन्ते, १।२।३।४।५।६। एकेन गुणितं तदेव भणितं तदेव भवतीति। एकेन द्विको गुण्यते जातौ द्वौ, द्वाभ्यां त्रिको गुण्यते जाताः षट्, तैः चत्वारो गुणिता जाताश्चतुर्विंशतिः, तया पञ्च गुण्यन्ते जातं विंशं शतं, तेन षड् गुणिता जातानि विंशत्युत्तराणि सप्तशतानि। इहाद्यभङ्गः पूर्वानुपूर्वीरूपः, चरमश्च पश्चानुपूर्वीरूपः, तदपनयने ७१८ सर्वसङ्ख्ययाऽनानुपूर्वीभङ्गपरिमाणं। तथा इयमनानुपूर्वीभङ्गकानामानयनोपायभूता करणगाथा–"पुव्वाणुपुव्वि हिट्ठा समयाभेएण कुण जहाजिट्ठं। उवरिमतुल्लं पुरओ निसिज्ज पुव्वक्कमो सेसे ॥ १ ॥" व्याख्या–इह विवक्षितपदानां क्रमेण स्थापना पूर्वानुपूर्वी, तस्या अधस्तात् द्वितीयादिभङ्गकान् जिज्ञासुः कुरु–स्थापय एकादीनि पदानीति शेषः, कथं?–ज्येष्ठस्यानतिक्रमेण यथाज्येष्ठं, यो यस्यादौ स तस्य ज्येष्ठः, यथा द्विकस्यैकको ज्येष्ठः, त्रिकस्य त्वेककोऽनुज्येष्ठः, चतुष्कादीनां स एव ज्येष्ठानुज्येष्ठः, एवं त्रिकस्य द्विको ज्येष्ठः, स एव चतुष्कस्यानुज्येष्ठः, पञ्चकादीनां तु स एव ज्येष्ठानुज्येष्ठ इत्यादि। एवं सति उपरितनाङ्कस्याधस्तात् ज्येष्ठो निक्षिप्यते,

ज्येष्ठेऽलभ्यमान अनुज्येष्ठः, तस्मिन्नप्यलभ्यमाने ज्येष्ठानुज्येष्ठ इति यथाज्येष्ठं निक्षेपं कुर्यात्, कथमित्याह—समयाभेदेनेति, समयः—संकेतः प्रस्तुतभङ्गकरचनाव्यवस्था तस्याऽभेदोऽनतिक्रमः, तस्य च भेदस्तदा भवति यदा तस्मिन्नेव भङ्गके निक्षिप्ताङ्क-सदृशोऽपरोऽङ्कः पतति। तत एवम्भूतं समयभेदं वर्जयन्नेव ज्येष्ठाद्यङ्कनिक्षेपं कुर्यात्, उक्तं च "जहियंमि उ निक्खित्ते पुणरवि (पुरओ) सो चेव होइ कायव्वो (अंकविण्णासो)। सो होइ समयभेओ वज्जेअव्वो पयत्तेणं ॥ १ ॥" (अनु० चू०) निक्षिप्तस्य चाङ्कस्य यथासम्भवं 'पुरउ'त्ति अग्रत उपरितनाङ्कैस्तुल्यं—सदृशं यथा भवति एवं न्यसेत्, उपरितनाङ्कसदृशानेवाङ्कान्निक्षिपे-दित्यर्थः, 'पुव्वकमो सेस'त्ति स्थापितशेषानङ्कान्निक्षिप्ताङ्कस्य यथासम्भवं पृष्ठतः पूर्वक्रमेण स्थापयेत्, यः सङ्ख्यया लघुरेककादिः स प्रथमं स्थाप्यते। यस्तु सङ्ख्यया महान् द्विकादिः स पश्चादिति पूर्वक्रमः, पूर्वानुपूर्वीलक्षणे प्रथमभङ्गके इत्थमेव दृष्टत्वादिति भावः। भावार्थस्तु दिङ्मात्रप्रदर्शनाय सुखाधिगमाय च ज्ञानदर्शनचारित्ररूपाणि त्रीणि पदान्याश्रित्योपदर्श्यते—एकद्वित्रिलक्ष-णस्य पदत्रयस्याभ्यासे षड्भङ्गाः, तत्रायं पूर्वानुपूर्वीलक्षण आद्यो भङ्गः १।२।३, अधस्ताद्भङ्गकरचने क्रियमाणे एकस्य ज्येष्ठ एव नास्ति, द्विकस्य तु विद्यते एककः, स तदधस्तान्निक्षिप्यते, तस्य चाग्रत उपरिमतुल्यं त्रिको दीयते। पृष्ठतस्तु उद्धरितो द्विको दीयते। तोऽयं द्वितीयो भङ्गः २।१।३, अत्र च द्विकस्य विद्यते एकको ज्येष्ठः परं नासौ तदधस्तान्निक्षिप्यतेऽग्रतः सदृशाङ्कपातेन समयभङ्ग(भेद)प्रसङ्गात्, एककस्य तु ज्येष्ठ एव नास्ति, त्रिकस्य तु विद्यते द्विको ज्येष्ठः स तदधस्तान्निक्षिप्यतेऽत्र चाग्रभागस्य तावदसम्भव एव, पृष्ठतस्तु एककत्रिकौ क्रमेण स्थाप्येते, ततस्तृतीयो भङ्गः १।३।२, अत्राप्येकस्य ज्येष्ठ एव नास्ति, त्रिकस्य तु ज्येष्ठोऽस्ति द्विको न च निक्षिप्यते अग्रे सदृशाङ्कपातेन समयभेदापत्तेः, ततोऽस्यैवानुज्येष्ठ एककः स्थाप्यतेऽग्रतस्तु द्विकः,

पृष्ठतश्च स्थापितशेषस्त्रिको दीयत इति चतुर्थोऽयं भङ्गः ३।१।२, एवं पञ्चमषष्ठावप्यभ्यूह्यौ, सर्वेषां चामीषामियं स्थापना—अत्राद्य-भङ्गस्य पूर्वानुपूर्वीत्वात् अन्त्यस्य च पश्चानुपूर्वीत्वान्मध्यमा एव चत्वारो भङ्गा अनानुपूर्वीत्वेन मन्तव्याः, एवमनया दिशा चतुः—

| |
|---|
| १२३ |
| २१३ |
| १३२ |
| ३१२ |
| २३१ |
| ३२१ |

पञ्चषट्सप्ताष्टादिपदानामपि भङ्गा भावनीयाः। इदानीं नाम वक्तव्यं—प्रतिवस्तु नमनान्नाम, तच्चैकादिदशान्तं यथाऽनुयोगद्वारेषु तथा वक्तव्यं, सामायिकस्य षण्नाम्न्यवतारः, तत्र षट् भावाः औदयिकादयो निरूप्यन्ते, तत्र क्षायोपशमिके एव श्रुताऽवतारस्तस्य क्षायोपशमिकत्वात्, तथा प्रमाणं द्रव्यादि, प्रमीयतेऽनेनेति प्रमाणं, तच्च प्रमेयभेदादेव चतूरूपं, द्रव्यप्रमाणादिभेदात्, तत्र सामायिकं भावात्मकत्वात् भावप्रमाणविषयं, तच्च भावप्रमाणं गुण १ नय २ सङ्ख्या ३ भेदात्त्रिधा, तत्रेदं गुणप्रमाणेऽन्तर्भवति, गुणप्रमाणं द्विधा—जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र जीवादपृथग्भूतत्वात्सामायिकस्य जीवगुणप्रमाणे समवतारः, जीवगुणप्रमाणमपि त्रिधा—ज्ञान १ दर्शन २ चारित्र ३ भेदात्। तत्र बोधात्मकत्वात्सामायिकस्य ज्ञानगुणप्रमाणे समवतारः, ज्ञानगुणप्रमाणमपि चतुर्द्धा, तद्यथा प्रत्यक्षं १ अनुमानं २ उपमानं ३ आगमश्च ४, तत्र सामायिकस्य प्रायः परोदेशसव्यपेक्षत्वादागमप्रमाणे समवतारः, आगमोऽपि द्विधा—लौकिक १ लोकोत्तर २ भेदात्, तत्रेदं सामायिकं सर्वज्ञप्रणीतत्वाल्लोकोत्तरागमे समवतरति, ननु लोकोत्तरागमोऽपि सूत्र १ अर्थ २ उभयरूपत्वात् ३ त्रिविधस्तत इदं क्वान्तर्भवति?, उच्यते, सामायिकस्य सूत्रार्थोभयरूपत्वात्त्रिविधेऽपि। ननु सोऽपि त्रिधा—आत्मागमोऽनन्तरागमः परम्परागमश्च, ततः क्वेदं समवतरति?, उच्यते, इदं सूत्रतो गौतमादीनामात्मागमः, तच्छिष्याणां जम्बूस्वाम्यादीनामनन्तरागमः, प्रशिष्याणां तु प्रभवादीनां परम्परागमः, तथा अर्थतोऽर्हतामात्मागमः, गणधराणामनन्तरा० तच्छिष्याणां पर०, एवं सूत्रतोऽर्थ-

तच्च त्रिविधे प्रमाणेऽन्तर्भवति, नयप्रमाणे तु मूढनयत्वात्तस्य नाधुनावतारः, वक्ष्यति च–'मूढनइअं सुअं कालियं तु' इत्यादि। अथ सङ्ख्याप्रमाणं, तत्र च सङ्ख्या नाम १ स्थापना २ द्रव्य ३ क्षेत्र ४ काल ५ औपम्य ६ परिमाण ७ भावभेदात् ८ अष्टधा यथा अनुयोगद्वारेषु तथा वक्तव्या, तत्रोत्कालिकश्रुतपरिमाणसङ्ख्यायां समवतारः, तत्र सूत्रतः सामायिकं परिमितपरिमाणं अर्थतोऽनन्तपर्यायत्वादपरिमितपरिमाणं। अथ वक्तव्यता, सा च त्रिधा, स्वसमयवक्तव्यता १ परसमयवक्तव्यता २ उभयसमय व० ३, स्वसमयः–स्वसिद्धान्तः वक्तव्यता–पदार्थविचारः, तत्र स्वसमयवक्तव्यतायामस्य समवतारः, एवं सर्वाण्यध्ययनानि स्वसमयवक्तव्यतायां समवतारणीयानि। एवं परसमयप्रतिपादकानामुभयसमयप्रतिपादकानां चाध्ययनानामपि, यतः सर्वमेव सम्यग्दृष्टिपरिगृहीतं परसमयसम्बन्ध्यपि सम्यक्श्रुतमेव हेयोपादेयार्थानां सम्यक् हेयोपादेयतया परिज्ञानात्। अथार्थाधिकारः, स चाध्ययनसमुदायार्थः, स्वसमयवक्तव्यतैकदेशः, स च सर्वसावद्ययोगविरतिरूपः। अथ समवतारः स च लाघवार्थं प्रतिद्वारं समवतारणाद्वारेण प्रदर्शित एव। उक्त उपक्रमः, इदानीं निक्षेपः, स च त्रिधा, ओघनिष्पन्नः १ नामनिष्पन्नः २ सूत्रालापकनिष्पन्नश्च ३, तत्रौघो नाम यत् सामान्यं शास्त्राभिधानं, तच्चेह चतुर्धा, तद्यथा–अध्ययनं १ अक्षीणं २ आयः ३ क्षपणा च ४, पुनरेकैकं नामादिभेदाच्चतुर्द्धा, नामाध्ययनमित्यादि, तथा नामाक्षीणमित्यादि, तथा नामाय इत्यादि, नामक्षपणेत्यादि च। एतानि च यथानुयोगद्वारेषु तथा प्ररूप्य इदं सामायिकाध्ययनं भावाध्ययने भावाक्षीणे भावाये भावक्षपणायां चायोज्यं, तत्र यस्मादनेन शुभमध्यात्मं जन्यतेऽथवा अध्यात्ममानीयते, अधिकं वा अयनं बोधस्य संयमस्य मोक्षस्य वा इदमित्यध्ययनं, एवं शेषाणामपि निरुक्तयो अभ्यूह्याः। नामनिष्पन्ने निक्षेपे सामायिकमिति विशेषकं नाम, तच्च नामादिभेदाच्चतुर्द्धा, इदं च निरुक्ति-

द्वारे सूत्रस्पर्शिकनिर्युक्तौ च प्रपञ्चेन वक्ष्यामः। उक्तो नामनिष्पन्नो निक्षेपः, अधुना सूत्रालापकनिष्पन्नस्य निक्षेपस्यावसरः, स च प्राप्तावसरोऽपि न निक्षिप्यते, कस्मादिति चेत्, उच्यते, सूत्राभावात्, असति हि सूत्रे कस्याऽऽलापकनिक्षेपः?, ततोऽस्ति इतस्तृतीयमनुयोगद्वारमनुगमाख्यं, तत्रैव निक्षेप्स्यामः। इदानीमनुगमावसरः, स च द्विधा निर्युक्त्यनुगमः सूत्रानुगमश्च। तत्राद्यः त्रिधा–निक्षेपनिर्युक्त्यनुगम १ उपोद्घातनिर्युक्त्य० २ सूत्रस्पर्शिकनि० ३ च, तत्र निक्षेपनिर्युक्त्यनुगमो नाम यदधो नामादिन्यासाद्व्याख्यानमुक्तं ततः सोऽनुगतः एव, इदानीमुपोद्घातनिर्युक्त्यनुगमप्रस्तावः, स चोद्देशादिद्वारलक्षणः, अस्य च महार्थत्वान्मा भूद्विघ्न इति प्रारम्भे अस्य मङ्गलमुच्यते–

तित्थयरे भगवंते, अणुत्तरपरक्कमे अमियनाणी। तिण्णे सुगइगइगए, सिद्धिपहपदेसए वंदे ॥ ८० ॥

तीर्थं कुर्वन्तीत्येवंशीलास्तीर्थकरास्तान्, वन्दे इति क्रिया सर्वत्र योज्या। तत्र तीर्यतेऽनेनेति तीर्थं, तच्च नामादिभेदाच्चतुर्द्धा, तत्र नामस्थापने सुगमे, द्रव्यतोऽपि यावन्नोआगमतो ज्ञशरीरभव्यशरीरे, तद्व्यतिरिक्तं तु नद्यादीनामनपायः समो भूभागः, भावतीर्थं द्विधा–आगमतो ज्ञाता उपयुक्तः, नोआगमतो सङ्घः सम्यग्दर्शनादिपरिणामानन्यत्वात्, अथवा 'पङ्कदाहपिपासानामपहारं करोति यत्। तद्धर्मसाधनं तथ्यं तीर्थमित्युच्यते बुधैः ॥ १ ॥' पङ्कस्तावत्पापं दाहः कषायाः पिपासा विषयेच्छा एतेषामपहरणसमर्थं यदित्यर्थः। तथा भगः समग्रैश्वर्यादिलक्षणः, 'उक्तं च–ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य षण्णां भग इतीङ्गना ॥ १ ॥' सोऽस्ति येषां ते भगवन्तस्तान्। ननु तीर्थकरानित्यनेनैव 'भगवत' इत्यस्य गतार्थत्वात्तीर्थकृतामुक्तलक्षणभगाव्यभिचारात्तु नार्थोऽनेनेति, न, नयमतान्तरावलम्बिपरिकल्पितबुद्धादितीर्थकरतिरस्कारपरत्वादस्येति,

तथा च न तेऽविकलभगवन्तः। तथा परे–शत्रवः क्रोधादयस्तेषामाक्रमः–पराजयस्तदुच्छेद इति यावत्, पराक्रमः, सो अनुत्तरो येषां ते तथा तान्। ननु ये ऐश्वर्यादिभगवन्तस्तेऽनुत्तरपराक्रमा एव, तमन्तरेण विवक्षितभगयोगाभावात्, ततश्चैतदतिरिच्यते, न, अनादिसिद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरनयवादनिराकरणार्थत्वान्न दोषः, अकर्त्तात्मवादव्यवच्छेदार्थं वा। तथाऽमितं ज्ञेयानन्तत्वादपरिमितं च तत् ज्ञानं केवलज्ञानं च तदस्ति येषां ते तथा तान्, ननु येऽनुत्तरपराक्रमास्तेऽमितज्ञानिन एव, नियमेन क्रोधादिपरिक्षयोत्तरकालभावित्वादमितज्ञानस्य, उच्यते, सत्यमेतत्किन्तु क्लेशक्षयेऽपि अमितज्ञानानभ्युपगमप्रधाननयवादनिरासार्थत्वादस्योपन्यासः, स्वसिद्धान्तप्रसिद्धछद्मस्थवीतरागव्यवच्छेदार्थं वा, तथा तरन्ति स्म भवार्णवमिति तीर्णास्तान्, तीर्त्वा च भवौघं, सर्वज्ञत्वात् सर्वदर्शित्वाच्च निरुपमसुखभागिनः, सुगतयः–सिद्धास्तेषां गतिर्मोक्षलक्षणा, तां गतास्तान्, अनेन चावाप्ताणिमाद्यष्टविधैश्वर्यस्वेच्छाविलसनशीलपुरुपतीर्णत्वप्रतिपादनपरनयवादव्यच्छेदमाह। तथा सिद्धेः–पञ्चमगतिरूपायाः पन्थास्तस्य प्रधाना देशकास्तद्धेतुभूतसामायिकादिप्रतिपादकत्वात्प्रदेशकास्तान् ॥ ८० ॥ एवं तावदविशेषेण ऋषभादीनां मङ्गलार्थं वन्दनमुक्तं इदानीमासन्नोपकारित्वाद्वर्द्धमानवन्दनमाह—

वंदामि महाभागं, महामुणिं महायसं महावीरं। अमरनररायमहियं, तित्थयरमिमस्स तित्थस्स ॥ ८१ ॥

'वंदामी'त्यादि दीपकमशेषोत्तरपदानुयायि द्रष्टव्यं, तत्र भागः–अचिन्त्या शक्तिः, महान् भागो यस्येति महाभागः–महाप्रभावस्तं, मनुते मन्यते वा जगतस्त्रिकालावस्थामिति मुनिः सर्वज्ञत्वात्, महांश्चासौ मुनिश्च महामुनिः तं, त्रैलोक्यव्यापित्वान्महद्यशोऽस्येति महायशाः तं, महावीरमित्यभिधानं, अथवा 'विदारयति यत्कर्म तपसा च विराजते। तपोवीर्येण युक्तश्च तस्माद्वीर

इति स्मृतः ॥ १ ॥' तथा अमराश्च नराश्चामरनरास्तेषां राजानः—इन्द्रचक्रयादयस्तैर्महितस्तं, तीर्थकरं—तीर्थकरणशीलमस्य वर्त्तमानकालावस्थायिनस्तीर्थस्य ॥ ८१ ॥ एवं तावदर्थवक्तुर्मङ्गलार्थं वन्दनमुक्तं, इदानीं सूत्रकर्त्रादीनामपि पूज्यत्वाद्वन्दनमाह—

इक्कारसवि गणहरे, पवायए पवयणस्स वंदामि । सव्वं गणहरवंसं पवयणं च ॥ ८२ ॥

एकादशेति सङ्ख्यावाचकः शब्दः, अपिः समुच्चये, अनुत्तरं ज्ञानदर्शनादिधर्मगणं धारयन्तीति गणधरास्तान्, प्रकर्षेण प्रधाना आदौ वा वाचकाः प्रवाचकास्तान्, कस्य ?, प्रवचनस्य—द्वादशाङ्गस्य, वन्दे, एवं तावत् मूलगणधरवन्दनं कृतं, तथा सर्वं—निरवशेषं गणधरा—आचार्यास्तेषां वंशः—परम्परया प्रवाहस्तं, तथा वाचका—उपाध्यायास्तेषां वंशस्तं, तथा प्रवचनमागमं च । ननु वंशद्वयस्य प्रवचनस्य कथं वन्द्यता ?, उच्यते, यथा अर्थवक्ता अर्हन्वन्द्यः सूत्रवक्तारश्च गणधराः, एवं यैरिदमर्थसूत्ररूपं प्रवचनमाचार्योपाध्यायैरानीतं तद्वंशोऽप्यानयनद्वारेणोपकारित्वाद्वन्द्य एव, प्रवचनं तु साक्षादेवोपकारित्वाद्वन्द्यम् ॥ ८२ ॥ इदानीं प्रकृतमुपदर्शयति—

ते वंदिऊण सिरसा अत्थपुहुत्तस्स तेहिं कहियस्स । सुयनाणस्स भगवओ, निज्जुत्तिं कित्तइस्सामि ॥ ८३ ॥

तान्—अनन्तरोक्तांस्तीर्थकरादीन्, वन्दित्वा शिरसा उपलक्षणत्वान्मनःकायाभ्यां च, निर्युक्तिं कीर्त्तयिष्यामि, कस्य श्रुतज्ञानस्य, अर्थपृथक्त्वस्येति, अर्थात्कथञ्चिद्भिन्नत्वात्सूत्रं पृथक् उच्यते, प्राकृतत्वाच्च पृथगेव पृथक्त्वं, अर्थस्तु सूत्राभिधेयः प्रतीत एव, अर्थश्च पृथक्त्वं च अर्थपृथक्त्वं तस्य, श्रुतज्ञानविशेषणमेतत्, सूत्रार्थोभयरूपस्येत्यर्थः, अथवा अर्थेन पृथु अर्थपृथु तद्भावोऽर्थपृथुत्वं, श्रुतविशेषणमेव, तैस्तीर्थकरगणधरादिभिः कथितस्य, भगवत इति स्वरूपाभिधानं, कोऽर्थः ? तद्वतां समग्रै-

श्वर्यादिगुणकलापोपेतत्वेन भगवत्वात् श्रुतमपि भगवत् इति श्रुतज्ञानस्य स्वरूपमनेन विशेषणेनाभिधीयत इत्यर्थः, सूत्रार्थयोः परस्परं निर्योजनं–सम्बन्धनं निर्युक्तिस्तां कीर्त्तयिष्यामीति योजितमेव ॥ ८३ ॥ ननु किमशेषश्रुतज्ञानस्य ?, न, किं तर्हि ?; श्रुतविशेषाणामावश्यकादीनामत आह—

आवस्सगस्स दसकालिअस्स तह उत्तरज्झमायारे। सूयगडे निज्जुत्तिं वुच्छामि तहा दसाणं च ॥ ८४ ॥

कप्पस्स य निज्जुत्तिं, ववहारस्सेव परमणिउणस्स। सूरिअपण्णत्तीए, वुच्छं इसिभासिआणं च ॥ ८५ ॥

एतेसिं निज्जुत्तिं, वुच्छामि अहं जिणोवएसेणं। आहरणहेउकारणपयनिवहमिणं समासेणं ॥ ८६ ॥

आवश्यकस्य १ दशवैकालिकस्य २ तथा उत्तराध्ययन ३ आचारयोः ४, समुदायशब्दानामवयवे वृत्तिदर्शनात्, उतराध्य इति उत्तराध्ययनमवसेयं, अथवा अध्ययनमध्याय इति उत्तराध्यायाचारयोः, 'सूत्रकृते' सूत्रकृताङ्गविषयां निर्युक्तिं वक्ष्ये ५, दशानां चेति दशाश्रुतस्कन्धसम्बन्धिनीं ६ ॥८४॥ कल्पस्य च निर्युक्तिं ७, व्यवहारस्य च परमनिपुणस्य, परमग्रहणं मोक्षाङ्गत्वात्, निपुणग्रहणं तु अव्यंसकत्वात्। न खल्वयं व्यवहारो मन्वादिप्रणीतव्यवहार इव व्यंसको, "सच्चपइन्ना खु ववहारा" इति वचनात् ८, सूर्यप्रज्ञप्तेः ९ वक्ष्ये, ऋषिभाषितानां च देवेन्द्रस्तवादीनां १०, अनेकशो निर्युक्तेः क्रियायाश्चाभिधानं ग्रन्थान्तरविषयत्वात् समासव्यासरूपत्वाच्च शास्त्रारम्भस्यादुष्टमेव ॥ ८५ ॥ एतेषां–श्रुतविशेषाणां निर्युक्तिं वक्ष्याम्यहं जिनोपदेशेन, न तु स्वमनीषिकया, कथम्भूतामित्याह–आहरणहेतुकारणपदनिवहां इमामन्तस्तत्त्वनिष्पन्नां, 'समासेन' सङ्क्षेपेण, तत्र साध्यसाधनान्वयव्यतिरेकप्रदर्शनमाहरणं, दृष्टान्त इति भावः, साध्ये सत्येव भवति साध्याभावे च न भवति एवं साध्यधर्मान्वयव्यतिरेक-

लक्षणो हेतुः, हेतुमुल्लङ्घ्य प्रथमं दृष्टान्ताभिधानं न्यायप्रदर्शनार्थं–क्वचिद्धेतुमनभिधाय दृष्टान्त एवोच्यते, यथा गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायो मत्स्यादीनां सलिलवत्, तथा क्वचिद्धेतुरेव केवलो, न दृष्टान्तः, यथा मदीयोऽयमश्वो विशिष्टचिह्नोपलब्ध्यन्यथानुपपत्तेः, कारणमुपपत्तिमात्रं, यथा निरुपमसुखः सिद्धः, ज्ञानानाबाधप्रकर्षात्, नात्र आविद्वदङ्गनादिलोकप्रतीतः साध्यसाधनधर्मानुगतो दृष्टान्तोऽस्ति, तत्राहरणार्थाभिधायकं पदमाहरणपदं, एवमन्यत्रापि भावनीयं, आहरणं च हेतुश्च कारणं च आहरणहेतुकारणानि, तेषां पदानि आहरणहेतुकारणपदानि, तेषां निवहः–सङ्घातो यस्यां निर्युक्तौ सा तथाविधा तां ॥ ८६ ॥ तत्र 'यथोद्देशं निर्देश' इति न्यायात् आदौ अधिकृतावश्यकाद्याध्ययनसामायिकस्योपोद्घातनिर्युक्तिमभिधित्सुराह—

सामाइयनिज्जुत्तिं, वुच्छं उवएसियं गुरुजणेणं । आयरियपरंपरएण, आगयं आणुपुव्वीए ॥ ८७ ॥

सामायिकस्य निर्युक्तिः सामायिकनिर्युक्तिः, तां वक्ष्ये, किं विशिष्टां ?, उप–सामीप्येन देशिता उपदेशिता तां, केन ? गुरुजनेन–तीर्थकरगणधरलक्षणेन, पुनरुपदेशकालादारभ्याचार्यपरम्परेणागतां, स च परम्परको द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यपरम्परकः पुरुषपारम्पर्येण इष्टकानामानयनं, भावपरम्परकस्तु इयमेवोपोद्घातनिर्युक्तिराचार्यपारम्पर्येणागतेति, कथं ?, आनुपूर्व्या–परिपाट्या सुधर्मस्वामिनो जम्बूस्वामिना, ततः प्रभवेन, ततोऽपि शय्यम्भवादिभिरित्यादि, अथवाऽऽचार्यपारम्पर्येणागतां स्वगुरुभिरुपदेशितां । ननु द्रव्यस्येष्टकादेर्युक्तं पारम्पर्येणागमनं, भावस्य तु श्रुतपर्यायरूपत्वाद्वस्त्वन्तरसंक्रमणाभावात्पारम्पर्येणागमनानुपपत्तिः, न च तद्बीजभूतस्यार्हद्गणधरशब्दस्यागमनमस्ति, तस्य श्रुत्यनन्तरमेवोपरमादिति, अत्रोच्यते 'उपचाराददोषः,

यथा कार्षापणाद् घृतं, घटादिभ्यो वा रूपविज्ञानमिति । एवमियमाचार्यपारम्पर्येण हेतुत्वात्तत आगतेत्युच्यते, आगतेवागता, बोधवचनश्चायमागतशब्दो न गमिक्रियावचन इति ॥ ८७ ॥ साम्प्रतं निर्युक्तिस्वरूपाभिधानायेदमाह—

निज्जुत्ता ते अत्था, जं बद्धा तेण होइ णिज्जुत्ती । तहवि य इच्छावेइ, विभासिउं सुत्तपरिवाडी ॥ ८८ ॥

निर्णययुक्ता निर्युक्ता निश्चिता इत्यर्थः, ते प्रसिद्धा अर्थाः सूत्रोक्ता जीवादयः पदार्था । 'यद्' यस्माद्गाथात्वेन ग्रथितास्तेनेयं भवति निर्युक्तिः, निर्युक्तानां—सूत्रे प्रथममेव सम्बद्धानां सतामर्थानां व्याख्यारूपा युक्तिर्योजनं युक्तशब्दलोपान्निर्युक्तिः, ननु यदि सूत्रे सम्बद्धाः सन्ति ततः किमनया ?, उच्यते, यद्यपि सूत्रे बद्धा एव सन्ति तथापि सूत्रे निर्युक्तानप्यर्थान् विभाषितुं—व्याख्यातुं सूत्रपरिपाटी—सूत्रपद्धतिः कर्त्री एषयतीव एषयति—प्रयोजयति, इयमत्र भावना—अप्रतिबुद्ध्यमाने श्रोतरि गुरुं तदनुग्रहार्थं सूत्रपरिपाट्येव विभाषितुमेषयति, इच्छत इच्छत मां प्रतिपादयितुमिति इत्थं प्रयोजयतीवेति, सूत्रपरिपाटीमिति पाठान्तरे, तत्र शिष्य एव गुरुं सूत्रपद्धत्तिमनवबुध्यमानः प्रवर्त्तयति—इच्छत इच्छत मम व्याख्यातुं सूत्रपरिपाटीमिति । व्याख्या च निर्युक्तिः, अतः पुनर्योजनरूपा निर्युक्तिरित्थमदोषायेति ॥ ८८ ॥ यदुक्तं 'अर्थपृथक्त्व[ स्य तैः कथित ]स्येति' तीर्थकरगणधरैः, इदानीं तेषामेव [शीलादि] सम्पदतिशयप्रतिपादनार्थं गाथाद्वयमाह—

तवनियमनाणरुक्खं, आरूढो केवली अमियनाणी । तो मुयइ नाणवुट्ठिं, भवियजणविबोहणट्ठाए ॥ ८९ ॥

तं बुद्धिमएण पडेण, गणहरा गिण्हिउं निरवसेसं । तित्थयरभासियाइं, गंथंति तओ पवयणट्ठा ॥ ९० ॥

रूपको नामात्रालङ्कारः, तत्र वृक्षो द्विधा, द्रव्यतो भावतश्च, द्रव्यतः प्रधानतरः कल्पवृक्षः, यथा तमारुह्य कश्चिद् गन्धादि-

निर्युक्ति-स्वरूपं तीर्थकरसम्पदतिशयवर्णनं च गा. ८८-९०

गुणसमन्वितानां कुसुमानां सञ्चयं कृत्वा तदधोभागवर्त्तिनां पुरुषाणां तदारोहणासमर्थानामनुकम्पया कुसुमानि निसृजति, तेऽपि च भूपातरजोगुण्डनभयाद्विमलविस्तीर्णपटैः प्रतीच्छन्ति, पुनर्यथायोगमुपभुञ्जमानाः परेभ्यश्चोपकुर्वाणाः सुखमाप्नुवन्ति, एवं भाववृक्षेऽपि सर्वमिदमायोज्यं, तपश्च नियमश्च ज्ञानं च तपोनियमज्ञानानि तान्येव वृक्षस्तं, तत्रानशनादिद्वादशधा तपः, नियम इन्द्रियनोइन्द्रियसंयमः, इन्द्रियाणि श्रोत्रादीनि नोइन्द्रियाश्च कषायाः, ज्ञानमिह केवलं सम्पूर्णं गृह्यते, इत्थंरूपं वृक्षमारूढः, तत्र ज्ञानस्य सम्पूर्णासम्पूर्णरूपत्वादाह—केवलं सम्पूर्णं ज्ञानमस्यास्तीति केवली, असावपि त्रिधा श्रुतकेवली १ क्षायिकसम्यक्त्वकेवली २ क्षायिकज्ञानकेवली ३, यद्विवा चतुर्धा—श्रुतकेवली १ अवधिकेवली २ मनःपर्यायकेवली ३ केवलज्ञानकेवली ४, अतः श्रुतादिकेवलीव्यवच्छित्तये केवलज्ञानेन केवलित्वं प्रतिपादयिषुराह—अमितज्ञानीति, ततो वृक्षात् मुञ्चति ज्ञानवृष्टिं कारणे कार्योपचारात् ज्ञानकारणभूतशब्दकुसुमवृष्टिं, किमर्थं ?, भव्यजनविबोधनार्थं, ननु कृतकृत्यस्य सततस्तत्त्वकथनमनर्थकं प्रयोजनविरहात्, सति च तस्मिन्कृतकृत्यत्वानुपपत्तेः, तथा सर्वज्ञत्वाद्वीतरागत्वाच्च भव्यानामेव विबोधमनुपपन्नं, अभव्याविबोधनेऽसर्वज्ञत्वाऽवीतरागत्वप्रसङ्गादिति, अत्रोच्यते प्रथमपक्षे तावत् सर्वथा कृतकृत्यत्वं नाभ्युपगम्यते, भगवतस्तीर्थकरनामकर्मविपाकानुभवात्, तस्य च धर्मदेशनादिप्रकारेणैवानुभूतेः, द्वितीयपक्षे तु त्रैलोक्यगुरोर्धर्मदेशनक्रिया विभिन्नस्वभावेषु प्राणिषु तत्स्वाभाव्याद्विबोधाविबोधकारिणी पुरुषोलूककमलकुमुदादिषु आदित्यप्रकाशनक्रियावत्, उक्तं च वादिमुख्येन—"त्वद्वाक्यतोऽपि केषाञ्चिदबोध इति मेऽद्भुतं। भानोर्मरीचयः कस्य नाम नालोकहेतवः ? ॥ १ ॥ न चाद्भुतमुलूकस्य प्रकृत्या क्लिष्टचेतसः। स्वच्छा अपि तमस्त्वेन भासन्ते भास्वतः कराः ॥ २ ॥ इत्यादि" यथा वा सुवैद्यः साध्यमसाध्यं वा व्याधिं चिकित्समानः प्रत्या-

चक्षाणश्च नातज्ज्ञः न च [राग]द्वेषवान्, एवं साध्यमसाध्यं भव्याभव्यकर्मरोगमपनयन्ननपयनंश्च भगवान्नातज्ज्ञो न च रागद्वेषवानिति ॥ ८९ ॥ तां ज्ञानकुसुमवृष्टिं बुद्धिमयेन बुद्ध्यात्मकेन पटेन गणधरा गौतमादयो ग्रहीतुमादातुं निरवशेषां सम्पूर्णां, गणभृतां बीजादिबुद्धित्वात्, ततः किं कुर्वन्ति? तीर्थकरभाषितानि कुसुमकल्पानि ग्रन्थन्ति विचित्रकुसुममालावत्, किमर्थं? प्रगतं प्रशस्तमादौ वा वचनं प्रवचनं–द्वादशाङ्गं गणिपिटकं सङ्घो वा, तदर्थम् ॥ ९० ॥ प्रयोजनान्तरमाह—

घित्तुं च सुहं सुहगणणधारणा दाउं पुच्छिउं चेव । एएहिं कारणेहिं, जीयंति कयं गणहरेहिं ॥ ९१ ॥

इह मुत्कलं भगवता तीर्थकरेणोक्तं वचनवृन्दं मुत्कलकुसुमनिकुरम्बमिव सर्वात्मना ग्रहीतुं न शक्यते, ग्रथितं तु सूत्रीकृतं सत् ग्रहीतुं सुखं भवति, [ इयमत्र भावना ] पदवाक्यप्रकरणाध्यायोद्देशाध्ययनप्राभृतवस्तुपल्लवादिनियतक्रमव्यवस्थापितं जिनवचनमेतावदस्य गृहीतमेतावच्च पुरस्ताद्ग्रहीतव्यमिति विवक्षया प्रवर्द्धमानेनोत्साहेन यत्नत एव ग्रहीतुं शक्यते, चः समुच्चये, तथा गुणनं–परावर्त्तनं गणनं वा, एतावदधीतमेतावदध्येतव्यमिति, धारणा त्वविस्मृतिः, ते अपि ग्रथिते सति सुखं भवतः दातुं शिष्येभ्यः, प्रष्टुं च संशयापनोदार्थं गुरुपादमूले, चः पूर्ववत्, एवकारस्य तु व्यवहितसम्बन्धः, ग्रहीतुं सुखमेव भवतीति । एतैरनन्तरोक्तैः कारणैर्हेतुभूतैः 'जीयं'ति प्राकृतत्वात्, यथा जीवस्य जीवितं जीवन्मात्ररूपं, न कदाचिद् व्यवच्छेदमुपयाति, तथा श्रुतमपि सदावस्थानं द्वादशाङ्गस्य स्यादित्येवमर्थं कृतं ग्रथितं गणधरैः, अथवा जीतमाचरितं कल्पः सर्वेषां गणभृतामिदं सन्दर्भणीयं तीर्थकरवचनमिति तैः कृतम् ॥ ९१ ॥ तथा चाह—

अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं । सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥ ९२ ॥

अर्थमात्रमेवार्हन्भाषते, ततो गणधराः शासनस्य हितार्थं 'निपुणं' बहु सूक्ष्मार्थप्रतिपादकं नियतगुणं वा निगुणं सन्निहिताऽशेषसूत्रगुणमित्यर्थः, द्वादशाङ्गरूपं सूत्रं ग्रन्थन्ति, तत एव जगति सूत्रं प्रवर्त्तते, पाठान्तरं वा 'गणधरा निपुणा निगुणा वेति' ॥ ९२ ॥ नन्वर्थो नाभिलाप्यस्तस्याऽशब्दरूपत्वादतस्तं कथं भगवान्भाषते?, उच्यते, शब्द एवार्थप्रत्यायनकार्यत्वादुपचारतोऽर्थः, यथा आचारवचनत्वादाचार इत्यादि। ननु शब्दमेवार्थप्रत्यायकमर्हन्भाषते, न तु साक्षादर्थं, गणभृतोऽपि च शब्दात्मकमेव श्रुतं ग्रन्थन्ति, कोऽत्र विशेषः?, उच्यते, स हि भगवान्विशिष्टमतिसम्पन्नगणधरापेक्षया प्रभूतार्थमर्थमात्रस्वल्पमेवाभिधत्ते, न त्वितरजनसाधारणं ग्रन्थराशिं, गणभृतस्तु न तथेति। तत्पुनः सूत्रं किमादि किं पर्यन्तं कियत् परिमाणं को वाऽस्य सार इत्याह—

सामाइयमाईयं सुयनाणं जाव बिंदुसाराओ। तस्सवि सारो चरणं, सारो चरणस्स निव्वाणं ॥ ९३ ॥

तच्छ्रुतज्ञानं सामायिकमादौ यस्य तत् 'यावद्बिन्दुसारात्' विन्दुसाराख्यचतुर्दशपूर्वपर्यन्तमित्यर्थः, यावच्छब्दात्तन्मूलभेदाऽपेक्षया द्विभेदमङ्गप्रविष्टमनङ्गप्रविष्टं च, अङ्गप्रविष्टं द्वादशभेदमाचारादिभेदात्, अनङ्गप्रविष्टमनेकं (कभेदं) तद्व्यतिरिक्तकालिकोत्कालिकादिभेदात्। 'तस्यापि' श्रुतज्ञानस्य सारश्चरणं, सारोऽत्र प्रधानवचनः। ननु ज्ञानक्रियाभ्यां समुदिताभ्यामेव मोक्ष इति समानत्वमेवोभयोस्ततश्च कथं ज्ञानसारश्चरणमिति?, उच्यते, इह यद्यपि 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' (तत्त्वा० १–१) इति समानं ज्ञानचरणयोर्निर्वाणहेतुत्वमुपन्यस्तं, तथापि गुणप्रधानभावोऽस्ति, ज्ञानं प्रकाशकं, चरणं त्वभिनवकर्मादाननिरोधफलमिति, ज्ञानचरणरूपद्विकाधीनो मोक्षः, तथापि प्रकाशकतयैव व्याप्रियते ज्ञानं, कर्ममलशोधकतया तु चरणं, प्रधानगुणभावाच्चरणं ज्ञानस्य सारः, अपिशब्दात्सम्यक्त्वस्यापि सारश्चरणं, सम्यग्दर्शनादित्रयस्य समुदितस्यैव निर्वाणहेतुत्वात् ॥ ९३ ॥

तथा चाह निर्युक्तिकारः—

सुयनाणंमि वि जीवो, वट्टंतो सो न पाउणइ मोक्खं । जो तवसंजममइए जोए न चएइ वोढुं जे ॥ ९४ ॥

श्रुतज्ञाने अपिशब्दान्मत्यादिष्वपि ज्ञानेषु जीवो वर्त्तमानः सन्न प्राप्नोति मोक्षमित्यनेन प्रतिज्ञार्थः सूचितः, यः किंविशिष्टः?, यस्तपःसंयममयान्—तपःसंयमात्मकान् योगान्न शक्नोति वोढुमित्यनेन हेत्वर्थः 'जे' इति पादपूरणे, दृष्टान्तः स्वयमभ्यूह्यो वक्ष्यति वा, प्रयोगश्च न ज्ञानमेवेप्सितार्थप्रापकं सत्क्रियाविरहात् स्वदेशप्राप्त्यभिलापिगमनक्रियाशून्यमार्गज्ञज्ञानवत्, सौत्रो वा दृष्टान्तः, मार्गज्ञनिर्यामकाधिष्ठितेप्सितदिक्सम्प्रापकपवनक्रियाशून्यपोतवत् ॥ ९४ ॥ तथा चाह—

जह छेयलद्धनिज्जामओवि, वाणियगइच्छियं भूमिं । वाएण विणा पोओ, न चएइ महण्णवं तरिउं ॥ ९५ ॥

यथा येन प्रकारेण 'छेको' दक्षो 'लब्धः' प्राप्तो निर्यामको येन स तथाविधः, अपेः सुकर्णधाराधिष्ठितोऽपि, वणिज इष्टा वणिगिष्टा तां भूमिं महार्णवं तीर्त्वा वातेन विना पोतो न शक्नोति, प्राप्तुमिति वाक्यशेषः ॥ ९५ ॥ उपनयमाह—

तह नाणलद्धनिज्जामओवि, सिद्धिवसहिं न पाउणइ । निउणोवि जीवपोओ, तवसंजममारुअविहूणो ॥ ९६ ॥

तथा श्रुतज्ञानमेव लब्धो निर्यामको येन जीवपोतेन स तथा [विधः,] अपेः सुनिपुणमतिकर्णधाराद्यधिष्ठितोऽपि, संयमतपोनियमरूपेण मारुतेन विहीनो निपुणोऽपि जीवपोतो भवार्णवं तीर्त्वा सन्मनोरथवणिजोऽभिप्रेतां सिद्धिवसतिं न प्राप्नोति, तस्मात्तपःसंयमानुष्ठाने खल्वप्रमादवता भवितव्यं ॥ ९६ ॥ तथा चात्रौपदेशिकमेव गाथासूत्रमाह—

संसारसागराओ, उव्वुड्डो मा पुणो निवुड्डिज्जा । चरणगुणविप्पहीणो, बुड्डइ सुबहुंपि जाणंतो ॥ ९७ ॥

अस्याः पदार्थो दृष्टान्तद्वारेण प्रोच्यते, यथा कश्चित्कच्छपः प्रचुरतृणपत्रपटलनिविडतमशेवालाच्छादितोदकान्धकारमहा-

ह्रदान्तर्गतो विविधानेकजलचरक्षोभादिव्यसनपरम्पराव्यथितमानसः सर्वतः परिभ्रमन् कथमपि शेवालरन्ध्रमासाद्य शरदि पार्वण-चन्द्रचन्द्रिकास्पर्शसुखमनुभूय भूयोऽपि स्वबन्धुस्नेहाकृष्टचेतोवृत्तिस्तेषामप्यदृष्टकल्याणानामहमिदं सुरलोककल्पं किमपि दर्शया-मीत्यवधार्य ह्रदमध्ये निमग्नः, ततः समासादितबन्धुवर्गस्तद्दर्शननिमित्तं विवक्षितरन्ध्रोपलब्ध्यर्थं पर्यटन्नपश्यंश्च कष्टतरं व्यसनमनु-भवति स्म, एवमयमपि जीवकच्छपोऽनादिकर्मपटलाच्छादितान्मिथ्यादर्शनादितमोनुगतान् विविधशारीरमानसनेत्रकर्णवेदनाज्वर-कुष्ठभगन्दरेष्टवियोगानिष्टसम्प्रयोगादिदुःखजलचरानुगतान्, संसार एव सागरस्तस्मात्कथञ्चिदेव मनुष्यभवप्राप्तियोग्यकर्मोदयल-क्षणरन्ध्रमासाद्य मनुष्यत्वप्राप्त्या उन्मग्नः सन् जिनचन्द्रवचनकिरणावबोधमासाद्य दुष्प्रापोऽयं जिनवचनबोधिलाभ इत्येवं जानानः स्वजनस्नेहविषयातुरचित्ततया मा पुनः कूर्मवत्तत्रैव निमज्जेत्, नन्वज्ञानी कूर्मो अतो निमज्जत्येव, इतरस्तु हिताहितप्राप्तिपरि-हारज्ञो ज्ञानी ततः कथं निमज्जति ?, उच्यते, चरणगुणैर्विविधमनेकप्रकारं प्रकर्षेण हीनश्चरणगुणविप्रहीणः, ततः सुबह्वपि जान-न्निमज्जति, अपेरल्पमपि, अथवा निश्चयनयमतेनाज्ञ एवासौ, ज्ञानफलशून्यत्वादिति ॥ ९७ ॥ प्रकृतमेवार्थं समर्थयन्नाह—

सुबहुंपि सुयमहीयं, किं काही ? चरणविप्पहीणस्स । अंधस्स जह पलित्ता, दीवसयसहस्सकोडीवि ॥ ९८ ॥

सुबह्वपि श्रुतमधीतं चरणविप्रहीणस्य किं करिष्यति ?, न किञ्चित्, अकिञ्चित्करमेवेति भावः, तत्फलाभावात्, अत्र दृष्टान्तः—अन्धस्य यथा दीपशतसहस्रकोट्यपि प्रदीप्तानां दीपानामित्यर्थः, अपेर्द्व्यादिकोटयोऽपि ॥ ९८ ॥ व्यतिरेकमाह—

अप्पंपि सुयमहीयं, पयासयं होइ चरणजुत्तस्स । इक्कोवि जह पईवो, सचक्खुअस्सा पयासेइ ॥ ९९ ॥

अल्पमपि श्रुतमधीतं 'चरणयुक्तस्य' सावद्येतरयोगनिवृत्तिप्रवृत्तिपरिणामरूपचरणलक्षणचक्षुष्मतः प्रापकं (प्रकाशकं) भवति,

एकोऽपि यथा दीपः सचक्षुष्कस्य प्रकाशयति ॥ ९९ ॥ ननु इत्थं सति चरणरहितानां ज्ञानं सुगतिफलापेक्षया निरर्थकं प्राप्नोति, उच्यते, इष्यत एव, यत आह—

जहा खरो चंदणभारवाही, भारस्स भागी नहु चंदणस्स ।
एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सोग्गईए ॥ १०० ॥

यथा खरश्चन्दनभारवाही भारस्य भागी न तु चन्दनस्य, एवमेव ज्ञानी चरणेन हीनो ज्ञानस्य भागी, न तु नैव सुगतेः ॥ १०० ॥ इदानीं विनेयस्य मा भूदेकान्तेनैव ज्ञानेऽनादरो भविष्यति च क्रियायां तच्छून्यायामपि पक्षपातः, अतो द्वयोरपि केवलयोरिष्टफलासाधकत्वमुपदर्शयन्नाह—

हयं नाणं कियाहीणं, हया अन्नाणओ किया । पासंतो पंगुलो दड्ढो धावमाणो अ अंधओ ॥ १०१ ॥

अत्राक्षरार्थः प्रतीत एव, भावार्थस्त्वयं—ज्ञान्यपि क्रियारहितो न कर्माग्नेः पलायितुं समर्थः, क्रियाविकलत्वात्, नापीतरः, ज्ञानविकलत्वात्, अत्र प्रयोगो—ज्ञानमेव विशिष्टफलप्रसाधकं न भवति, सत्क्रियायोगशून्यत्वात्, नगरदाहे पङ्गुलोचनविज्ञानवत्, नापि क्रियैव विशिष्टफलप्रसाधिका, सज्ज्ञानरहितत्वात्, नगरदाहे एवान्धस्य पलायनक्रियावत्, ननु एवं ज्ञानक्रिययोः समुदितयोरपि निर्वाणप्रसाधकसामर्थ्यानुपपत्तिः प्रसज्यते, प्रत्येकमभावात्, सिकतातैलवत्, अनिष्टं चैतत्, उच्यते, समुदायसामर्थ्यं हि प्रत्यक्षसिद्धं, यतो ज्ञानक्रियाभ्यां कटादिकार्यसिद्धय उपलभ्यन्त एव, न तु सिकतासु तैलं, न च दृष्टमपह्नोतुं शक्यते, एवमाभ्यामपि कार्यसिद्धिरविरुद्धैव, किं च—न सर्वथैवानयोः साधनत्वं नेष्यते, देशोपकारित्वमभ्युपगम्यत एव ॥ १०१ ॥ यत आह—

चरणरहित ज्ञानस्य निष्फलता गा. १००

एकान्तेन केवलज्ञान-क्रिययोरिष्टफलाभाव गा. १०१

संजोगसिद्धीइ फलं वयंति, नहु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥ १०२ ॥

ज्ञानक्रिययोः संयोगनिष्पत्तावेव मोक्षलक्षणं फलं वदन्ति तीर्थकराः, न हि लोकेऽप्येकचक्रेण रथः प्रवर्त्तते, एवमन्यदपि सामग्रीजन्यं कार्यं सर्वमवगन्तव्यं, अत्र दृष्टान्तः—अन्धश्च पङ्गुश्च वने समेत्य—मिलित्वा तौ सम्प्रयुक्तौ नगरं प्रविष्टौ, समेत्येत्युक्तेऽपि तौ सम्प्रयुक्ताविति पुनरभिधानमात्यन्तिकसंयोगप्रदर्शनार्थं, एवं ज्ञानक्रियाभ्यां समुदिताभ्यां सिद्धिपुरमवाप्यते, प्रयोगश्च—विशिष्टकारणसंयोगोऽभिलषितकार्यप्रसाधकः सम्यक्क्रियोपलब्धिरूपत्वात् अन्धपङ्ग्वोरिव नगरावाप्तेरिति, यः पुनरभिलषितफलसाधको न भवति स सम्यक्क्रियोपलब्धिरूपोऽपि न भवति, इष्टगमनक्रियाविकलविघटितैकचक्ररथवदिति व्यतिरेकः ॥ १०२॥ ननु ज्ञानक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते ?, किमविशेषेण शिविकोद्वाहकवत्, उत भिन्नस्वभावतया गमनक्रियायां नयनचरणादिव्रातवत्, उच्यते, भिन्नस्वभावतया, यत आह—

नाणं पयासगं सोहओ तवो संजमो य गुत्तिकरो । तिण्हंपि समाजोगे, मोक्खो जिणसासणे भणिओ ॥ १०३॥

कचवरसमन्वितमहागृहशोधनप्रदीपपुरुषादिव्यापारवदिह कर्मकचवरभृतजीवगृहशोधनालम्बनो ज्ञानादीनां स्वभावभेदेन व्यापारोऽवसेयः इति समुदायार्थः । तत्र ज्ञानं प्रकाशकत्वेनोपकुरुते, तत्स्वभावात्, गृहमलापनयने प्रदीपवत्, क्रिया तु तपःसंयमरूपत्वादित्थमुपकुरुते—तापयत्यनेकभवोपात्तमष्टप्रकारं कर्म्मेति तपः तच्च शोधकत्वेनोपकुरुते, तत्स्वभावत्वात् गृहकचवरो-

ञ्ज्ञनक्रियया तच्छोधने कर्मकरपुरुषवत्, तथा संयम आश्रवद्वारविरमणरूपः, चशब्दः पृथग्ज्ञानादीनां प्रक्रान्तफलसिद्धौ भिन्नोपकारकर्तृत्वावधारणार्थः, गुप्तिकर(गुप्तिः) आगन्तुककर्मकचवरनिरोध इत्यर्थः,[गुप्तिकरणशीलो गुप्तिकरः,] ततश्च संयमोऽप्यपूर्वकर्मकचवरागमननिरोधतयैवोपकुरुते, तत्स्वभावत्वात्, गृहशोधने पवनप्रेरितकचवरागमननिरोधेन वातायनादिस्थगनवत्, एवं त्रयाणामेव, अपिरवधारणेऽथवा सम्भावने, किं सम्भावयति ?—त्रयाणामपि ज्ञानादीनां, निश्चयतः क्षायिकाणां, न तु क्षायोपशमिकानामिति, समायोगे सति मोक्षः—सर्वथाष्टविधकर्ममलवियोगलक्षणो जिनशासने भणितः। ननु 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, इत्यागमो विरुध्यते, सम्यग्दर्शनमन्तरेणोक्तलक्षणज्ञानादित्रयादेव मोक्षप्रतिपादनात्, उच्यते, तस्य ज्ञानरूपत्वाद्, रुचिरूपत्वाज्ज्ञानान्तर्भावाददोषः ॥ १०३ ॥ अथ यत्प्रागभ्यधायि 'श्रुतज्ञानेऽपि जीवो वर्त्तमानः सन्न प्राप्नोति मोक्ष'मित्यादि प्रतिज्ञागाथासूत्रं, तत्रैव सूत्रसूचितः खल्वयं हेतुरवगन्तव्यः, कुतः ?, तस्य क्षायोपशमिकत्वाद्, अवधिज्ञानवत्, क्षायिकज्ञानाद्यवाप्तौ च मोक्षप्राप्तिरिति तत्त्वं, अतः श्रुतस्यैव क्षायोपशमिकत्वमुपदर्शयन्नाह—

भावे खओवसमिए, दुवालसंगंपि होइ सुयनाणं। केवलियनाणलंभो, नन्नत्थ खए कसायाणं ॥ १०४ ॥

भवनं भावः, भवतीति वा भावः तस्मिन्, स च औदयिकाद्यनेकभेदः, अत आह—क्षायोपशमिके, द्वादश अङ्गानि यस्मिंस्तद् द्वादशाङ्गं भवति श्रुतज्ञानं, अपेरङ्गबाह्यमपि, उपलक्षणं चैतत्तेन मत्यादिज्ञानत्रयमपि तथा सामायिकचतुष्टयमपि, तथा केवलस्य भावः कैवल्यं—घातिकर्मवियोग इत्यर्थः, तस्मिन्सति ज्ञानं कैवल्यज्ञानं, तस्य लाभः, कथं ? कषायाणां—क्रोधादीनां क्षये सति, नान्यत्रेति, तृतीयार्थे सप्तमी, नान्येन प्रकारेणेति, इह छद्मस्थवीतरागावस्थायां कषायक्षये सत्यपि अक्षेपेण कैवल्य-

ज्ञानाभावे ज्ञानावरणक्षयानन्तरं च भावेऽपि कषायक्षयग्रहणं तेषामत्र प्राधान्यख्यापनार्थं, कषायक्षये एव सति निर्वाणं भवति, तद्भावे त्रयाणामपि सम्यक्त्वादीनां क्षायिकत्वसिद्धेः, नन्वेवं तर्हि यदादावुक्तं श्रुतज्ञानेऽपि जीवो वर्त्तमानः सन्न प्राप्नोति मोक्षं, यस्तपःसंयमात्मकयोगशून्य इति तद्विशेषणमनर्थकं, श्रुते सति तपःसंयमात्मकयोगसहिष्णोरपि मोक्षाभावात्, उच्यते, सत्यमेतत्, किन्तु क्षायोपशमिकसम्यक्त्वश्रुतचारित्राणामपि समुदितानां क्षायिकसम्यक्त्वादिनिबन्धनत्वेन पारम्पर्येण मोक्षहेतुत्वाददोषः ॥ १०४ ॥ आह–इष्टमस्माभिर्मोक्षकारणकारणं श्रुतादि, तस्यैव कथमलाभो लाभो वा ?, उच्यते—

अट्ठण्हं पयडीणं, उक्कोसठिइइ वट्टमाणो उ। जीओ न लहइ सामाइयं चउण्हंपि एगयरं ॥ १०५ ॥

अष्टानां ज्ञानावरणीयादिकर्मप्रकृतीनां, उत्कृष्टा चासौ स्थितिश्च उत्कृष्टस्थितिः, तस्यां वर्त्तमानो जीवो न लभते, किं ?, सामायिकं, चतुर्णां सम्यक्त्वश्रुतदेशविरतिसर्वविरतिरूपाणामेकतरं–अन्यतमत्, अपेर्मतिज्ञानादि च न लभते, पूर्वप्रतिपन्नोऽपि आयुर्वर्जकर्मोत्कृष्टस्थितौ न भवति, यतोऽवाप्तसम्यक्त्वो हि तत्परित्यागेऽपि न भूयो ग्रन्थिमुल्लङ्घ्योत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति, आयुषस्तु उत्कृष्टस्थितौ वर्त्तमानोऽनुत्तरविमानवासिसुर उपपातकाले सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्नो न तु प्रतिपद्यमानकः, तुशब्दादायुर्वर्जशेषसप्तकर्मप्रकृतीनां जघन्यस्थितावपि वर्त्तमानः सूक्ष्मसम्परायादिः सम्यक्त्वश्रुतसर्वविरतिसामायिकानां त्रयाणां पूर्वप्रतिपन्नो नान्यः, आयुषि जघन्यस्थितौ तूभयाभावः, जघन्यायुष्कस्य क्षुल्लकभवग्रहणाधारत्वात्, तस्य च वनस्पतिषु भावात्, तत्र चोभयाभावात्। प्रकृतीनां चोत्कृष्टेतरभेदभिन्ना स्थितिरियं–ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामुत्कृष्टस्थितिस्त्रिंशत्सागरोपमकोटीकोट्यः, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः, त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य, जघन्या तु द्वाद-

शमुहूर्त्ता वेदनीयस्य, नामगोत्रयोरष्टौ, शेषाणामन्तर्मुहूर्तमिति। ननु किमेता युगपदेवोत्कृष्टस्थितिमासादयन्ति उतैकस्यामुत्कृष्टस्थितिरूपायां सञ्जातायामन्या अपि नियमतो भवन्ति आहोस्विदन्यथा वैचित्र्यं?, उच्यते, मोहनीयस्योत्कृष्टस्थितौ शेषाणामपि षण्णामुत्कृष्टैव, आयुष्कस्य उत्कृष्टा वा मध्यमा वा, न तु जघन्या, मोहनीयरहितानां तु शेषप्रकृतीनां अन्यतमस्या उत्कृष्टस्थितिसद्भावे मोहनीयस्य शेषाणां च उत्कृष्टा मध्यमा वा, न तु जघन्या इति प्रासङ्गिकम् ॥ १०५ ॥ अथ लाभकारणमाह—

सत्तण्हं पयडीणं अब्भिंतरओ उ कोडिकोडीणं। काऊण सागराणं, जइ लहइ चउण्हमण्णयरं ॥ १०६ ॥

सप्तानामायुर्वर्जकर्मप्रकृतीनां या पर्यन्तवर्तिनी स्थितिस्तामङ्गीकृत्य सागरोपमाणां कोटाकोटी तस्या अभ्यन्तरतो—मध्यतो मध्य एव, तुरेवार्थः, कृत्वा आत्मानमिति गम्यते, यदि लभते—प्राप्नोति चतुर्णां—श्रुतसामायिकादीनामन्यतरत्, तत एव नान्यथा, पाठान्तरं वा 'कृत्वा सागरोपमाणां स्थितिं लभते चतुर्णामन्यतरदि'ति। इयमत्र भावना—आयुर्वर्जानां सप्तकर्मप्रकृतीनां यदा पर्यन्तवर्तिनी स्थितिः पल्योपमाऽसङ्ख्येयभागहीना सागरोपमकोटीप्रमाणा अवतिष्ठते तदा घनरागद्वेषपरिणामरूपोऽत्यन्तदुर्भेददारुग्रन्थिवत् कर्मग्रन्थिर्भवति, तस्मिंश्च कर्मग्रन्थावपूर्वकरणनामकविशेषविशुद्धिकुठारधारया भिन्ने परमपदहेतोः सम्यक्त्वस्य लाभ उपजायते, नान्यथा, तद्भेदश्च मनोविघातपरिश्रमादिभिर्दुःसाध्यः, तथाहि—स जीवः कर्मरिपुमध्यगतस्तं प्राप्यातीव परिश्राम्यति, प्रभूतकर्मारातिसैन्यान्तकृत्त्वेन सञ्जातखेदत्वात्, सङ्ग्रामशिरसीव दुर्जयापाकृतानेकशत्रुनरेन्द्रभटवत्। आह—किं तेन भिन्नेन? किं वा सम्यक्त्वादिनावाप्तेन?, यथातिदीर्घकर्मस्थितिः सम्यक्त्वादिगुणरहितेनैव क्षपिता, एवं शेषमपि कर्म गुणरहित एव क्षपयित्वा विवक्षितफलभाग्भवतु, उच्यते, स हि तस्यामवस्थायां वर्त्तमानोऽनासादितगुणान्तरो न शेषक्षपणया विशेषफलप्रसा-

धनायालं, चित्तविघातादिप्रचूरविघ्नत्वात्, विशिष्टाप्राप्तपूर्वफलप्राप्त्यासन्नत्वात्, प्रागभ्यस्तक्रियया तस्यावाप्तुमशक्यत्वाच्च, अनेकसंवत्सरानुपालिताचाम्लादिपुरश्चरणक्रियासादितगुणान्तरोत्तरसहायक्रियारहितविद्यासाधकवत्, तथा चाह भाष्यकारः— 'पाएण पुव्वसेवा परिमउई साहणंमि गुरुतरिआ । होइ महाविज्जाए किरिया पायं सविग्घा य ॥ १ ॥ तह कम्मट्ठिइखवणे परिमउई मोक्खसाहणे गरुई । इह दंसणाइकिरिआ दुलहा पायं सविग्घा य ॥ २ ॥' अथवा यत एव बह्वी कर्मस्थितिरनेनोन्मूलिता अत एवापचीयमानदोषस्य सम्यक्त्वादिगुणलाभः सञ्जायते, निःशेषकर्मपरिक्षये सिद्धत्ववत्, तत एव च मोक्ष इति, अतो न शेषमपि कर्म गुणरहित एवापाकृत्य मोक्षं प्रसाधयतीति स्थितम् । अथ सम्यक्त्वादिगुणावाप्तिविधिरुच्यते—जीवा द्विधा—भव्या अभव्याश्च, तत्र भव्यानां करणत्रयं भवति, करणं नाम सम्यक्त्वाद्यनुगुणो विशुद्धः परिणामविशेषः, यथाप्रवृत्तकरणं १ अपूर्वकरणं २ अनिवर्त्तिकरणं च ३, तत्र यथैवानादिसंसिद्धेनैव प्रकारेण प्रवृत्तं यथाप्रवृत्तं, क्रियते कर्मक्षपणमनेनेति करणं, यथाप्रवृत्तं च तत्करणं चेति समासः, अनादिकालादारभ्य यावद्ग्रन्थिस्थानं तावदाद्यं, ग्रन्थिं तु समतिक्रामतो द्वितीयं, ग्रन्थेर्भेदकरणात्सम्यग्दर्शनलाभाभिमुखस्य तृतीयम् ॥ १०६ ॥ अथ करणत्रयमङ्गीकृत्य सामायिकलाभदृष्टान्तानभिधित्सुराह—

पल्लय[1] गिरिसरि[2]उवला पिवीलिया[3] पुरिस[4] पह[5] जर[6]ग्गहिआ । कुद्दव[7] जल[8] वत्थाणि[9] य सामाइयलाभदिट्ठंता ॥ १०७ ॥

इह सामायिकलाभे नव दृष्टान्ताः, पल्ल(ल्य)कदृष्टान्तः १ गिरिसरिदुपलः २ पिपीलिका ३ पुरुषः ४ पथ ५ ज्वरगृहीतः ६

कोद्रवः ७ जलं ८ वस्त्रं ९ इति । पल्लो(ल्यो) लाटदेशे धान्यालयः, तत्र कश्चिन्महति पल्ये स्वल्पं स्वल्पतरं धान्यं प्रक्षिपति, प्रचुरं प्रचुरतरं च तत आदत्ते, एवं ग्रहणनिक्षेपकरणे कालान्तरेण स रिक्तीभवति, एवं कर्मधान्यपल्ले(ल्ये) जीवोऽनाभोगप्रवृत्तेन यथाप्रवृत्तकरणेन स्वल्पं स्वल्पतरमुपचिन्वन् प्रभूतं प्रभूततरमपचिन्वंश्च गच्छता कालेन ग्रन्थिमासादयति पुनस्तं भिन्दानस्याऽपूर्वकरणं, सम्यग्दर्शनलाभाभिमुखस्यानिवर्त्तीति, एष पल्ल(ल्य)कदृष्टान्तः । ननु दृष्टान्त एवायमनुपपन्नः, यत आगमः—'पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए नालिं । असंजए अविरए बहु बंधइ निज्जरइ थोवं ॥ १ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे नालिं । जे संजए पमत्ते बहु निज्जरइ बंधइ थोवं ॥२॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे न किंचि । जे संजए अपमत्ते बहु निज्जरे बंधइ न किंचि ॥३॥' ततः पूर्वमसंयतस्य मिथ्यादृष्टेर्बहुतरबन्धकस्य कुतो ग्रन्थिदेशप्राप्तिः?, उच्यते, ननु मुग्ध! बाहुल्यमङ्गीकृत्येदमुक्तं, अन्यथा सदा बहुबन्धाङ्गीकरणेऽपचयानवस्थानादशेषकर्मपुद्गलानामेव ग्रहणं प्राप्नोति, अनिष्टं चैतत्, सम्यग्दर्शनादिप्राप्तिश्चानुभवसिद्धा विरुध्यते, तस्मात्प्रायोवृत्तिगोचरमिदं पल्ले(ल्ये)त्यादि १ । कथमनाभोगतः प्रचुरतरकर्मक्षय इत्याह—गिरेः सरिद्गिरिसरित्तस्यामुपलाः—पाषाणास्तद्वत्, कोऽर्थः?, यथा गिरिसरिदुपला अन्योन्यघर्षेणोपयोगशून्या अपि विचित्राकृतयः स्युस्तथा जीवा मिथ्यात्वाणुप्रकर्षणाद्विचित्रकर्मस्थितिका विचित्राः, यथाप्रवृत्तकरणतो ग्रन्थिदेशं प्राप्तास्तमतिक्रम्य च सम्यक्त्वं लभन्ते २ । पिपीलिकाः—कीटिकाः, यथा तासां भुवि स्वभावगमनं स्यात् १, तथा स्थाण्वारोहणं, २, सञ्जातपक्षाणां च तस्मादप्युत्पतनं ३, स्थाणुमूर्द्धनि चावस्थानं ४, कासाञ्चित् स्थाणुशिरसः प्रत्यवसर्पणं ५, एवमिह जीवानां कीटिकास्वभावगमनवद्यथाप्रवृत्तकरणं १, स्थाण्वारोहणकल्पं त्वपूर्व(र्वकरणं) २, उत्पननतुल्यमनिवर्त्ति० ३, स्थाणुपर्यन्तावस्थानसदृशं तु ग्रन्थौ अव-

स्थानं ४, तच्छिरःप्रत्यवसर्पणसमं पुनः कर्मस्थितिवर्द्धनमिति ५,३। पुरुषदृष्टान्तः—केचन त्रयः पुरुषाः महानगरयियासया महाटवीं प्रपन्नाः, सुदीर्घमध्वानमतिक्रामन्तः पुरस्तादुभयतः समुत्खातकरवालपाणी द्वौ तस्करावालोक्य तेषामेकः प्रतीपमनुप्रयातोऽपरस्तु ताभ्यामेव गृहीतोऽन्यस्तु तौ द्वावपि अतिक्राम्येष्टं नगरं प्राप्तः, अयमुपनयः—इह संसाराटव्यां पुरुषास्त्रयः कल्प्यन्ते, पन्थाः कर्मस्थितिरतिदीर्घा, भयस्थानं ग्रन्थिदेशः, द्वौ तस्करौ रागद्वेषौ, तत्र प्रतीपगामी यो यथाप्रवृत्तकरणेन ग्रन्थिदेशमासाद्य पुनरनिष्टपरिणामः सन्नुत्कृष्टां कर्मस्थितिमासादयति, तस्करद्वयावरुद्धस्तु प्रबलरागद्वेषोदयो ग्रन्थिकसत्त्वः, अभिलषितनगरानुप्राप्तस्तु अपूर्वकरणतो रागद्वेषचौरावपाकृत्यानिवर्त्तिकरणेनावाप्तसम्यग्दर्शन इति ४। आह—स हि सम्यग्दर्शनमुपदेशतो लभतेऽनुपदेशतो वा?, उच्यते, उभयथापि, यथा कश्चिन्नरः पथः परिभ्रष्टः परिभ्रमन् स्वयं पन्थानमासादयति, कश्चित्तु परोपदेशेन, अपरस्तु नासादयत्येव, एवमिहाप्यत्यन्तप्रनष्टसत्पथो जीवो यथाप्रवृत्तात्संसाराटव्यां परिभ्रमन् कश्चिद्ग्रन्थिमासाद्यापूर्वकरणेन तमतिक्रम्यानिवर्त्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादिरूपं निर्वाणपुरपन्थानं लभते, कश्चित्परोपदेशात्, अपरस्तु प्रतीपगामी ग्रन्थिकसत्त्वो वा नैव लभते ५। ज्वरदृष्टान्तः—ज्वरः कश्चित्स्वयमेवापैति, कश्चिद्भेषजोपयोगेन, कश्चिन्नैव, एवमिहापि मिथ्यादर्शनमहाज्वरोऽपि कश्चित्स्वयमेवापैति, कश्चिदर्हद्वचनभेषजोपयोगात्, अपरस्तु तदौषधोपयोगेऽपि नापैति, करणत्रययोजना स्वयमेव कार्या ६। कोद्रवदृष्टान्तः केषाञ्चित्कोद्रवाणां मदनभावः स्वयमेव कालान्तरतोऽपैति, केषाञ्चिद्गोमयादिपरिकर्मतः, अपरेषां तथापरिकर्मणायामपि नापैति, एवं मिथ्यादर्शनभावोऽपि केषाञ्चित्स्वयमेवापैति, अपरेषामुपदेशपरिकर्मतः, अन्येषां नैव, इह च भावार्थः—स हि जीवोऽपूर्वकरणेन मदनार्धशुद्धशुद्धकोद्रवानिव दर्शनं मिथ्यात्वमिश्रसम्यक्त्वभेदेन त्रिधा विभज्य

सामायिक-लाभे पल्य-कादि-दृष्टान्ताः

ततोऽनिवर्त्तिकरणविशेषात्सम्यक्त्वं प्राप्नोति, एवं करणत्रययोगवतो भव्यस्य सम्यग्दर्शनप्राप्तिः, अभव्यस्यापि कस्यचिद्यथाप्रवृत्तकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिसन्दर्शनतः प्रयोजनान्तरतो वा प्रवर्त्तमानस्य श्रुतसामायिकलाभः, न शेषलाभः ७। जलदृष्टान्तः—यथा जलं मलिनार्द्धविशुद्धशुद्धभेदेन त्रिधा भवति, एवं दर्शनमपि मिथ्यादर्शनादिभेदेनापूर्वकरणतस्त्रिधा करोति, भावार्थः पूर्ववत् ८, एवं वस्त्रदृष्टान्तेऽपि भावाना कार्या ९ ॥ १०७ ॥ अथ प्रासङ्गिकमुच्यते—एवं सम्यग्दर्शनलाभोत्तरकालमवशेषकर्मणः पल्योपमपृथक्त्वस्थितिपरिक्षयोत्तरकालं देशविरतिरवाप्यते, पुनः सङ्ख्येयेषु सागरोपमेषु स्थितेरपगतेषु सर्वविरतिः, तदनन्तरमवशेषस्थितेरपि सङ्ख्येयेष्वेव सागरोपमेषु क्षीणेषूपशमश्रेणिः, तदनन्तरं भूयोऽप्यवशिष्टस्थितेः सङ्ख्येयेषु सागरोपमेष्वपगतेषु क्षपकश्रेणिः, इयं च देशविरत्यादिप्राप्तिरेकभवेनाप्यविरुद्धा, उक्तं च भाष्यकारेण—"सम्मत्तंमि उ लद्धे पलिअपुहत्तेण सावओ हुज्जा। चरणोवसमक्खयाणं सागरसंखंतरा हुंति ॥ १ ॥ एवं अप्पडिवडिए संमत्ते देवमणुअजम्मेसु। अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं ॥ २ ॥" भणितमानुषङ्गिकं, अथ यदुदयात्सम्यक्त्वसामायिकादिलाभो न स्यात् सञ्जातो वापैति, तानिहावरणभूतान्कषायान् प्रतिपादयन्नाह—

पढमिल्लुयाण उदए, नियमा संजोयणा कसायाणं। सम्मदंसणलंभं, भवसिद्धीयावि न लहंति ॥ १०८ ॥

प्रथमा एव प्रथमेल्लुकाः, देशीवचनमेतत्, अनतानुबन्धिन इत्यर्थः तेषां, प्राथम्यं चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात्क्षपणक्रमाद्वा, उदयः—उदीरणावलिकाप्रविष्टानां तत्पुद्गलानामुद्भूतसामर्थ्यता तस्मिन्, किं? 'नियमा'दित्यस्य व्यवहितः सम्बन्धः, अथ प्रथमिल्लुका विशिष्यन्ते, कर्मणा तत्फलभूतसंसारेण वा सह संयोजयन्ति जीवमिति संयोजनाः, कषन्ति—परस्परं

हिंसन्ति प्राणिनोऽस्मिन्निति कषः—संसारः कर्म वा, ततः कषः—कर्म भवो वा [तस्य] आयो—लाभो येभ्यस्ते कषायाः, संयोजनाश्च ते कषायाश्च संयोजनाकषायाः, तेषां उदये, किं?, नियमेन सम्यक्—अविपरीतं दर्शनं सम्यग्दर्शनं तस्य लाभस्तं, भवे सिद्धिर्येषां ते भवसिद्धिकाः, ननु सर्वेषामेव भवे सिद्धिर्भवति ततः किं भवग्रहणेन?, सत्यमेतत्, केवलं भवग्रहणादिह तद्भवो गृह्यते, तद्भवसिद्धिका अपि न लभन्ते किं पुनः परित्तसंसारिणोऽभव्या वेति ॥ १०८ ॥ उक्ताः सम्यक्त्वस्यावरणभूताः कषायाः, अथ देशविरत्यावरणभूतांस्तानाह—

बिइयकसायाणुदए, अपच्चक्खाणनामधेज्जाणं । सम्मदंसणलंभं, विरयाविरइं न उ लहंति ॥ १०९ ॥

द्वितीयाश्च ते कषायाश्च द्वितीयकषायास्तेषां, द्वितीयता च देशविरतिलक्षणद्वितीयगुणविघातात्(तित्वात्) क्षपणक्रमाद्वा, न विद्यते देशतः सर्वतो वा प्रत्याख्यानं येषूदयप्राप्तेषु तेऽप्रत्याख्यानाः, सर्वनिषेधवाची नञ्, त एव नामधेया येषां तेऽप्रत्याख्याननामधेयास्तेषामुदये सम्यग्दर्शनलाभं, भव्या लभन्त इति वाक्यशेषः, अयं च वाक्यशेषः तुशब्दसंसूचितो द्रष्टव्यः, विरमणं—विरतं तथा न विरतिरविरतिः, विरतं चाविरतिश्च विरताविरतिर्देशविरतिरित्यर्थः, तां न तु लभन्ते, तुशब्दात्सम्यग्दर्शनं लभन्त इति भावः ॥ १०९ ॥ [ अथ सर्वविरत्यावरणभूतांस्तानाह— ]

तइयकसायाणुदए, पच्चक्खाणावरणनामधिज्जाणं । देसिक्कदेसविरइं, चरित्तलंभं न उ लहंति ॥ ११० ॥

सर्वविरतिलक्षणतृतीयगुणविघातित्वात् क्षपणक्रमाद्वा तृतीयास्ते च ते कषायाश्च तेषामुदये, प्रत्याख्यानं—सर्वविरतिलक्षणं तस्यावरणाः प्रत्याख्यानावरणाः, त एव नामधेयं येषां ते तथा, तेषां, नन्वप्रत्याख्याननामधेयानामुदये न प्रत्याख्यान-

मस्तीत्युक्तं, नञा प्रतिषिद्धत्वात्, इहापि चावरणशब्देन प्रत्याख्याननिषेधात् क एषां प्रतिविशेषः?, उच्यते, तत्र नञ् सर्वनिषेधे इह त्वाङो मर्यादेषदर्थवचनत्वात्, [ईषद्] मर्यादया [वा] वृण्वन्तीत्यावरणाः, ततश्च सर्वविरतिनिषेधार्थ एवावरणशब्दो न देशविरतिनिषेधे, तथा चाह–देशश्च एकदेशश्च देशैकदेशौ तत्र देशः–स्थूरप्राणातिपातादिः, एकदेशस्तु–तस्यैव द्वयवनस्पतिकायाद्यतिपातः, तयोर्विरतिः–निवृत्तिस्तां, लभन्त इति वाक्यशेषः, अत्रापि वाक्यशेषः तुशब्दात् क्षिप्त एव द्रष्टव्यः, अन्यजन्मोपात्ताष्टविधकर्मसञ्चयापचयाय चरणं–सर्वसावद्ययोगनिवृत्तिरूपं चारित्रं तस्य लाभं न लभन्ते, तुशब्दाद्देशैकदेशविरतिं लभन्त एव ॥११०॥ अथामुमेवार्थं सङ्गृह्य बिभणिषुश्चतुर्थकषायानाह (षुस्तथा चतुर्थकषाणां यथाख्यातचारित्रादिविघातित्वं चाह)—

मूलगुणाणं लंभं न लहइ, मूलगुणघाइणं उदए। उदए संजलणाणं, न लहइ चरणं अहक्खायं ॥ १११ ॥

सम्यक्त्वं महाव्रतान्यणुव्रतानि च मूलभूता गुणा मूलगुणा उत्तरगुणाधारा इत्यर्थः, तेषां लाभं न लभते, कदा?, मूलगुणान् घातयितुं शीलं येषां ते मूल[गुण]घातिनः अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणा द्वादशकषाया इत्यर्थस्तेषामुदये, तथा सम्–ईषत् परीषहादिसम्पाते चारित्रिणमपि ज्वलयन्तीति सञ्ज्वलनास्तेषामुदये न लभते चरणं–चारित्रं, यथैव तीर्थकरगणधरैराख्यातं यथाख्यातमकषायमित्यर्थः, सकषायं तु लभते ॥ १११ ॥ न च यथाख्यातचारित्रमात्रोपघातिन एव सञ्ज्वलनाः किन्तु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रस्यापि देशतोऽतिचारसम्भवात्तथा चाह—

सव्वेऽविअ अइयारा, संजलणाणं तु उदयओ हुंति। मूलच्छिज्जं पुण होइ, बारसण्हं कसायाणं ॥ ११२ ॥

सर्वे आलोचनादिच्छेदपर्यन्तसप्तविधप्रायश्चित्तशोध्याः, अपेः कियन्तोऽपि चातिचाराः–चारित्रस्खलनाविशेषाः सञ्ज्वल-

नानामेवोदयतो भवन्ति, तुरेवार्थः, द्वादशानां पुनः कषायाणामुदयतः मूलच्छेद्यं भवति, मूलेन—अष्टमस्थानवर्त्तिना प्रायश्चित्तेन छिद्यते—अपनीयते यद्दोषजातं तन्मूलच्छेद्यम्, अशेषचारित्रोच्छेदकारीति भावः ॥ ११२ ॥ यतश्चैवमत आह—

बारसविहे कसाए, खइए उवसामिए व जोगेहिं । लब्भइ चरित्तलंभो, तस्स विसेसा इमे पंच ॥ ११३ ॥

द्वादशविधे—अनन्तानुबन्ध्यादिभेदभिन्ने कषाये—क्रोधादिरूपे क्षपिते—विध्याताग्नितुल्यतां नीते, उपशमिते—भस्मच्छन्नाग्निकल्पतां प्रापिते, वाशब्दात् क्षयोपशमे(मिते) च—अर्द्धविध्यातज्वलनसमतामुपनीते, योगैः—मनोवाक्कायलक्षणैः प्रशस्तैर्हेतुभूतैः, किं ?, लभ्यते चारित्रलाभः, 'तस्य' चारित्रस्य विशेषाः—भेदा इमे—वक्ष्यमाणाः पञ्च ॥ ११३ ॥ तानेवाह गाथाद्वयेन—

सामाइयं च पढमं, छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥ ११४ ॥

तत्तो य अहक्खायं, खायं सव्वंमि जीवलोगंमि । जं चरिऊण सुविहिआ, वचंतयरामणं ठाणं ॥ ११५ ॥

समानां—ज्ञानदर्शनचरित्राणामायः समायस्तेन निर्वृत्तं तत्र भवं वा सामायिकं—सर्वसावद्ययोगविरतिरूपं, ततश्च सर्वमप्येतच्चारित्रमविशेषतः सामायिकं, छेदादिविशेषैस्तु विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, तत्र प्रथमं विशेषणाभावात्सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्र स्वल्पकालमित्वरं, तच्च [ भरतैरावतेषु प्रथमपश्चिमतीर्थकरतीर्थेषु अनारोपितव्रतस्य शैक्षकस्य विज्ञेयं, यावत्कथिकं प्रव्रज्याप्रतिपत्तिकालादारभ्याप्राणोपरमात्, तच्च महाविदेहतीर्थकरतीर्थेषु ] भरतैरावतभाविमध्यमद्वाविंशतितीर्थेषु च साधूनामवसेयं, तेषामुपस्थापनाया अभावात्, अत्र च प्रसङ्गतो मध्यमवैदेहपुरिमपश्चिमतीर्थकरतीर्थवर्त्तिसाधुस्थितास्थितकल्पः प्रदर्श्यते—तत्र ग्रन्थान्तरे विवक्षितार्थप्रतिपादिकेयं

कषायोपशमक्षयक्षयोपशमे चारित्रलाभः चारित्रभेदाश्च गा. ११३-११५

गाथा—"आचेलक्कु १ देसिअ २ सेज्जायर ३ रायपिंड ४ किइकम्मे ५। वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पजोसणकप्पो १० ॥ १ ॥" अस्या अर्थः—एतेषु चतुर्पु कल्पेषु स्थिताः, ते चामी—"सिज्जायरपिंडे या चाउज्जामे अ २ पुरिसजिट्ठे अ ३। किइकम्मस्स य करणे ४ चत्तारि अवट्ठिआ कप्पा ॥ २ ॥ शेषेषु षट्सु अस्थिताः, तत्र न विद्यते चेलमस्यासावचेलकः, तद्भावोऽचेलकत्वं, तत्राऽस्थिताः, एतदुक्तं भवति—न वैदेहमध्यमतीर्थकरतीर्थसाधवः पुरिमपश्चिमजिनतीर्थसाधुवत् अचेलत्वे स्थिताः, कुतः ?, तेषामृजुप्रज्ञत्वान्महाधनमूल्यविचित्रादिवस्त्राणामपि परिभोगात्, आद्यान्त्यजिनतीर्थवर्त्तिसाधूनां तु ऋजुवक्रजडत्वान्महाधनमूल्यादिवस्त्रापरिभोगात् जीर्णादिपरिभोगाच्चाचेलकत्वं, ननु जीर्णादिवस्त्रादि(स्त्र)सद्भावे कथमचेलत्वं ?, उच्यते, तेषां जीर्णत्वादसारत्वादल्पत्वाद्विशिष्टार्थक्रियाऽप्रसाधकत्वात्, तथेत्थम्भूतवस्त्रसद्भावेऽपि लोकेऽप्यचेलकत्वव्यपदेशो दृश्यत एव १। तथा औद्देशिकेऽप्यस्थिता एव, कथं ?, आद्यान्त्यजिनसाधुमुद्दिश्य कृतमशनादि सर्वेषामकल्पनीयं, मध्यमानां तु यमुद्दिश्य कृतं तस्यैवाकल्पनीयं न शेषाणां २। पिण्ड[ग्रहणं] उभयत्र सम्बध्यते, तत्र शय्यातरपिण्डे स्थिता एव, स हि यथाऽऽद्यान्त्यजिनसाधूनामकल्प्यः, एवं मध्यमजिनसाधूनामपि ३। राजपिण्डे चास्थिताः, कथं ?, आद्यान्त्यजिनसाधूनामग्राह्य एव, मध्यमानां तु दोषाभावे गृह्यते ४। तथा कृतिकर्म्म वन्दनमाख्यायते, तत्रापि स्थिताः, कथं ?, यथाऽऽद्यन्त्यजिनसाधूनां प्रभूतकालप्रव्रजिता अपि संयत्यः पूर्वं वन्दनं कुर्वन्ति एवं मध्यमानामपि, यथा वा क्षुल्लका ज्येष्ठार्याणामेवं तेषामपि ५। व्रतानि प्राणातिपातादिनिवृत्तिलक्षणानि, तेष्वपि स्थिताः, यथाद्यन्त्यजिनसाधवो व्रतानुपालनं कुर्वन्ति, एवं तेऽपि, ननु तेषां मैथुनविरतिवर्जानि चत्वारि व्रतानि तत्कथं स्थिताः ?, उच्यते, तस्य परिग्रहेऽन्तर्भावात्स्थिता एव, तथा च नापरिगृहीता योषिदुपभोक्तुं पार्यते ६।

तथा 'जिट्ठ'त्ति ज्येष्ठपदे स्थिता एव, किन्त्वाद्यान्त्यजिनसाधूनामुपस्थापनया ज्येष्ठः, तेषां सामायिकारोपणेन ७। प्रतिक्रमणेऽस्थिताः आद्यान्त्यजिनसाधूनां नियमेनोभयकालं प्रतिक्रमणं, तेषां त्वनियमः, दोषाभावे सर्वकालमप्यप्रतिक्रमणं ८। कल्पशब्द उभयत्र योज्यते, मासकल्पेऽप्यस्थिताः कथं?, आद्यान्त्यजिनसाधूनां नियमेन मासकल्पव्यवहारः, मध्यमजिनसाधूनां तु दोषाभावे न विद्यते ९। एवं पर्युषणाकल्पोऽपि वक्तव्यः तस्मिनप्यस्थिता एवेत्यर्थः १०। विस्तरार्थस्तु कल्पादवगन्तव्यः। अथ प्रकृतमुच्यते—ननु आद्यान्त्यजिनसाधूनामपि यदित्वरं सामायिकं, तत्रापि 'करोमि भदन्त! सामायिकं यावज्जीव'मिति इत्वरस्याप्याभवग्रहणात्तस्य चोपस्थापनायां परित्यागात्कथं न प्रतिज्ञालोपः?, उच्यते—अतिचाराभावात्तस्यैव सामान्यतः सावद्ययोगविनिवृत्तिरूपेणावस्थितस्य शुद्ध्यन्तरापादनेन संज्ञामात्रविशेषात्। चशब्दो वाक्यालङ्कारे, तथा 'छेदोपस्थापनं भवेत् द्वितीयं,' तत्र छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिंश्चारित्रे तच्छेदोपस्थापनं, तच्च द्विधा—सातिचारं निरतिचारं च, तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षकस्यारोप्यते, तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्द्धमानतीर्थं सङ्क्रामतः पञ्चयामधर्मप्रतिपत्तौ, सातिचारं तु यन्मूलगुणघातिनः पुनर्व्रतोच्चारणं, उभयमपि चाद्यान्त्यजिनतीर्थे, तथा परिहरणं परिहारस्तपोविशेषस्तेन विशुद्धिर्यस्मिंश्चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानकाः—विवक्षितचारित्रसेवकास्तदव्यतिरेकाच्चारित्रमपि निर्विशमानकं, एवमग्रेऽपि, आसेवितविवक्षितचारित्रकायास्तु निर्विष्टकायाः, त एव स्वार्थिककप्रत्यये निर्विष्टकायिकाः। इह नवको गणः, चत्वारः परिहारिकाः, चत्वारस्तद्वैयावृत्त्यकरा अनुपरिहारिकः, एको गुरुभूतो वाचनाचार्यः, तपश्च परिहारकाणां ग्रीष्मे जघन्यं चतुर्थं मध्यमं षष्ठं उत्कृष्टमष्टमं, शिशिरे जघन्यादिभेदानु-

क्रमेण षष्ठमष्टमं दशमं च, वर्षासु चाष्टमं दशमं द्वादशमं च, पारणके आचाम्लं भिक्षे चाद्ये द्वे न ग्राह्ये पञ्च ग्राह्याः, वाचनाचार्यानुपरिहारिकाः प्रतिदिनमाचाम्लं कुर्वन्ति, एवं षण्मासान् यावत्, ततो वैपरीत्येन षण्मासान् यावत् अनुपरिहारिकाः परिहारितां प्रतिपद्यन्ते इतरे चानुपरिहारिकतां, ततोऽपि षण्मासीं यावद्वाचनाचार्यः परिहारिकः एको वाचकः सप्तानुपरिहारिकाः, एवमष्टादशमासाः, ततो जिनकल्पं गच्छं वा प्रतिपद्यन्ते, एतेषां यच्चरणं तत्परिहारविशुद्धिकं, एते च परिहारविशुद्धिका द्विधा—इत्वरा यावत्कथिकाश्च, ये कल्पसमाप्त्यनन्तरमेव स्थविरकल्पं गच्छं वा समुपयास्यन्ति ते इत्वराः, ये तु कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपत्स्यन्ति ते यावत्कथिकाः। अत्र स्थविरकल्पग्रहणमुपलक्षणं स्वकल्पे चेति द्रष्टव्यं, तत्रेत्वराणां कल्पप्रभावादेव देवमनुष्यतिर्यग्योनिककृता उपसर्गाः सद्योघातिन आतङ्का अतीवाविषह्याश्चातीववेदना न प्रादुःषन्ति, यावत्कथिकानां पुनः सम्भवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः सम्भवन्ति। 'तथे'त्यानन्तर्ये गाथाभङ्गभयाद्व्यवहितोपन्यासः, सूक्ष्ममित्यनुस्वारोऽप्यलाक्षणिकः, सूक्ष्मसम्परायं चतुर्थं चारित्रं, सम्पर्येति संसारमनेनेति सम्परायः—कषायोदयः सूक्ष्मो लोभांशावशेषत्वात्सम्परायो यत्र तत्सूक्ष्मसम्परायं, तच्च द्विधा—विशुद्ध्यमानकं संक्लिश्यमानकं च, तत्राद्यं क्षपकश्रेणिमुपशमश्रेणिं वारोहतः, इतरत्तु उपशमश्रेणितः प्रच्यवमानस्य, चः समुच्चये ॥११४॥ 'ततश्च' सूक्ष्मसम्परायानन्तरं 'अथाख्यातं' अथशब्दो यथार्थे, आङ् अभिविधौ याथातथ्येनाभिविधिना च यदाख्यातं—कथितमकषायं चारित्रमिति तदथाख्यातं, यथाख्यातं चास्य द्वितीयं नाम, तस्यायमन्वर्थः—यथा सर्वस्मिन् जीवलोके ख्यातं—प्रसिद्धमकषायं भवति चारित्रमिति तथैव यत्, तथा यत् चारित्रं चरित्वा—आसेव्य शोभनं विहितमनुष्ठानं येषां ते सुविहिताः—

सुसाधवः व्रजन्त्यजरामरं—न विद्यते जरा यत्र तदजरं, तथा न म्रियते प्राणी यत्र तदमरं, अजरं च तदमरं चाजरामरं—मोक्षलक्षणं स्थानं, इदं च चारित्रं द्विधा—छाद्मस्थिकं कैवलिकं च; आद्यमुपशान्तमोहगुणस्थाने क्षीणमोहगुणस्थाने च, कैवलिकं तु सयोगिकेवलिभवमयोगिकेवलिभवं च ॥ ११५ ॥ तत्र पञ्चानामाद्यं चारित्रत्रयं क्षयोपशमलभ्यं, अन्त्यचारित्रद्वयं तूपशमक्षयलभ्यमेव, अतः कर्मोपशमक्रमप्रदर्शनार्थमाह—

अणदंसनपुंसित्थी, वेयछक्कं च पुरिसवेयं च । दो दो एगन्तरिए, सरिसे सरिसं उवसमेइ ॥ ११६ ॥

इहोपशमश्रेणिप्रारम्भकोऽप्रमत्त संयत एव भवति, अन्ये तु अविरत[देशविरत]प्रमत्तसंय[ताप्रमत्तसंय]तानामन्यतम इति वदन्ति, श्रेणिपरिसमाप्तौ चाप्रमत्तः प्रमत्तो वा स्यात् । स चैवमारभते—तत्राणन्ति शब्दयन्त्यविकलहेतुत्वेनासातवेद्यं नारकाद्यायुष्कमित्यणाः—आद्याः क्रोधादयः, अथवानन्तानुबन्धिन एवानाः, समुदायशब्दानामवयवे वृत्तिदर्शनात्, तत्रासौ प्रतिपत्ता प्रशस्तेष्वध्यवसायेषु वर्त्तमानः प्रथमं युगपदन्तर्मुहूर्त्तमात्रेण कालेनानन्तानुबन्धिनः क्रोधादीनुपशमयति, एवं सर्वत्र युगपदुशामककालोऽन्तर्मुहूर्त्त प्रमाण एव ज्ञेयः, ततो दर्शनं मिथ्यात्वमिश्रसम्यक्त्वरूपं त्रिविधं युगपदेव, यदि पुरुषः प्रारम्भकस्ततो नपुंसकवेदमनुदीर्णमपि, ततोऽनुक्रमेण स्त्रीवेदं, 'षट्क'मिति हास्यरत्यरतिशोकभयजुगुप्सारूपं, पुरुषवेदं, अथ स्त्री प्रारम्भिका तत आदौ नपुंसकवेदं पुरुषवेदं हास्यषट्कं स्त्रीवेदं, अथ नपुंसकः प्रारम्भकस्ततोऽसावनुदीर्णमपि आदौ स्त्रीवेदं पुरुषवेदं हास्यषट्कं नपुंसकवेदमिति, ततो द्वौ द्वौ क्रोधाद्यौ 'एकान्तरितौ' सञ्ज्वलनविशेषक्रोधाद्यन्तरितौ, 'सदृशौ' क्रोधादितया परस्परं तुल्यौ, सदृशं युगपदेव प्रत्येकमन्तर्मुहूर्त्तेन, तथाहि—अप्रत्याख्यानप्रत्याख्यानावरणौ क्रोधौ क्रोधत्वेन सदृशौ, युगपदन्तर्मुहूर्त्तमात्रेणोपशमयति, ततः

सञ्ज्वलनक्रोधमेकाकिनमेव, तत एवमेवाऽप्रत्याख्या[नप्रत्याख्या]नौ मानौ सञ्ज्वलनमानं, अप्रत्याख्यानप्रत्याख्यानमाये सञ्ज्व-
लनमायां, अप्रत्याख्यानप्रत्याख्यानलोभौ सञ्ज्वलनलोभं, तं चोपशमयंस्त्रिधा करोति, तत्र द्वौ भागौ युगपदुपशमयति, तृतीय-
भागं तु सङ्ख्येयानि खण्डानि करोति, तान्यपि पृथक् पृथक् कालभेदेनोपशमयति, पुनः सङ्ख्येयखण्डानां चरमखण्डमसङ्ख्येयानि
खण्डानि करोति, सूक्ष्मसम्परायः ततः समये समये एकैकखण्डमुपशमयति, इह दर्शनसप्तके उपशान्तेऽपूर्वकरणो निवृत्तिवादरो
वाऽभिधीयते । तत ऊर्द्ध्वमनिवृत्तिवादरो यावत्सङ्ख्येयान्तिमद्विचरमखण्डं । ननु सञ्ज्वलनादीनां युक्त इत्थमुपशमः, अनन्तानु-
बन्धिनां तु दर्शनप्रतिपत्तावेवोपशमितत्वात् न युज्यते, उच्यते, दर्शनप्रतिपत्तौ तेषां क्षयोपशमादिह चोपशमादविरोधः, ननु
क्षयोपशमोपशमयोरेव कः प्रतिविशेषः ?, उच्यते, क्षयोपशमो ह्युदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकानुभवापेक्षयोपशमः, प्रदेशा-
नुभवतस्तूदयोऽस्त्येव, उपशमे तु प्रदेशानुभवोऽपि नास्ति, उक्तं च भाष्यकारेण 'वेएइ संतकम्मं खओवसमिएसु नाणुभावं सो ।
उवसंतकसाओ पुण वेएइ न संतकम्मंपि ॥ १ ॥' (वि. १२९३) ननु संयतस्यानन्तानुबन्धिनामुदयो निषिद्ध एव तत्कथमुपशमः ?,
उच्यते, स ह्यनुभावकर्माङ्गीकृत्य न तु प्रदेशकर्म्म, तथा चोक्तमार्षे—'जीवे णं भंते ! सयं कडं कम्मं वेएइ ?, गोअमा ! अत्थे-
गइअं वेएइ अत्थेगइअं नो वेएइ, से कणट्ठेणं ? भंते ! पुच्छा, गोअमा ! दुविहे कम्मे पन्नते, तंजहा—पएसकम्मे अ अणुभावकम्मे
अ, तत्थ णं जं तं पएसकम्मं तं निअमा वेएइ, तत्थ णं जं तं अणुभावकम्मं तं अत्थेगइअं वेएइ अत्थेगइयं नो वेएइ, इत्यादि,
ततश्च प्रदेशकर्मानुभवोदयस्येहोपशमो द्रष्टव्यः । आह—यद्येवं तर्हि संयतस्यानन्तानुबन्ध्युदयतः कथं दर्शनविघातो न भवति ?,
उच्यते, प्रदेशकर्म्मणो मन्दानुभावत्वात्, तथा कस्यचिदनुभावकर्मानुभवोऽपि नात्यन्तमपकाराय भवन्नुपलभ्यते, यथा सम्पूर्ण-

मत्यादिचतुर्ज्ञानिनस्तदावरणोदये इति ॥ ११६ ॥ स्थापना ॥ इह च सङ्ख्येयानि लोभखण्डानि उपशमयन् बादरसम्पराय उच्यते, चरमस्य तु सङ्ख्येयखण्डस्यासङ्ख्येयानि खण्डानि प्रतिसमयमेकैकखण्डमुपशमयन् सूक्ष्मसम्परायः, तथा चाह—

**लोभाणुं वेअंतो, जो खलु उवसामओ व खवगो वा। सो सुहुमसंपराओ, अहक्खाया ऊणओ किंची ॥ ११७ ॥**

सञ्ज्वलनलोभस्याणून्—सङ्ख्येयतमस्य खण्डस्यासङ्ख्येयानि खण्डानि वेदयमानोऽनुभवन् य उपशमकः क्षपको वा भवति सोऽन्तर्मुहूर्त्तकालं यावत्सूक्ष्मसम्परायो भवति, अयं च यथाख्यातात् किञ्चिदूनः, किमुक्तं भवति ?, सूक्ष्मसम्परायावस्थामन्तर्मुहूर्त्तकालमानामनुभूय उपशमनिर्ग्रन्थो यथाख्यातचारित्री भवति, इह यदि बद्धायुरुपशमश्रेणिमध्यगतगुणस्थानवर्त्ती उपशान्तमोहो वा भूत्वा कालं करोति तदा नियमेनानुत्तरसूरेषूत्पद्यते, श्रेणिप्रतिपतितस्य कालकरणेऽनियमः, नानामतित्वेन नानास्थानगमनात्, अथाबद्धायुस्तां प्रतिपन्नस्तर्हि अन्तर्मुहूर्त्तमुपशान्तमोहो भूत्वा नियमतः पुनरप्युदितकषायः कात्स्न्येन श्रेणिप्रतिलोममावर्त्तते ॥ ११७ ॥ तथा चैतदेव दूरन्तं कषायसामर्थ्यमुत्कीर्त्तयन्नाह—

**उवसामं उवणीआ, गुणमहया जिणचरित्तसरिसं पि। पडिवायंति कसाया, किं पुण सेसे सरागत्थे ? ॥ ११८ ॥**

उपशमनमुपशमस्तं, अपेः क्षयोपशममपि, उपनीताः, केन ?, गुणैर्महान् गुणमहान् तेन गुणमहता उपशमकेन, प्रतिपातयन्ति कषायाः संयमात्संसारे वा, कम् ?, तमेवोपशमकं, किंविधं ? जिनस्य केवलिनश्चारित्रेण कृत्वा सदृशस्तुल्यो जिनचारित्रसदृशस्तमपि, द्वयोरपि कषायोदयरहितचारित्रयुक्तत्वात्, एवम्भूतमपि प्रतिपातयन्ति अन्तर्मुहूर्त्तान्नियमेन, प्रतिपतितश्च संसारं पर्यटति, स तावत्तद्भव एव निर्वाणं न लभते, उत्कृष्टतस्तु देशोनमर्द्धपुद्गलपरावर्त्तमपि संसारमनुबध्नाति ॥ ११८ ॥

यत एवं तीर्थकरोपदेश अत औपदेशिक गाथाद्वयमाह—

जइ उवसंतकसाओ, लहइ अणंतं पुणोऽवि पडिवायं। णहु भे वीससियव्वं, थेवे य कसायसेसंमि ॥ ११९ ॥
अणथोवं वणथोवं, अग्गीथोवं कसायथोवं च। णहु भे वीससियव्वं, थेवंपि हु तं वहुं होइ ॥ १२० ॥

यद्युपशान्तकपायोऽप्यनन्तं भूयोऽपि प्रतिपातं लभते, ततः स्तोकेऽपि कपायशेपे 'नहु' नैव'भे' भवद्भिर्विश्वसितव्यं ॥ ११९ ॥ अमुमेवार्थं सदृष्टान्तं भावयति—ऋणस्य स्तोकं ऋणस्तोकं, एवं व्रणस्तोकं अग्निस्तोकं कपायस्तोकं च दृष्ट्वा 'नहु' नैव'भे' भवद्भिर्विश्वसितव्यं यतः स्तोकमपि ऋणादि वहु भवति, उक्तं च भाष्यकारेण "दासत्तं देइ अणं अचिरा मरणं वणो विसप्पंतो। सव्वस्स दाहमग्गी दिंति कसाया भवमणंतं ॥ १ ॥" (वि. १३११) ॥ १२० ॥ उक्तमौपशमिकं चारित्रं, अथ क्षायिकमाह, अथवा सूक्ष्मसम्परायथाख्यातचारित्रद्वयमुपशमश्रेण्यङ्गीकरणेनोक्तं, इदानीं क्षपकश्रेण्यङ्गीकरणतः प्रतिपादयन्नाह—

अण मिच्छ मीस सम्मं, अट्ठ नपुंसित्थीवेय छक्कं च। पुंवेयं च खवेइ, कोहाइए य संजलणे ॥ १२१ ॥

इह क्षपकश्रेणिप्रतिपत्ता असंयतादीनामन्यतमोऽत्यन्तविशुद्धपरिणामो भवति, स चोत्तमसंहननः, तत्र पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते, अपरे तु धर्म्मध्यानोपगता एव, क्रमश्चायं—प्रथममनन्तानुवन्धिनश्चतुरोऽपि क्रोधादीनन्तर्मुहूर्त्तेन युगपत् क्षपयति, तदनन्तभागं तु मिथ्यात्वे प्रक्षिप्य ततो मिथ्यात्वं सहैव तदंशेन युगपत् क्षपयति, यथाह्यतिसम्भृतो दवानलः खल्वर्द्धदग्धेन्धन एव इन्धनान्तरमासाद्य उभयमपि दहति, एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वात् सावशेषमन्यत्र प्रक्षिप्य

अल्पार्णादा-
वविश्वासः
गा. ११९-
१२०-
१२१
क्षपकश्रेणिः

क्षपयति, तदनन्तरं तथैव मिश्रं, ततः सम्यक्त्वं, इह यदि बद्धायुः क्षपकश्रेणिमारभते, अनन्तानुबन्धिक्षयानन्तरं च मरणसम्भवतो व्युपरमते, ततः कदाचिन्मिथ्यादर्शनोदयाद्भूयोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्, क्षीणमिथ्यादर्शनस्तु नोपचिनोति, मूलाभावात्, तदवस्थश्च मृतोऽवश्यमेव त्रिदशेषूत्पद्यते, क्षीणसप्तकोऽप्यप्रतिपतितपरिणामस्त्रिदशेष्वेव, प्रतिपतितपरिणामस्तु नानामतिसम्भवाद्यथापरिणामं सर्वगतिभाग् भवति, बद्धायुष्कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे नियमादवतिष्ठते, न चारित्रमोहक्षपणाय यत्नमादधाति। ननु यदि दर्शनत्रिकमपि क्षयमुपनीतं ततः किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः?, [उच्यते, सम्यग्दृष्टिः,] सम्यग्दर्शनाभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत्, तदसत्, अभिप्रायापरिज्ञानात्, इह निर्मदनीकृतमदनकोद्रवकल्पा अपगतमिथ्यात्वपुद्गला एव यत्सम्यग्दर्शनं तदेव क्षीणं, यत्पुनरात्मपरिणामस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि च तदतीवश्लक्ष्णशुद्धाभ्रपटलविगमेन मनुष्यदृष्टिरिव शुद्धजलानुगतं शुद्धवस्त्रमिव वा जलक्षये विशुद्धतरस्वरूपं भवति, यदि पुनरबद्धायुः क्षपकश्रेणिमारभते, ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहक्षपणाय यत्नमारभते, तत्क्षपणक्रमश्चायं—सम्यक्त्वस्य क्षपितशेषेऽवतिष्ठमान एवाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं समकमेव क्षपयितुमारभते, एतेषु चार्द्धक्षपितेष्वन्याः षोडश प्रकृतीः क्षपयति, तत्प्रतिपादकमिदं गाथाद्वयं—

गइआणुपुव्वी, दो दो जाइनामं च जाव चउरिंदी। आयावं उज्जोयं, थावरनामं च सुहुमं च ॥ १२२ ॥

साहारणमपज्जत्तं, निद्दानिद्दं च पयलपयलं च। थीणं खवेइ ताहे, अवसेसं जं च अट्ठण्हं ॥ १२३ ॥

गतिश्चानुपूर्वी च गत्यानुपूर्व्यौ द्वे द्वे, नरकगति १ नरकानुपूर्वी २ तिर्यग्गति ३ तिर्यगानुपूर्वी ४, यथा वृषभो नासिकान्य-

स्तरज्वा योग्यं स्थानं नीयते तथा जीवोऽपि यया कर्मपुद्गलसंहत्या विशिष्टं स्थानं प्राप्यते, यया वोर्ध्वोत्तमाङ्गाधश्चरणादिरूपो नियमतः शरीरविशेषो भवति साऽऽनुपूर्वी, तथा 'जातिनाम' एकेन्द्रियादियावच्चतुरिन्द्रियाः, चः समुच्चये, आतपनाम यदुदयादातपवान् भवति ९ एवमुद्योतं १० स्थावराः—पृथिव्यादयस्तन्नाम ११ 'सूक्ष्मं' सूक्ष्मनाम १२ चौ पूर्ववत् ॥ १२२ ॥ 'साधारण'मिति साधारणनाम अनन्तवनस्पतिनामेत्यर्थः १३, 'अपर्याप्त'मित्यापर्याप्तकं नाम १४ निद्रानिद्रं च १५ प्रचलाप्रचलां च १६ स्त्याना चैतन्यऋद्धिर्यस्यां सा स्त्यानर्द्धिः पञ्चमी निद्रा तां १७, इह भाष्यकर्मग्रन्थादौ, अत्रान्तरे षोडशैव प्रकृतयः क्षप्यमाणत्वेनाभ्युपगम्यन्ते न सप्तदश, यतस्तन्मतेनापर्याप्तनामकर्म इह निक्षिप्यते (न क्षपयति) किं त्वयोगी द्विरुप(द्वा)सप्ततिकर्मप्रकृतिकदम्बमध्ये तत् क्षपयति, तस्मान्मतान्तरत्वेनेह सप्तदशानामुपन्यासो न विरुद्ध्यते, ततश्चापर्याप्तवर्जषोडशप्रकृतीः क्षपयित्वा तदन्तरं यदष्टानां कषायाणां शेषं तत् क्षपयति, सर्वमिदं अन्तर्मुहूर्त्तेन, ततो नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यषट्कं ततः पुरुषवेदस्य खण्डत्रयं कृत्वा खण्डद्वयं युगपत् क्षपयति, तृतीयखण्डं तु सञ्ज्वलनक्रोधे प्रक्षिपति, पुरुषे प्रतिपत्तर्ययं क्रमः, नपुंसकादौ तु प्रतिपत्तर्युपशमश्रेणिन्यायो वक्तव्यः, ततः क्रोधादींश्चतुरः सञ्ज्वलनान् प्रत्येकमन्तर्मुहूर्त्तमात्रेण क्षपयति, क्षपणं चेषां खण्डत्रयादिकरणक्रमेण पुरुषवेदवद्वाच्यं, तथाहि क्रोधसत्कं तृतीयं खण्डं माने प्रक्षिपति, मानसत्कं मायायां, मायासत्कं लोभे, क्षपणकालश्च प्रत्येकं सर्वत्रान्तर्मुहूर्त्तप्रमाणो मन्तव्यः, श्रेणिरप्यन्तर्मुहूर्त्तमानैव, एकस्मिन्नप्यन्तर्मुहूर्त्ते लघुतराणां अन्तर्मुहूर्त्तानामसङ्ख्येयानां भावात्, लोभस्य तु तृतीयखण्डं सङ्ख्येयानि खण्डानि करोति, तानि च खण्डानि पृथक् पृथक् कालभेदेन क्षपयति, तेषामपि च सङ्ख्याततमं चरमं खण्डमसङ्ख्येयानि खण्डानि करोति, तानि तु समये एकैकशः क्षपयति।

इह च क्षीणदर्शनसप्तको निवृत्तिबादर उच्यते, तत ऊर्द्धमनिवृत्तिबादरो यावत्सङ्ख्याततमं चरमलोभखण्डं, तत ऊर्द्धमसङ्ख्येयानि लोभखण्डानि प्रतिसमयमेकैकं क्षपयन् सूक्ष्मसम्परायो यावच्चरमलोभांशक्षयः, अत ऊर्द्धं यथाख्यातचारित्री भवति, स च महासमुद्रप्रतरणपरिश्रान्तवत् मोहसागरं तीर्त्वा अनाभोगनिवर्त्तितेन करणेन विश्राम्यति, ततश्छद्मस्थवीतरागत्वद्विचरमसमययोः प्रथमे समये निद्राप्रचले क्षपयति, चरमे समये पञ्चविधं ज्ञानावरणं चतुर्विधं दर्शनावरणं पञ्चविधमन्तरायं इति चतुर्दशप्रकृतीर्युगपत् क्षपयित्वानन्तरसमये केवलज्ञानं केवलदर्शनं चोत्पादयति। अन्ये त्वेवमभिदधते–तन्मतेन तिस्रोऽन्यकर्तृक्य इमा गाथाः—

[1]वीसमिऊण नियंठो, दोहि उ समएहि केवले सेसे। पढमे निद्दं पयलं, नामस्स इमाओ पयडीओ ॥ १२४॥

देवगइआणुपुव्वीविउव्विसंघयण पढमवज्जाइ। अन्नयरं संठाणं, तित्थराहारनामं च ॥ १२५ ॥

चरमे नाणावरणं पंचविहं दंसणं चउवियप्पं। पंचविहमंतरायं, खवइत्ता केवली होइ ॥ १२६ ॥

विश्रम्य क्षणं निग्रन्थः द्वाभ्यां समयाभ्यां केवले उत्पत्स्यमाने तयोर्द्वयोः प्रथमे निद्रां प्रचलां नाम्नश्चेमाः प्रकृतीः देवगत्यानुपूर्व्यौ वैक्रियनाम(द्विकं)प्रथमवर्जानि पञ्च संहननानि, यदात्मनोऽस्ति संस्थानं तन्मुक्त्वा पञ्च संस्थानानि, आहारकनाम, तीर्थकरनाम च यद्यतीर्थकरः क्षपकः, चेत्तीर्थकरस्तदाहारकमेव, चरमे समये ज्ञानावरणं पञ्चविधं मतिज्ञानावरणादि, दर्शनं चतुर्विकल्पं चक्षुर्दर्शनादि, पञ्चविधमन्तरायं च दानान्तरायादि क्षपयित्वा केवली भवति, एतच्च मतमसमीचीनं चूर्णिकृतो भाष्यकृतः

१ एतास्तिस्रो गाथा हारिभद्रवृत्तौ निर्युक्तित्वेन लिखिता अत एव अत्रापि तथैव निर्युक्तिगाथात्वेन दर्शिताः, मलयगिरिवृत्तौ तु अन्यकर्तृका दर्शिताः।

सर्वेषां च कर्मग्रन्थकाराणामसम्मतत्वात्, केवलं वृत्तिकृता केनाप्यभिप्रायेण लिखितमिति सूत्रेऽप्येता गाथाः प्रवाहपतिताः, निर्युक्तिकारकृतास्त्वेता न भवन्ति ॥ १२४–१२६ ॥ स्थापना [उपशमक्षपकश्रेण्योः]—

उपशमश्रेणिः

| | | | | | |
|---|---|---|---|---|---|
| सं० लोभः | | | | | |
| अप्र० लोभः | प्र० लोभः | | | | |
| सं० माया | | | | | |
| अप्र० माया | प्र० माया | | | | |
| सं० मान | | | | | |
| अप्र० मान | प्र० मान | | | | |
| सं० क्रोधः | | | | | |
| अप्र० क्रोधः | प्र० क्रोधः | | | | |
| पुंवेद | | | | | |
| हास्य | रति | अरति | भय | शोक | जुगुप्सा |
| स्त्रीवेद | | | | | |
| नपुं० वेद | | | | | |
| मि० मिश्र० सम्य० | | | | | |
| अन० क्रोध | अन० मान | अन० माया | अन० लोभ | | |

क्षपकश्रेणिः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सं० लोभ | | | | | | | |
| सं० माया | | | | | | | |
| सं० मान | | | | | | | |
| सं० क्रोध | | | | | | | |
| पुंवेद | | | | | | | |
| हास्य | रति | अरति | भय | शोक | जुगुप्सा | | |
| स्त्रीवेद | | | | | | | |
| नपुं० वेद | | | | | | | |
| अप्र० क्रोध | प्र० क्रोध | अप्र० मान | प्र० मान | अप्र० माया | प्र० माया | अप्र० लोभ | प्र० लोभ |
| सम्यक्त्व | | | | | | | |
| मिश्र | | | | | | | |
| मिथ्यात्व | | | | | | | |
| अन० क्रोध | अन० मान | अन० माया | अन० लोभ | | | | |

उत्पन्नकेवलज्ञान[केवलदर्शन]श्च भगवान् सर्वं वस्तु जानाति। तथा चाह—

**संभिण्णं पासंतो, लोगमलोगं च सव्वओ सव्वं। तं नत्थि जं न पासइ, भूयं भव्वं भविस्सं च ॥ १२७ ॥**

सम्–एकीभावेन भिन्नं सम्भिन्नं, यथा बहिस्तथा मध्योऽपीत्यर्थः, अथवा द्रव्यक्षेत्रकालभावलक्षणं सर्वमपि ज्ञेयं विषयत्वेन दर्शनीयं, तत्र सम्भिन्नमिति द्रव्यं विशेष्यं सूचितं, कालभावौ तद्विशेषकौ, द्रव्यस्य पर्यायौ, ततस्ताभ्यां समन्ताद्भिन्नं द्रव्यं इति सम्भिन्नग्रहणेन त्रितयमपि सूचितं, तत्पश्यन्–उपलभमानो लोकं–धर्म्माद्याधारक्षेत्रं अलोकं च–तद्विपरीतं क्षेत्रं, अनेन क्षेत्रं प्रतिपादितं, एतावदेव चतुर्विधं ज्ञेयं, किमेकया दिशा पश्यन्नित्याह–सर्वतः–सर्वासु दिक्षु, तास्वपि किं कियदपि द्रव्यादि उत नेत्याह–'सर्वं' निरवशेषं, अमुमेवार्थं स्पष्टयन्नाह–तन्नास्ति किमपि ज्ञेयं भूतम्–अतीतं, भव्यं–वर्त्तमानं, भविष्यच्च–भावि, चः समुच्चये, यन्न पश्यति, केवलीति असौ निदर्शितः, एतस्मात्सामायिकादिश्रुतमाचार्यपारम्पर्येणायातं, एतस्माच्च जिनप्रवचनप्रसूतिरित्यादि, सर्वं प्रासङ्गिकं निर्युक्तिसमुत्थानप्रसङ्गेनोक्तं, इदानीमपि केयं जिनप्रवचनोत्पत्तिः? कियदभिधानं चेदं जिनप्रवचनं? को वाऽस्याभिधानविभागः? इत्येतत्प्रासङ्गिकशेषं शेषद्वारसङ्ग्रहं चाभिधित्सुराह—

**जिणपवयणउप्पत्ती, पवयणएगट्ठिया विभागो य। दारविही य नयविही, वक्खाणविही य अणुओगो ॥ १२८ ॥**

इह 'जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिकानि विभागश्च' एतत्रितयमपि प्रसङ्गशेषं, द्वाराणि–उद्देशनिर्देशादीनि तेषां विधिः–प्ररूपणं द्वारविधिः, अयमुपोद्घातोऽभिधीयते, नयविधिस्तूपक्रमादीनां मूलानुयोगद्वाराणां चतुर्थमनुयोगद्वारं, व्याख्यानस्य विधिर्व्याख्यानविधिः–शिष्याचार्यपरीक्षाभिधानं, अनुयोगः–सूत्रस्पर्शिकनिर्युक्तिः सूत्रानुगमश्चेति समुदायार्थः ॥ १२८ ॥

तत्र जिनप्रवचनोत्पत्तिर्निर्युक्तिसमुत्थानप्रसङ्गतोऽभिहिता, अर्हद्वचनत्वात् प्रवचनस्य, इदानीं प्रवचनैकार्थिकानि तद्विभागं च गाथात्रयेण प्रतिपादयन्नाह—

**एगट्ठियाणि तिण्णि उ, पवयण सुत्तं तहेव अत्थो अ। इक्किक्कस्स य इत्तो, नामा एगट्ठिआ पंच ॥ १२९ ॥**

एकोऽर्थो येषां तान्येकार्थिकानि, त्रीण्येव, कानि ?, प्रवचनं पूर्वव्याख्यातं, सूचनात्सूत्रं, अर्थस्तद्विवरणं, अर्यत इत्यर्थः—अभिधेयं, चः समुच्चये। इह प्रवचनं सामान्यश्रुतज्ञानं, सूत्रार्थौ तु तद्विशेषौ, ननु सूत्रार्थयोः प्रवचनेन सहैकार्थता युक्ता, तद्विशेषत्वात्, सूत्रार्थयोस्तु परस्परविभिन्नत्वान्न युज्यते, यतः सूत्रं व्याख्येयमर्थस्तु तद्व्याख्यानमिति, अथवा त्रयाणामप्येषां भिन्नार्थतैव युज्यते प्रत्येकमेकार्थिकविभागसद्भावात्, अन्यथैकार्थिकत्वे सति भेदेनैकार्थिकाभिधानमयुक्तं, उच्यते, यथाहि मुकुलविकसितयोः पद्मविशेषयोः सङ्कोचविकाशपर्यायभेदेऽपि कमलसामान्यतयाभेदः, एवं सूत्रार्थयोरपि प्रवचनापेक्षया परस्परतश्चेति, तथाहि—अविवृतं मुकुलतुल्यं सूत्रं, तदेव विवृतं विकचकल्पमर्थः, प्रवचनं चोभयमपि, यथा चैषामेकार्थिकविभाग उपलभ्यते—कमलमरविन्दं पङ्कजमित्यादि पद्मैकार्थिकानि, तथा कुड्मलं[वृन्तं] सङ्कुचितमित्यादि मुकुलैकार्थिकानि, तथा विकचं फुल्लं विबुद्धमित्यादि विकसितैकार्थिकानि, तथा प्रवचनसूत्रार्थानामपि पद्मकुड्मलविकसितकल्पानामेकार्थिकविभागोऽविरुद्धः। अथवा अन्यथा व्याख्यायते—एकार्थिकानि त्रीण्येवाश्रित्य वक्तव्यानि, प्रवचनमेकार्थिकगोचरस्तथा सूत्रमर्थश्चेति, शेषं पूर्ववत्। अत ऊर्ध्वमेकैकस्य प्रवचनस्य सूत्रस्यार्थस्य च नामान्येकार्थिकानि पञ्च ॥ १२९ ॥ अथ प्रवचनसूत्रयोः पञ्च पञ्चैकार्थिकान्याह—

**सुयधम्म तित्थ मग्गो, पावयणं पवयणं च एगट्ठा। सुत्तं तंतं गंथो, पाढो सत्थं च एगट्ठा ॥ १३० ॥**

श्रुतस्य धर्म्मः—स्वभावः श्रुतधर्म्मः, श्रुतस्य बोधस्वभावत्वात्, श्रुतस्य धर्म्मो बोधोऽभिधीयते, अथवा [श्रुतस्य] जीवपर्यायत्वात् श्रुतं च तद्धर्म्मश्च श्रुतधर्मः, सुगतिधारणात् श्रुतं धर्म्मोऽभिधीयते १, तीर्यते संसारसमुद्रोऽनेनेति तीर्थं—सङ्घः, तदुपयोगानन्यत्वादिह प्रवचनं तीर्थमुच्यते २, मृज्यते—शोध्यतेऽनेनात्मेति मार्गः, मार्गणं वा मार्गः, शिवस्यान्वेषणमित्यर्थः ३, प्रगतमभिविधिना जीवादिषु पदार्थेषु वचनं प्रावचनं ४, जीवादितत्त्वानि प्रवक्तीति प्रवचनं ५, उक्तानि पञ्च प्रवचनैकार्थिकानि, अथ सूत्रैकार्थिकान्याह—सूचनात्सूत्रं १, तन्यतेऽनेनास्मादस्मिन्वा अर्थ इति तन्त्रं २, ग्रथ्यतेऽनेनास्मादस्मिन्नित्याद्यर्थः ग्रन्थः, ग्रथ्यते वा ग्रन्थः ३, पठनं पाठः पठ्यते वा तदिति पाठः, पठ्यतेऽनेनेत्यादि वाऽभिधेयं पाठः, व्यक्तीक्रियत इत्यर्थः ४, शास्यतेऽनेनेत्यादि ज्ञेयमात्मा वा शास्त्रं ५, एकार्थिकानीति पुनरभिधानं सामान्यविशेषयोः कथञ्चिद्भेदख्यापनार्थं ॥ १३० ॥

अथानुयोगैकार्थिकानि विभणिषुराह—

अणुओगो य नियोगो, भास विभासा य वत्तियं चेव । अणुओगस्स उ एए, नामा एगट्ठिआ पंच ॥ १३१ ॥

सूत्रस्यार्थेन सहानुकूलं योजनमनुयोगः, यथा घटशब्देन घटोऽभिधीयते १, नियतो निश्चितो वा योगः—सम्बन्धो नियोगः, यथा घटशब्देन घट एवोच्यते न पटादिः २, भाषणं भाषा व्यक्तीकरणमित्यर्थः, यथा घटनाद् घटः ३, विविधा भाषा विभाषा—पर्यायशब्दैः स्वरूपकथनं यथा घटः कुटः कुम्भ इति ४, वार्त्तिकं त्वशेषपर्यायकथनं ५, एतान्यनुयोगस्य नामान्येकार्थिकानि पञ्च, एष गाथासमुदायार्थः, अवयवार्थं तु प्रतिद्वारं वक्ष्यति, तत्र प्रवचनादीनामविशेपेणैकार्थिकाभिधानप्रक्रमे सति एकार्थिकानुयोगादेर्भेदेनान्वाख्यानमर्थगरीयस्त्वख्यापनार्थं ॥ १३१ ॥ तत्रानुयोगाख्यप्रथमद्वारस्वरूपव्याचिख्यासयाह—

नामं ठवणा दविए, खित्ते काले य वयण भावे य। एसो अणुओगस्स उ णिक्खेवो होइ सत्तविहो ॥ १३२ ॥

नामानुयोगो यस्य जीवादेरनुयोग इति नाम क्रियते, नाम्नो वानुयोगो नामानुयोगो—नामव्याख्येत्यर्थः, यदिवा नाम्नाऽनुरूपो योगो नामानुयोगः १, स्थापना—अक्षनिक्षेपादिरूपा, तत्र योऽनुयोगं कुर्वन् स्थाप्यते सोऽनुयोगानुयोगवतोरभेदोपचारात् स्थापनानुयोगः २, द्रव्यानुयोगो द्विधा—आगमतो नोआगमतश्च, आगमतोऽनुयोगपदार्थज्ञाता तत्र चानुपयुक्तः, नोआगमतस्त्रिधा, ज्ञशरीरभव्यशरीरे प्राग्वत्, तद्व्यतिरिक्तस्त्वनेकधा—द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्द्रव्ये द्रव्येषु वाऽनुयोगो द्रव्यानुयोगः, एवं क्षेत्रादिष्वपि षड्भेदयोजना कार्या, तत्र द्रव्यास्यानुयोगो द्विधा—जीवस्याजीवस्य च, एकैकोपि चतुर्द्धा, द्रव्यादिभेदात्, तत्र द्रव्यतो जीव एकं द्रव्यं, क्षेत्रतोऽसङ्ख्येयप्रदेशावगाढः, कालतोऽनाद्यपर्यवसितः, भावतोऽनन्तज्ञानानन्तदर्शनचारित्राचारित्रदेशचारित्रागुरुलघुपर्यायवानिति, एष जीवद्रव्यस्य द्रव्यादिभेदाच्चतुर्द्धाऽनुयोगः, अजीवद्रव्याणि परमाण्वादीनि, तत्र परमाणुर्द्रव्यत एकं द्रव्यं क्षेत्रत एक प्रदेशावगाढः कालतो जघन्येन समयमेकं द्वौ वा उत्कृष्टतस्त्वसङ्ख्येया उत्सर्प्पिण्यवसर्पिण्यः भावतः एकरस एकवर्णो द्विस्पर्श एकगन्धश्च, एतेषां च स्वस्थानेऽनन्ता रसादिपर्याया एकगुणतिक्तादिभेदेन द्रष्टव्याः, एवं द्व्यणुकादीनामप्यनन्ताणुस्कन्धपर्यवसानानां स्वरूपं द्रष्टव्यं, उक्तो द्रव्यस्यानुयोगः, एवं द्रव्याणामपि ज्ञेयः। एकया खटिकया एकेन प्रलेपेन एकेनाऽक्षादिना वा कृत्वा योऽनुयोगः क्रियते स द्रव्येणानुयोगः, यस्तु बहुभिरक्षादिभिः स द्रव्यैरनुयोगः, यस्तु द्रव्ये फलकादावुपविष्टेनानुयोगः क्रियते स द्रव्येऽनुयोगः, यस्तु प्रभूतासु निषद्यास्ववस्थितोऽनुयोगं करोति स द्रव्येष्वनुयोगः ३, एवं क्षेत्रस्य एकस्य जम्बूद्वीपादेरनुयोगो यथा जम्बूद्वीपप्रज्ञप्तिः, तस्या जम्बूद्वीपलक्षणैकक्षेत्रस्याख्यान-

रूपत्वात्, क्षेत्राणां यथा द्वीपसागरप्रज्ञप्तिः, बहूनां द्वीपसमुद्राणां तया व्याख्यानात्, क्षेत्रेणानुयोगो यथा पृथिवीकायिकादिसङ्ख्याव्याख्यानं जम्बूद्वीपप्रस्थकं कृत्वा, उक्तं च—"जंबुद्दीवपमाणं पुढविजिआणं तु पत्थयं काउं। एवं मविज्जमाणा भवंति लोगा असंखिज्जा ॥ १॥" क्षेत्रैरनुयोगो यथा—बहुद्वीपसमुद्रप्रमाणप्रस्थकं कृत्वा पृथिवीकायादिसङ्ख्याभणनं, क्षेत्रेऽनुयोगः तिर्यग्लोके भरतादौ, क्षेत्रेष्वर्द्धतृतीयेषु द्वीपसमुद्रेषु ४, कालस्यानुयोगः समयस्यानुयोगः समयस्यानुयोगद्वारेषु प्ररूपणा, कालानां प्रभूतानां समयावलिकादीनां प्ररूपणा, कालेन यथा बादरवायुकायिकानां वैक्रियशरीराणि अद्धापल्योपमस्यासङ्ख्येयस्य भागमात्रेणापह्रियन्ते; कालैर्यथा प्रत्युत्पन्नत्रसकायिकाः प्रतिसमयमेकैकापहारेणापह्रियमाणा असङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, कालेऽनुयोगो द्वितीयपौरुष्यां, कालेष्ववसर्प्पिण्यां त्रिष्वरकेषु सुषमाचरमभागे दुःषमसुषमायां [दुःषमायां] च, उत्सर्प्पिण्यामरकद्वये दुःषमसुषमायां सुषमदुःषमायां च, वचनस्यानुयोग इत्थम्भूतमेकवचनं, वचनानां इत्थम्भूतान्येकवचनद्विवचनबहुवचनानि, यद्वित्रा षोडशानां च वचनानामनुयोगः, तानि चामूनि—"लिंगतिअं ३ वयणतिअं ६ कालतिअं ९ तह परोक्ख १० पच्चक्खं ११। उवणयऽवणयचउद्धा १५ अज्झत्थं १६ होइ सोलसमं" ॥१॥ व्याख्या—इयं स्त्री अयं पुरुष इदं कुलमिति त्रीणि लिङ्गप्रधानानि लिङ्गवचनानि, एको द्वौ बहव इत्येकत्वाद्यभिधायकशब्दसन्दर्भो वचनत्रिकं, अकरोत् करोति करिष्यतीत्यतीतादिकालनिर्देशप्रधानं वचनं कालत्रिकमिति कालत्रिकवचनमित्यर्थः, तथा स इति परोक्षवचनं, अयमिति प्रत्यक्षनिर्देशः प्रत्यक्षवचनं, उपनयवचनं तु चतुर्द्धा भवति, तद्यथा रूपवती स्त्री सुशीला चेत्युपनयोपनयवचनं, रूपवती परं कुशीला इत्युपनयापनयवचनं, कुरूपा परं सुशीलेत्यपनयोपनयवचनं, कुरूपा कुशीला चेत्यपनयापनयवचनं, अन्यच्चेतसि निधाय विप्रतारक-

बुद्ध्या अन्यद् विभणिषुरपि सहसा यच्चेतसि तदेव वक्ति यत्तत् षोडशमध्यात्मवचनं, एषां षोडशानां वचनविशेषाणां स्वरूपाविर्भावनपरं व्याख्यानं वचनानामनुयोग इति। वचनेनानुयोगो यथा कश्चिदाचार्यः साध्वादिभिरभ्यर्थित एकेन वचनेन करोति, वचनैः स एव बहुभिरसकृदभ्यर्थितो वा इति, क्षायोपशमिके तु वचने स्थितस्यानुयोगो वचनेऽनुयोगः वचनेष्वेव बहुषु, अन्ये तु प्रतिपादयन्ति–वचनेषु नास्त्यनुयोगः, तस्य क्षायौपशमिकत्वात् तस्य चैकत्वात् ६, भावानुयोगो द्विधा–आगमतो नोआगमतश्च, आगमतो ज्ञाता उपयुक्तः, नोआगमतो भावस्यानुयोगोऽन्यतमस्यौदयिकादेर्व्याख्यानं, भावानां तु बहूनामौदयिकादिभावानां व्याख्यानं, भावेनानुयोगः सङ्ग्रहादीनां पञ्चानामध्यवसायानामन्यतरेणाध्यवसायेन, उक्तं च–'पंचहिं ठाणेहिं सुअं वाएज्जा, तंजहा–संगहट्ठयाए उवग्गहट्ठयाए निज्जरट्ठयाए सुअपज्जवजाएणं अव्वोच्छित्तीए', अस्यार्थः–यदा आचार्यः शिष्यान् श्रुतं न ग्राहयति तदा तं परित्यज्य श्रुतार्थिनस्तेऽन्यत्र गच्छेयुरिति कथं नु नाम मया एते शिष्याः सङ्गृहीता भविष्यन्तीति बुद्ध्या श्रुतं वाचयति, उपग्रहार्थं तेषामेव शिष्यानामनुग्रहार्थमित्यर्थः, स्वकर्मनिर्जरणार्थं च, श्रुतपर्यवजातेन हेतुभूतेन वाचयेच्छिष्यान्, शिष्यान् वाचयतो ममापि श्रुतपर्यवराशिर्वृद्धिं यास्यति, ममापि श्रुतं निर्मलं भविष्यतीति कृतबुद्धिर्वाचयेदित्यर्थः, [ श्रुतस्य शिष्यप्रशिष्यपरम्परागततया अव्यवच्छित्तिर्भूयादिति पञ्चममव्यवच्छित्तिः कारणं ]। भावैरेभिरेव द्वित्रादिभिः सर्वैर्वा, भावेऽनुयोगः क्षायोपशमिके भावे स्थितस्य व्याख्यानं कुर्वतः, भावेष्वाचारादिषु, अथवा प्रतिक्षणपरिणामत्वात् क्षयोपशमस्य भावेष्वनुयोगः, अथवा भावेषु नास्त्येव क्षयोपशमस्यैकत्वात्। एतेषां च द्रव्याद्यनुयोगानां परस्परसमावेशः स्वबुद्ध्या वक्तव्यः। उक्तं च भाष्यकारेण–''दव्वे नियमा भावो न विणा ते यावि खित्तकालेहिं। खित्ते तिन्हवि भयणा कालो भयणाए तीसुंपि

॥ १ ॥" ( वि. १४०८ ) व्याख्या–द्रव्ये इति द्रव्यविषयेऽनुयोगे नियमाद्भावो निश्चयेन भावानुयोगोऽस्ति, तदव्याख्याने द्रव्यस्य व्याख्यातुमशक्यत्वात्, 'न विणे'त्यादि तावपि द्रव्यभावानुयोगौ क्षेत्रकालानुयोगाभ्यां विना न भवतः, तद्विशिष्टत्वात्तयोः, तथाहि–पर्यायो भावस्तद्विशिष्टं द्रव्यं व्याख्यानयन्नवश्यमेव क्वचिदवगाढं व्याचष्टे स्थितिमच्चेति । तथा क्षेत्रानुयोगे क्रियमाणे त्रयाणामपि द्रव्यकालभावानां भजना, कदाचित्सन्ति, कदाचिन्नेति । अलोकलक्षणे हि क्षेत्रे विचार्यमाणे तत्र परमाण्वादि-द्रव्यस्याभावादाकाशद्रव्यस्य च क्षेत्रद्वारेणैव गृहीतत्वाद्द्रव्यानुयोगाभावः, समयादिरूपकालस्य च तत्राभावात्कालानुयोगाभावः, अगुरुलघ्वादिक्षेत्रपर्यायाणामविवक्षितत्वात्, क्षेत्रग्रहणेनैव च तेषां गृहीतत्वाद्भावानुयोगाभावोऽपि भावनीयः, इत्यलोकक्षेत्रे त्रयोऽप्यनुयोगा न विद्यन्ते, लोके तु समयक्षेत्रादौ सन्तीति भजना, तथा त्रिष्वपि द्रव्यक्षेत्रभावेषु कालानुयोगो भजनीयः, कालो हि नाम द्विधा–वर्त्तनादिरूपः समयावलिकादिरूपश्च, आद्यः समस्तद्रव्यक्षेत्रभावव्यापी, समयावलिकादिलक्षणस्तु कालः समयक्षेत्रान्तर्वर्त्तिद्रव्यादिष्वस्ति बहिर्वर्त्तिषु तु नास्तीति भजना । ननु यद्येवं तर्हि 'न विणा ते यावि खित्तकालेहिं' इत्यत्र काल-मन्तरेण द्रव्यभावौ न भवत इति यदुक्तं तद्विरुध्यते, समयक्षेत्राद्बहिस्तमन्तरेण तयोः सुलभत्वात्, सत्यं, किन्तु पूर्वं वर्त्तना-रूपस्यैव कालस्य विवक्षितत्वात्, तस्य च सर्वव्यापित्वात्, अत्र तु समयक्षेत्रनियतसमयादिरूपस्यैव कालस्य विवक्षितत्वाददोषः, विशेषार्थिना तु भाष्यविवरणमन्वेषणीयम् ॥ १३२ ॥

उक्तोऽनुयोगः, एतद्विपरीतस्त्वननुयोगः, साम्प्रतमनुयोगाननुयोगप्रतिपादकदृष्टान्तप्रतिपादनार्थमाह—

वच्छगोणी १ खुज्जा २, सज्झाए ३ चेव बहिरउल्लावो ४ । गामिल्लिए ५ य वयणे, सत्तेव य हुंति भावंमि ॥१३३॥

नामस्थापने सुगमे, द्रव्याननुयोगे तत्प्रसङ्गतो द्रव्यानुयोगे वत्सगावावुदाहरणं, कृष्णसितगोषु वत्सकव्यत्यये पयोऽलाभः, यथास्थिते तु तल्लाभः, एवमिहापि यदि जीवलक्षणेन द्रव्येणाजीवं प्ररूपयति अजीवलक्षणेन वा जीवं तर्ह्यननुयोगो भवति, यतस्तं भावमन्यथा गृह्णाति तेनार्थो विसंवदति, अर्थेन विसंवदता चारित्रेण मोक्षः (मोक्षाभावः), मोक्षाभावे दीक्षा निरर्थिका, अथ जीवलक्षणेन जीवं प्ररूपयति अजीवलक्षणेन वा अजीवं, ततोऽनुयोगस्ततः कार्यसिद्धिः, तथाहि–अविकलोऽर्थावगमस्ततश्चरणवृद्धिस्ततो मोक्ष इति। क्षेत्रानुयोगानुयोगयोः कुब्जोदाहरणं भाव्यते–प्रतिष्ठानेशशात(लि)वाहनो भृगुकच्छं वर्षे वर्षेऽरुणात्। एकदा यात्रां गतेनाऽऽस्थानमण्डपिकायां राज्ञा भूमौ थूत्कृतं, कच्चोलकधारिणा कुब्जिकादास्या परिवाराग्रे कथितं, प्रगे सैन्यं स्वयं चलितं, राजा रजोभयादेकान्ते स्थितः, अग्रगं सैन्यं दृष्टं, परम्परया ज्ञातं, पृष्टा, आख्यान्त्याः क्षेत्रमेतन्न परिभोग्यं प्रभोः कुब्जिकाया अनुयोगोऽन्यथाऽननुयोगः, हारिभद्रीयवृत्तौ त्वेषोऽननुयोगस्तस्या मण्डपिकायाः क्षेत्रमेव चिन्त्यते, विपरीतोऽनुयोगः। एवं एकान्तनित्यमाकाशमप्रदेशं तथैककं ब्रुवतोऽननुयोगः स्यादनुयोगोऽन्यथा पुनः। कालाननुयोगानुयोगयोः स्वाध्यायोदाहरणं–एकं साधुं रात्रौ स्वाध्यायं कुर्वाणं दृष्ट्वा मा भूच्छलमस्येति शासनसुरी तक्रघटं भृत्वा तक्रविक्रयध्वनिं करोति, साधुना भणितं, का ते तक्रवेला? सा भणति यथा तव स्वाध्यायवेला तथा ममापि तक्रवेला, तेन मिथ्यादुष्कृतं दत्तं, देव्यानुशासितः–मा पुनरेवं करिष्यसि मिथ्यादृष्टिना छलिष्यसि, तस्याकाले स्वाध्यायं कुर्वतोऽननुयोगः। वचनविषयेऽननुयोगे दृष्टान्तद्वयं बधिरोल्लापोदाहरणं ग्रामेयकोदाहरणं च, तत्राद्यं–एकस्मिन्नगरे बधिरकुटुम्बं परिवसति, स्थविरः स्थविरी, तस्याः पुत्रस्तस्य भार्या च, पुत्रो हलं वाहयति, तत्पार्श्वे पान्थेन पृष्टो मार्गः, तेन कथितं मम गृहजातौ वृषभावेतौ, भार्यया भक्तमानीतं

तस्या अग्रे तेन कथितं, मम वृषभौ शृङ्गितौ, तया कथितमन्नं क्षारमितरं वा न जानामि तव मात्रा राद्धं । तया गृहे श्वश्रग्रे कथितं, तया भणितं सूक्ष्मेतरं वा कर्त्तयामि, का ते चर्चा, तया स्वपत्यग्रे कथितं, तेन भणितमेकोऽपि तिलो मया नाखादि, इत्थंकथनेऽननुयोगः, यथोक्तेऽनुयोगः । द्वितीयमुदाहरणम्—एकस्मिन्नगरे विधवा स्त्री, तस्याः मूर्खः पुत्रः, स मात्राभाषि वत्स! विनयो विधेयः, कथं ? जोत्कारो नीचैर्गतिः च्छन्दानुवर्त्तनमित्यादि कार्यं । स च सेवार्थं नगरं प्रति चचाल, मार्गे लुब्धकान् प्रति जोत्कारं चकार, तच्छब्देन मृगा नष्टास्तैः कुट्टितः, स्वभावोक्तिः, तैः प्रोक्तं नीचैरभाषिणाऽऽगम्यं, अग्रे गच्छन् रजकैः पूर्वमपि गच्छद्वस्त्रैश्चौरोऽयमिति कुट्टितः, स्वभावे कथिते तैर्भणितं शुद्धं भवत्विति वाच्यं, अग्रे एवं भणिते बीजवापकैः कुट्टितः, सद्भावे कथिते तैर्भणितमीदृशं बहु वोऽस्तु इति वाच्यं, एवं कथिते शववाहैः कुट्टितः, तैरूचे वियोगोऽस्तु इति वाच्यं, वीवाहिकैः कुट्टितः, तैरूचे शास्वतं वोऽस्त्विति वाच्यं, निगडितैः कुट्टितः, तैरूचे मोक्षोऽस्तु, मित्रैः कुट्टितः, ग्रामठक्कुरस्य सेवां करोति, दुर्भिक्षे तत्कान्तयाऽऽदिष्टः शीतला रब्बा भवति, स परिपद्गतं ग्रामस्वामिनमूचे, स लज्जितः, गृहे कुट्टितः, उक्तं च—ईदृशं गुप्तं कर्णे निवेद्यते, प्रदीपने शनैर्यावत्कथितं तावद् गृहं ज्वलितं, रुषा गोहन्नं (छगणादि) मूर्द्धनि न्यधात्, ऊचे चेदृशे कार्ये त्वयं (त्वरया) नीरं गोमूत्रं वा प्रक्षिप्यते, वस्त्राणि धूपयतो धूमो निर्गतः, गोमूत्रं प्रक्षिप्तं, एवमन्यान्योक्तावननुयोगः, सप्तैव च भवन्ति 'भावे' भावविषये, अननुयोगानुयोगयोः प्रतिपादकान्युदाहरणानि ॥ १३३ ॥ तानि चामूनि—

सावगभज्जा १ सत्तवइए २ अ कुंकणगदारए ३ नउले ४ ।
कमलामेला ५ संबस्स, साहसं ६ सेणिए कोवो ७ ॥ १३४ ॥

आद्यमुदाहरणं श्रावकभार्या–श्राद्धः प्रियासखीं दृष्ट्वाऽनुरागात् क्षीणः, प्रियया पृष्टः, कथितं माऽधृतिं कार्षीः, रात्रौ सखीवेषं कृत्वा सैव जगाव, व्रतभङ्गात्प्रातः खेदः मा विषादीः प्रियोक्तिः ज्ञातेऽनुयोगः पूर्वमननुयोगः, एवं स्वसमयं योऽन्यसमयोऽयमिति ब्रूते, औदयिकभावलक्षणेन वा औपशमिकलक्षणं प्ररूपयतोऽननुयोगः १। द्वितीयं सप्तभिः पदैर्व्यवहरतीति सप्तपदिकस्तदुदाहरणं–एकत्र प्रत्यन्तग्रामे एकः क्षत्रियः, तस्य साधुभिरुपदिष्टं यथा सप्तपदी पश्चाद्गत्वा घातं दद्याः वङ्कचूलवत्, मारयामीत्यननुयोगः, भगिनीयमिति ज्ञाते पुंसोऽनुयोगः २। कौंकणकोदाहरणं–कौंकणकविषये पितापुत्रौ, पिता च सपत्नीपुत्रोऽस्तीति कन्यामलभमानः पुत्रं मारणेच्छुः, अरण्ये मुक्तबाणाऽऽनयनाऽऽदिष्टः पुत्रः, पृष्ठे बाणं मुक्तं, रक्ष पितः !, द्वितीये मुक्ते ज्ञातोऽभिप्रायः, अज्ञातेऽननुयोगः ज्ञातेऽनुयोगः ३। नकुलोदाहरणमिदं–चारभटी पदातिपत्नी, सुतनकुलौ, नकुलेन बालकापकारी सर्पोऽमारि, तया सोऽपि, पूर्वमज्ञातेऽननुयोगः ज्ञातेऽनुयोगः, एवमसम्यक्सम्यक्प्ररूपणेऽननुयोगानुयोगौ ४। कमलामेलोदाहरणं–सागरचन्द्रस्य शाम्बं कमलामेलां मन्यमानस्याननुयोगः, नाहं कमलामेला कमलामेलोऽहमिति भणितेऽनुयोगः, तथा कमलामेलया सह सागरचन्द्रे विवाहिते युद्धे विष्णुना शाम्बो ज्ञातः, अज्ञातेऽननुयोगः ज्ञातेऽनुयोगः ५। शाम्बस्य साहसमुदाहरणं–जाम्बवत्या कृष्णं प्रति भणितं, मया पुत्रस्यानाडिता न दृष्टा, कृष्णेन प्रोचे दर्शयाम्यद्य, द्वाभ्यामाभीराभीरीरूपं कृतं शाम्बेनाभीरी भणिता एहि गोरसं क्रीणामि, स एकस्यां देवकुलिकायां प्रविष्टः, आभीर्या भणितमहमत्रैव तिष्ठामि, तावता शाम्बो हस्ते लग्नः, आभीर आगतो द्वाभ्यां युद्धं कृतं, आभीरो वासुदेवो जातः आभीरी जाम्बवती, शाम्बोऽपि मातापितरौ दृष्ट्वा लज्जितो नष्टः, द्वितीयदिने कीलकं घटमानः कृष्णेन भणितं, पर्युषितं वचो वक्ति तस्य मुखे प्रक्षिप्यते, पूर्वम-

ननुयोगः शाम्बस्य, जाम्बवतीयमिति ज्ञातेऽनुयोगः ६। श्रेणिककोपोदाहरणं-चिल्लणायां पूर्वमननुयोगः, सतीत्वे ज्ञाते श्रेणिकस्यानुयोगः, एवमत्रापि [विपरीत]याथात्म्यवदनेन तौ ॥ १३४ ॥ एवं तावदनुयोगः सप्रतिपक्षः सप्रपञ्चेनोक्तः, नियोगोऽपि पूर्वप्रतिपादितस्वरूपमात्रः सोदाहरणोऽनुयोगवदवसेयः, साम्प्रतं प्रागुपन्यस्तभाषादिस्वरूपप्रतिपादनायाह—

कट्ठे १ पुत्थे २ चित्ते ३ सिरिघरिए ४ पुंड ५ देसिए ६ चेव। भासगविभासए वा, वत्तीकरणे अ आहरणा ॥१३५॥

काष्ठविषयो दृष्टान्तः-यथा काष्ठे कश्चित् रूपकारः स्वल्पाकारमात्रं करोति, कश्चित् स्थूलावयवनिष्पत्तिं, कश्चित् पुनरशेषोपाङ्गाद्यवयवनिष्पत्तिं, एवं काष्ठकल्पं सामायिकादिसूत्रं, तत्र भाषकः परिस्थूरमर्थमात्रमभिधत्ते-यथा समभावः सामायिकं, [ विभाषकस्तु तस्यैवानेकधा अर्थमभिधत्ते यथा समभावः सामायिकं ]समानां वाऽऽयः समायः स एव स्वार्थे इकणप्रत्ययविधानात्सामायिकमित्यादि, व्यक्तिकरणशीलो व्यक्तिकरः, यः खलु निरवशेषव्युत्पत्तिअतिचारफलादिभेदभिन्नमर्थं भाषते, स च निश्चयतश्चतुर्दशपूर्वविदेव, इह भाषकादिस्वरूपान्वाख्यानात् भाषादय एव प्रतिपादिता द्रष्टव्याः, भाषादीनां तत्प्रभवत्वात् १। एवं पुस्ते-लेप्यकर्म्मणि २ चित्रकर्म्मणि च ३। श्रीगृहं-भाण्डागारं तदस्यास्तीति श्रीगृहिकस्तदृष्टान्तः, तत्र कश्चिद्रत्नानां भाजनं वेत्ति, अन्यस्तेषां जातिं प्रमाणं च, अपरस्तु तद्गुणानपि, एवमाद्यद्वितीयतृतीयकल्पा भाष्य(ष)कादयो द्रष्टव्याः ४। 'पुंड'मिति पद्मं, यथेषद्भिन्नमर्द्धभिन्नं विकसितं च त्रिधा भवति, एवं भाषा(षका)द्यपि क्रमेण ५। देशनं देशः-कथनमित्यर्थः, सोऽस्यास्तीति देशिकः, तत्र कश्चिद्देशकः पन्थानं पृष्टः सन् दिग्मात्रमेव कथयति, कश्चित्तद्व्यवस्थितग्रामनगरादिभेदेन, कश्चित्पुनस्तदुत्थगुणदोषभेदेन, एवं भाषकादयोऽपि ॥ १३५ ॥ तदेवं विभाग उक्तः, सम्प्रति द्वारविधिमवसरप्राप्तं विहाय व्याख्यान-

भाषकादि-
स्वरूपं
दृष्टान्ताश्च
गा. १३५

विधिः प्रतिपाद्यते, किमर्थं ?, उच्यते, शिष्याचार्ययोः सुख[श्रवणसुख]व्याख्यानप्रवृत्त्या शास्त्रोपकारार्थं—

गोणी चंदणकंथा, चेडीओ सावए बहिरगोहे । टंकणओ ववहारो, पडिवक्खो आयरियसीसे ॥ १३६ ॥

एते चाचार्यशिष्ययोः संयुक्ता दृष्टान्ताः, एक आचार्यस्य एकः शिष्यस्य, द्वौ वैकस्मिन्नेवावतार्येते। गौणी–गौस्तदुदाहरणं–केनापि गौः सरुग् उपविष्टा क्रीताऽक्षमा, सोऽपि क्रायकान् ब्रूते मयापि गत्वाद्यनवलोक्य गृहीता यूयमपि तथैव, आचार्योऽप्येवं प्रत्युत्तरं दातुमक्षमः मयैवं श्रुतं, शिष्याः ! यूयमप्येवं शृणुत, तत्पार्श्वे न श्रोतव्यं मिथ्यात्वादिसम्भवात्, [ यः पुनः अविकल-गोविक्रायक इवाक्षेपनिर्णयप्रसङ्गपारगः तस्य सकाशे श्रोतव्यं ], आद्यगोक्रायकवच्छिष्योऽपि (आद्यगोविक्रायक इव अविचार्यग्राही शिष्योऽपि) न योग्यः १। एवं चन्दनकन्थोदाहरणं–बारवईए नयरीए वासुदेवस्स तिन्नि भेरीओ–संगामिआ अब्भुइआ कोमुइआ, तिन्नि गोसीसचंदणमइआओ देवयापरिग्गहियाओ, तस्स चउत्थी भेरी असिवप्पसमणी, तीसे उप्पत्ती कहिज्जइ–सक्को देवलोगे वासुदेवस्स गुणकित्तणं करेइ–अहो ! उत्तमपुरिसा एए अवगुणं न गिण्हंति, नीएण जुद्धेण न जुज्झंति, एगो देवो असद्दहंतो आगओ, वासुदेवो जिणसगासे वंदिउं पट्ठिओ, सो अंतरा कालसुणयरूवं मययं दुब्भिगंधं विउव्वेइ, तस्स गंधेण सव्वो लोगो पराभग्गो, वासुदेवेण दिट्ठो, भणिअं चऽणेण–अहो इमस्स कालसुणयस्स पंडुरा दंता मरगयभायणनिहिअमुत्ताहलीव रेहंति, देवो चिंतइ–सच्चं गुणग्गाही, तओ वासुदेवस्स आसरयणं ही(ह)रइ, वासुदेवो भणइ कीस मम आसरयणं हरसि ?, देवो भणइ नीइ(अ)जुज्झेण पराजिणिऊण गिण्हाहि, वासुदेवेण भणिअं, पराजिओ हं, नेहि आसरयणं, नाहं नीइ(अ)जुद्धेण जुज्झामि, देवो तुट्ठो भणइ किं ते वरं देमि ?, सो भणइ असिवोवसमणिं भेरिं देहि, तेण दिन्ना। सा छण्हं मासाणन्ते वाइज्जइ, तत्थ जो सद्दं

सुणेइ तस्स पुव्वुप्पन्ना रोगा उवसमंति, नवगावि छम्मासे न उप्पज्जंति । अन्नया आगंतुगो वाणियगो आयाओ अईव दाहज्जरेण अभिभूओ, तं भेरीपालगं भणइ–गिण्ह तुमं सयसहस्सं, मम इत्तो पलमित्तं देहि, तेण लोभेण दिन्नं, तत्थ अन्ना चंदणथिग्गलिआ दिन्ना, एवं अन्नेण अन्नेण मग्गिओ दिन्नं च, सा सव्वा चंदणकंथा जाया, सा अन्नया कयाइ असिवे वासुदेवेण ताडाविआ जाव तं चेव सभं न पूरेइ, तेण भणिअं–[ जोएह मा भेरी विणासिया होज्जा, ताहे जोइया दिट्ठा कंथीकया ], हा भेरी सव्वा विणासिआ, सो भेरीपालो ववरोविओ, अन्ना भेरी अट्ठमभत्तेण आराहइत्ता लद्धा, अन्नो भेरीपालो [ कओ, सो ] आयरेण रक्खइ, [सो पूइतो] । एवं यः शिष्यः सूत्रमर्थं परमतेन स्वकीयग्रन्थान्तरेण वा मिश्रयित्वा कन्थां करोति अथवा विस्मृतं सूत्रमर्थं वा सुशिक्षितः स्वयमेवाहं नान्यं कञ्चित्कदाचित्किमपि पृच्छामीत्यहङ्कारेण परमतादिभिरपि मिश्रयित्वा सम्पूर्णं विदधाति सोऽनुयोगश्रवणाय न योग्यः, एवं कन्थीकृतसूत्रार्थो गुरुरपि नानुयोगभाषणस्य योग्यः २ । चेटिके–वालिके तद्दृष्टान्तः–वसन्तपुरे जीर्णश्रेष्ठिनवश्रेष्ठिसुते एकदा नद्यां मज्जितुं गते, नवश्रेष्ठिपुत्र्या आभरणानि जीर्णश्रेष्ठिसुतया गृहीतानि, विवादः राजकुले, परीक्षा, जीर्णपुत्री व्यत्यये हस्ताभरणानि पादे पादाभरणानि हस्ते [परिदधाति] अलीका ज्ञाता, जीर्णो दण्डितः । एवमाचार्योऽपि व्यत्ययेनार्थप्ररूपणां कुर्वाणो दण्ड्यते भवदण्डेन, शिष्योऽप्येवंविधो न [ योग्यः ] । अत्र गाथे "अत्थाणत्थनिउत्ताऽऽभरणाणं जिन्नसिट्ठिधूअव्व । न गुरू विहिभणिए वा विवरीअनिओअओ सीसो ॥ १ ॥ सत्थाणत्थनिउत्ता ईसरधूआ सभूसणाणं व । होइ गुरू सीसोविअ विणिओअंतो जहाभणिअं ॥२॥" (वि. १४४०–४१) आद्याया अर्थः–अस्थानेऽनौचित्येनार्थेषु प्रयोजनेषु अर्थान् सूत्रार्थरूपान्नियुङ्क्ते, अस्थानार्थनियोक्ता गुरुर्न भवति इति योगः, विधिना प्रतिपादितेऽर्थे गुरुभिः विपरीतार्थनियोक्ता

शिष्यो न भवति, के च केषां विपरीतनियोक्ता? आभरणानां जीर्णश्रेष्ठिदुहितेवेति ३। श्रावकोदाहरणं पूर्ववत्, नवरमुपसंहारः "चिरपरिचिअंपि न सरइ सुत्तत्थं सावगो सभज्जं व। जो न स जोग्गो सीसो गुरुत्तणं तस्स दूरेणं ॥१॥" (वि. १४४२) ४। वधिरोदाहरणं पूर्ववत्, उपसंहारस्तु "अन्नं पुट्ठो अन्नं जो साहइ सो गुरू न वहिरो व्व। न य सीसो जो अन्नं सुणेइ अणु(परि)भासए अन्नं ॥१॥ (वि. १४४३) ५। एवं गोहोदाहरणोपसंहारोऽपि वक्तव्यः ६। टंकणव्यवहारोदाहरणं–इहोत्तरापथे टंकणा नाम म्लेच्छाः दक्षिणापथादायातवस्तूनि गृह्णन्ति, मिथो भाषां न जानते, एके पण्यपुञ्जं अन्ये काञ्चनं मुञ्चन्ति। इच्छापूर्त्तौ गृह्णन्ति नान्यथा, एषामिष्टश्च व्यवहारो यथा, एवं–"अक्खेवनिन्नयपसंगदाणग्गहणाणुवत्तिणो दोवि। जोग्गा सिस्सायरिआ टंकणवणिओवमा एसा ॥ १ ॥" ७। इत्थमुक्तप्रकारेण गवादिषु द्वारेषु साक्षादभिहितार्थविपर्ययः–प्रतिपक्षः, स आचार्यशिष्ययोर्यथायोगं योजनीयः ॥ १३६ ॥ अथ गाथाद्वयेन विशेषतः शिष्यदोषगुणान् प्रतिपादयन्नाह—

कस्स न होही वेसो अणब्भुवगओ अ निरुवगारी अ। अप्पच्छंदमईओ, पट्ठिअओ गंतुकामो अ ॥ १३७ ॥
विणओणएहिं, कयपंजलीहिं छंदमणुअत्तमाणेहिं। आराहिओ गुरुजणो, सुयं बहुविहं लहुं देइ ॥ १३८ ॥

ननु शिष्यदोषगुणानां विशेषाभिधानं किमर्थं?, उच्यते कालान्तरेण तस्यैव गुरुत्वभवनात्, अयोग्याय च गुरुपदनिवन्धन-विधाने तीर्थकराज्ञादिलोपप्रसङ्गात्। कस्य गुरोर्न भविष्यति द्वेष्योऽप्रीतिकरः शिष्यः?, अपि तु भविष्यत्येव, किं सर्व एव?, नेत्याह–अनभ्युपगतः–श्रुतसम्पदा अनुपसम्पन्नोऽनिवेदितात्मेति भावः, उपसम्पन्नोऽपि न सर्व एवाद्वेष्य इत्याह–'निरुपकारी च' गुरूणां निरुपकारको गुरुकृत्येष्वप्रवर्त्तक इत्यर्थः, उपकार्यपि न सर्व एवाद्वेष्य इत्याह–आत्मच्छन्दा आत्मायत्ता मतिर्यस्य

कार्येष्वसौ आत्मच्छन्दमतिकः, गुर्वायत्तमतिरपि न सर्व एवाद्वेष्य इत्याह–'प्रस्थितो' यो योऽन्यः कोऽपि शिष्यो गन्तुमनास्तस्य द्वितीयः, तथा गन्तुकामश्च, सदैव गन्तुमना व्यवतिष्ठते, वक्ति च–कोऽस्य गुरोः सन्निधाने व्यवतिष्ठते ?, समर्थ्यतामेतत् श्रुतस्कन्धादि ततो यास्यामीति, तदेवम्भूतः शिष्यो न योग्यः श्रवणस्य ॥१३७॥ अथ गुणानाह–विनयोऽभिवन्दनस्तेनावनता विनयावनतास्तैरित्थम्भूतैः सद्भिः, तथा पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयस्तैः, छन्दो–गुर्वभिप्रायस्तं इङ्गिताकारादिना विज्ञाय तदध्यवसितश्रद्धानसमर्थनकरणकारणादिनाऽनुवर्त्तमानैः, एवमाराधितो गुरुजनः श्रुतं–सूत्रार्थोभयरूपं बहुविधमनेकप्रकारं लघु–शीघ्रं ददाति ॥१३८॥ अथ प्रकारान्तरेण शिष्यपरीक्षां प्रतिपादयति—

**सेलघण कुडग चालणि, परिपूणग हंस महिस मेसे अ। मसग जलूग बिराली जाहग गो भेरी आभीरी ॥१३९॥**

एतानि शिष्ययोग्यायोग्यत्वप्रतिपादकान्युदाहरणानि, उदाहरणं च द्विधा स्यात्–चरितं कल्पितं च, तत्रेदं कल्पितं, शैलः–मुद्गलशैलो मुद्गप्रमाणपाषाणविशेषः, घनो मेघः, शैलश्च घनश्च शैलघनः, तदुदाहरणं–यथा मुद्गशैलः पुष्करावर्त्तश्च मेघः, तत्र नारदसदृगेको नरः कलहं पश्यति (योजयति), स मुद्गशैलं भणति–तव नामग्रहणे कृते पुष्करावर्त्तो भणति–एकधारया तं विदारयामि, शैलो भणति–यदि मे तिलतुषत्रिभागमप्यार्द्रयति तदा नाम न वहामि, पश्चात्तेन शैलस्य वचनानि मेघस्य कथितानि, स रुष्टो युगपन्मुशलप्रमाणधाराभिर्वर्षति, सप्तदिनान्ते भिन्नो भविष्यतीति स्थितः, नीरे उत्सरिते उज्ज्वलतरो दृष्टः, मेघो लज्जितो गतः। एवं कश्चिच्छिष्य एकमपि पदं न गृह्णाति, कश्चिदाचार्यो भणत्यहं ग्राहि(हयि)ष्यामि, पाठयितुमारब्धो न शक्नोति, लज्जितो गतः, ईदृशस्य न दातव्यं, प्रतिपक्षः कृष्णभूमिः 'वुट्ठेवि दोणमेहे न कण्हभोमाउ लोट्टए उदयं। गहणधरणा-

समत्थे इअ देअमच्छित्तिकारंमि ॥ १ ॥' १ । कुटोदाहरणं—कुटा घटा उच्यन्ते, ते द्विविधा—नवा जीर्णाश्च, जीर्णा द्विधा—भाविता अभाविताश्च, भाविताः द्विधाः—प्रशस्तभाविता अगुर्वादिभिः, अप्रशस्तभाविताश्च लशुनादिभिः, प्रशस्तभाविता वाम्या अवाम्याश्च, एवमप्रशस्तभाविता अपि, येऽप्रशस्ताऽवाम्या ये च प्रशस्ता वाम्यास्ते न सुन्दराः, अभाविता न केनापि भाविताः, नवा अवाहाद( आपाकाद )वतारितमात्राः, एवमेव शिष्या नवा, ये मिथ्यादृष्टयस्तत् प्रथमतया ग्राह्यन्ते, जीर्णा अपि येऽभावितास्ते सुन्दराः, अथवा कुटाश्चतुर्विधाः—अधच्छिद्राः खण्डाः अकण्ठाः, सम्पूर्णाङ्गाः, यस्यैकपार्श्वे खण्डेन हीनता स खण्डकुटः, यदीच्छा तदासौ प्रयत्नेन सज्जीकर्तुं पार्यन्ते । अयमकण्ठखण्डयोर्विशेषः । एवं शिष्या अपि चत्वारो वेदितव्याः, यो व्याख्यानमण्डल्यामुपविष्टः सर्वमर्थमवबुध्यते पश्चान्न किमपि स्मरति स छिद्रकुटसमानः, योऽर्द्धमात्रं त्रिभागचतुष्केण हीनं वा सूत्रार्थमवधारयति यथावधारितं च स्मरति स खण्डकुटाभः २, यस्तु किञ्चिदूनं धारयति स्मरति च सोऽकण्ठाभः ३, यः सकलमप्याचार्योक्तं धारयति स्मरति च स सम्पूर्णकुटाभः ४ । आद्योऽयोग्यः, शेषा यथोत्तरं प्रवराः २ । चालन्युदाहरणं—चालन्यां यथा जलं शीघ्रं गलति, तथा शिष्यस्य सूत्रार्थौ यदा कर्णे प्रविशतः तदैव विस्मृतौ स चालनीसमोऽयोग्यः, तथा च शैलच्छिद्रकुटचालनीभेदप्रदर्शनार्थमुक्तमेव भाष्यकृता—'सेलेअछिड्डुचालणि मिहो कहा सोउ उट्ठिआणं तु । छिड्डाह तत्थ चिट्ठो सुमरिंसु सरामि नेआणिं ॥ १ ॥ एगेण विसइ बीएण नीइ कन्नेण चालणी आह । धन्नु त्थ आह सेलो जं पविसइ नीइ वा तुज्झं ॥ २ ॥' ( वि. १४६३–४ ) इति । चालनीप्रतिपक्षस्तापसखपुरं, तत्र द्रवमपि न स्रवति ॥ ३ ॥ परिपूणको नाम घृतगलनं सुगृहीगृहं, तदुदाहरणं, स कचवरं धारयति घृतमुज्झति, एवं "वक्खाणाइसु दोसे

हिअयंमि ठवेइ मुयइ गुणजालं। सीसो सो उ अजुग्गो भणिओ परिपूणगसमाणो ॥ १ ॥" ( नन्दीटिप्प० ) ननु सर्वज्ञमतेऽपि दोपसम्भव इत्यपयुक्तं ( इत्यश्रद्धेयं ), सत्यं, उक्तमेवात्र भाष्यकृता 'सव्वन्नुपमाणाओ दोसा न हु संति जिणमए केवि (इ)। जं अणुवउत्तकहणं अपत्तमासज्ज व भवंति (भवेज्ज) ॥१॥' (वि. १४६६) ४। हंसः क्षीरमुदकमिश्रितं, उदकमपहाय क्षीरमापिवति, तथा शिष्योऽपि यो गुरोरनुपयोगसम्भवाद्दो(न् दो)षानवधूय गुणानादत्ते, स योग्यः ५। महिषोदाहरणं–सयमवि न पिअइ महिसो न य जूहं पिअइ लोलिअं उदयं। विग्गहविगहाहिं तहा अथक्कपुच्छाहि अ कुसीसो ॥१॥ ६। मेषोदाहरणं–'अवि गोपयंमिवि पिवे सुढिओ तणुअत्तणेण तुंडस्स। न करेइ कलुसं तोयं मेसो एवं सुसीसोवि ॥ १ ॥' ( वि. १४६८ ) ७। मशकजलुकयोरुदाहरणे–'मसगु व्व तुदं जच्चाइएहिं निच्छुब्भए कुसीसोवि ( वि. १४६९ ) ८। जलूगा व अदूमंतो पिअइ सुसीसोवि सुअनाणं ॥१॥" ९ (वि. १४७०)। 'छड्डेउं भूमीए जह खीरं पिअइ दुट्ठमज्जारी। परिसुड्डिआण पासे सिक्खइ एवं जिणमभासी ( विणयभंसी ) ॥ १ ॥ ( वि. १४७१ ) १०। जाहकः सेहुलकाभिधस्तिर्यग्विशेषस्तदुदाहरणं "पाउं थोवं थोवं खीरं पासाइं जाहओ लिहइ। एमेव जिअं काउं पुच्छइ मइमं न खेएइ ॥ १ ॥०११। गोरुदाहरणं–एकेन धर्मार्थिना चतुर्णां द्विजानां गौर्दत्ता, आद्यश्चिन्तयति कल्येऽन्यो दोहकः, किं दत्तैस्तृणादिभिः अन्येऽप्येवं, गौर्मृता, अवर्णवादो लोकेऽपुनर्लाभः, एवं शिष्या अपि चिन्तयन्ति न खलु केवलानामस्माकमाचार्यो व्याख्यानयति किन्तु प्रतीच्छकानामपि, त एव विनयादिकं करिष्यन्ति, किमस्माकं?, प्रतीच्छका अप्येवं चिन्तयन्ति निजशिष्याः सर्वं करिष्यन्ति, किमस्माकं कियत्कालावस्थायिनां इति, तेषामेवं चिन्तयतामपान्तराल एवाचार्यो विषीदति, लोके तेषामवर्णवादो, गच्छान्तरे दुर्लभौ तेषां सूत्रार्थौ, ते चतुर्द्विजा

इवायोग्याः। एष एव गोदृष्टान्तः प्रतिपक्षेऽपि योजनीयः, आद्येन चिन्तितं यद्यहमस्याश्चारिं न दास्ये ततः क्षुधा धातुक्षयादेषा मरिष्यति, लोकेऽवर्णवादो गोहत्या च भविष्यति, दातव्या चारिरिति, एवं शेषैरपि, लोके साधुवादोऽजनि, लभन्ते च प्रभूतमन्यदपि गवादिकं, एवं विनेयानामपि विनयादिकं कुर्व्वतां गुरुः प्रसन्नो विद्यां ददाति, नान्यथा १२। भेरीदृष्टान्तः प्राग्वत् १३। आभीरमिथुनं घृतवान् (घृतं) विक्रेतुं ग्रामं जगाम, शकटादुत्तारयतो भग्नो घटः, त्वया भग्न इति विवादे सन्ध्यायां शेषं घृतं वृषभौ च चौरादिभिर्हृतं, तौ महतो दुःखस्य भाजनमजायेतां। एवं विनेयोऽन्यथा प्ररूपयन्नधीयानो वा परुषवाक्यैराचार्येण शिक्षितोऽधिक्षेपपुरस्सरं प्रतिवदति–यथा त्वयैवेत्थं शिक्षितोऽहं, किमिदानीं निह्नुपे इत्यादि। स न केवलमात्मानं संसारे पातयति, किन्त्वाचार्यमपि परुषप्रत्युच्चारणादिना तीव्रतीव्रतरकोपानलज्वालनात्, स एकान्तेनायोग्यः, प्रतिपक्षभावनायामपि इदमेव कथानकं भावनीयम्। अन्याभीरयुग्मेन घृतघटे भग्ने मया भग्नं मया भग्नं इत्युक्तिः, त्वया सुष्ठु अर्पितो मया न गृहीतः, एवं वदतोः प्रीतिः, एवं शिष्यो ब्रूते–सुष्ठु न गृहीतं, गुरुर्ब्रूते–सुष्ठु न दत्तं, इत्थं ज्ञानवृद्धिः १४। इत्थमाचार्यशिष्यदोषगुणकथनलक्षणो व्याख्यानविधिः प्रतिपादितः ॥ १३९ ॥ इदानीमुपोद्घातप्रदर्शनायाह—

उद्देसे निद्देसे, निग्गमे खित्त काल पुरिसे अ। कारण पच्चय लक्खण, नए समोआरणाऽणुमए ॥ १४० ॥
किं कइविहं कस्स, कहिं केसु कहं केचिरं हवइ कालं। कइ संतरमविरहिअं, भवागरिस फासण निरुत्ती ॥ १४१ ॥

उद्देशो वक्तव्यः, एवं सर्वेषु क्रिया योज्या। उद्देशः सामान्याभिधानमध्ययनमिति १, निर्देशो विशेषाभिधानं सामायिकमिति २, निर्गमः कुतोऽस्य सामायिकाध्ययनस्य निर्गमनम् ३, क्षेत्रं कस्मिन् क्षेत्रे इदं प्रादुर्भूतम् ४, कालः कस्मिन्काले

५, पुरुषश्च वक्तव्यः कुतः पुरुषादिदं प्रवृत्तं ६, कारणं किं कारणं गौतमादयः शृण्वन्ति ? ७, प्रत्याययतीति प्रत्ययः; अन्तर्भूतण्यर्थादल्, केन प्रत्ययेन भगवतेदमुपदिष्टं, को वा गणधराणां श्रवणे [प्रत्यय] इति ८, लक्षणं श्रद्धानादि ९, नया नैगमाद्याः १०, तेषां नयानां समवतारणं, क्व नयाः समवतरन्ति इति ११, अनुमतं, कस्य व्यवहारादेर्नयस्य किमनुमतं सामायिकं १२, किं सामायिकं १३, कतिविधं सामायिकं १४, कस्य सामायिकं १५, क्व क्षेत्रादौ सामायिकं १६, केषु द्रव्येषु सामायिकं १७, कथं केन प्रकारेण सामायिकमवाप्यते १८, कियत्कालं स्यात्सामायिकं १९, कियन्तः प्रतिपद्यन्ते पूर्वप्रतिपन्ना वा २०, सान्तरं निरन्तरं वा, यदि सान्तरं तर्हि किमन्तरं स्यात् २१, अविरहेण कियन्तं कालं प्रतिपद्यन्ते २२, उत्कृष्टतः कियतो भवान् यावदाप्यते सामायिकं २३, आकर्षणमाकर्षो ग्रहणमिति भावः, तत्र कियन्त आकर्षा एकभवेऽनेकभवेषु वा २४, स्पर्शना कियत् क्षेत्रं सामायिकवन्तः स्पृशन्ति २५, निश्चिता उक्तिर्निरुक्तिश्चतुर्णां सामायिकानां वक्तव्या २६ ॥ १४१ ॥

एष उपोद्घातमूलद्वारगाथाद्वयसमासार्थः, अवयवार्थं तु प्रतिद्वारं निर्युक्तिकृदेव वक्ष्यति, उद्देशद्वारावयवार्थप्रतिपादनायाह—

**नामं ठवणा दविए, खेत्ते काले समास उद्देसे । उद्देसुद्देसंमि अ, भावंमि अ होइ अट्ठमओ ॥ १४२ ॥**

यस्य जीवादेरुद्देश इति नाम क्रियते स नाम्ना उद्देशः, उद्देश इत्यक्षरन्यासः स्थापनोद्देशः, द्रव्यविषय उद्देशो द्रव्योद्देशः, स द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तो, नोआगमतो ज्ञशरीरादिभेदात् त्रिधा, आद्ये द्वे प्रतीते, तद्व्यतिरिक्तस्त्रिधा—द्रव्यस्य द्रव्येण द्रव्ये वा उद्देशो द्रव्योद्देशः, द्रव्यस्य द्रव्यमिदं, द्रव्येण द्रव्यपतिरयं, द्रव्ये राजा

सिंहासने, एवं क्षेत्रस्य क्षेत्रेण क्षेत्रे वा, क्षेत्रमिदं १ क्षेत्रपतिरयं २ क्षेत्रे जातिमिदं ३, एवं कालस्य कालेन काले वा, अयं कालः १ इदं कालातिक्रान्तं २ इदं काले जातं ३, समासः संक्षेपस्तद्विषय उद्देशः समासोद्देशः, स चाङ्गश्रुतस्कन्धाध्ययनभेदात् त्रिधा, तत्राप्यङ्गसमासोद्देशो द्विधा–यथा इदमङ्गं १, अयं तदध्येता तदर्थज्ञो वा अङ्गीति २, एवं श्रुतस्कन्धसमासोद्देशाध्ययनसमासोद्देशावपि वक्तव्यौ, उद्देशः–अध्ययनविशेषस्तस्योद्देश उद्देशोद्देशः यथायमुद्देश इति । उद्देशेन वा उद्देश उद्देशोद्देशः, उद्देशाध्ययनादुद्देशार्थपरिज्ञानाद्वाऽयमुद्देशवानिति, तथा भावविषयश्च भवत्यष्टमकः, एषोऽपि द्विधा–भावस्योद्देशोऽयं भाव इति १, भावेनोद्देशोऽयं भावीति २ ॥ १४२ ॥ अथोद्देशव्याख्यानेन निर्देशाख्यद्वितीयद्वारमतिदिशन्नाह—

एमेव य निद्देसो, अट्ठविहो सोऽवि होइ णायव्वो । अविसेसिअमुद्देसो, विसेसिओ होइ निद्देसो ॥ १४३ ॥

यथाष्टविध उद्देश उक्तः, एवमेव च निर्देशोऽप्यष्टविध एव भवति ज्ञातव्यः, किन्तु अविशेषितः सामान्यनामस्थापनादिगोचर उद्देशः, विशेषितस्तु नामादिविषयो भवति निर्देश इति विशेषः, यथा नामनिर्देशोऽयं जिनभद्र इत्यादि १, स्थाप्यमानः स्थापनानिर्देशः, निर्देश इत्यक्षरस्थापना, २, द्रव्यस्यापि त्रिविधस्य सचित्तादेर्यद्विशिष्टमभिधानं स द्रव्यनिर्देशः, सचित्ताचित्तमिश्रः, गौरियं १ अयं दण्डः २ अयं रथोऽश्वासक्तः ३, क्षेत्रनिर्देश इदं भरतं ४, कालनिर्देशः समयावलिकादिः ५, समासनिर्देशस्त्रिधा समासोद्देशवत्, आचाराङ्गं १ आवश्यकश्रुतस्कन्धः २ सामायिकाध्ययनमिति ३।६, उद्देशेन निर्देशः शस्त्रपरिज्ञादेः प्रथमो द्वितीयो वेति, उद्देशस्य निर्देशो वा, यथा भगवत्यां पुद्गलोद्देशः ७, भावनिर्देशः औदयिकः औदयिकवानित्यादि ८। इह तु समासोद्देशनिर्देशाभ्यामधिकारः, अध्ययनमिति समासोद्देशः, सामायिकमिति समासनिर्देशः ॥ १४३ ॥

इदं च सामायिकं नपुंसकं, सावद्ययोगविरमणस्य नपुंसकतया रूढत्वात्, अस्य च निर्देष्टा-उच्चारयिता इत्यर्थः, त्रिविधोऽपि स्त्रीपुमान्नपुंसकं च, तत्र को नयो नैगमादिः कं निर्देशमिच्छतीति प्रतिपिपादयिषुराह—

दुविहंपि णेगमणओ, णिद्देसं संगहो य ववहारो। निद्देसगमुज्जुसुओ, उभयसरित्थं च सद्दस्स ॥ १४४ ॥

नैगमो द्विविधमपि सामायिकं मन्यते, कथं? निर्देश्यनिर्देशकवशात्, निर्देश्यं सामायिकं, निर्देशको वक्ता। तत्र निर्देश्यमाश्रित्य रूढितो नपुंसकं सामायिकं, निर्देष्टुः स्त्रीपुन्नपुंसकलिङ्गत्वात् तत्परिणामानन्यत्वाच्च सामायिकार्थरूपस्य त्रिलिङ्गताप्येतन्मतेनाऽविरुद्धा। ननु द्विविधमपि नैगमनय इत्येतावत्युक्ते निर्देश्यवशान्निर्देशकवशाच्च निर्देशमिच्छतीति क्रियाध्यहारः कुतोऽवसीयते?, उच्यते, यत आह 'निर्दिष्टं' वस्त्वङ्गीकृत्य संग्रहो व्यवहारश्च, चस्य व्यवहितः सम्बन्धः, निर्देशमिच्छतीति वाक्यशेषः, इयमत्र भावना-इह वचनमर्थप्रकाशकमेवोपजायते प्रदीपवत्, यथा हि प्रदीपः प्रकाश्यं प्रकाशयन्नेवात्मरूपं प्रतिपद्यमानः प्रकाश्यादात्मलाभं लभते इति व्यपदिश्यते, तथा वचनमप्यर्थं प्रतिपादयन्नेवात्मरूपं प्रतिपद्यमानमर्थादात्मलाभं लभते इति व्यवह्रियते, अर्थश्च सावद्ययोगविरमणरूपो नपुंसकतया प्रसिद्धः इति सामायिकस्य नपुंसकलिङ्गतां सङ्ग्रहव्यवहारावभ्युपगच्छतः, तथा निर्देशको-वक्ता तमङ्गीकृत्य सामायिकनिर्देशं ऋजुसूत्रो मन्यते, स एवं वक्ति-वचनं वक्त्राधीनं तद्भावभावित्वात्, यदेव वक्तुर्लिङ्गं तदेव वचनस्यापीति, यदा पुमान्निर्देष्टा तदा सामायिकस्य पुल्लिङ्गता, एवं स्त्रीनपुंसकयोजना कार्या। तथा 'उभयसदृशं' निर्देश्यनिर्देशकसदृशं, समानलिङ्गमेव वस्त्वङ्गीकृत्य निर्देशप्रवृत्तिरिति वाक्यशेषः, एतदुक्तं भवति-उपयुक्तो हि निर्देष्टा निर्देश्यादभिन्न एव, तदुपयोगानन्यत्वात्। ततश्च पुंसः पुमांसमभिदधतः पुंनिर्देश एव, एवं

स्त्रियाः स्त्रियं प्रतिपादयन्त्याः स्त्रीनिर्देशः, एवं क्लीबस्य क्लीबमभिदधानस्य क्लीबनिर्देश एव, यदा तु पुमान् स्त्रियमभिधत्ते तदा स्त्रिया उपयोगानन्यत्वात् स्त्रीरूप एवासौ, एवं निर्देश्यनिर्देशकयोः समानलिङ्गतैव, एवं सर्वत्र संयोज्यम्, असमानलिङ्गनिर्देशोऽस्याऽवस्त्वेव, असमानं लिङ्गं ययोः स्त्रीपुरुषयोस्तयोरेककालमेकेन वक्रा योऽसौ निर्देशः सोऽवस्त्वेव, तस्मादुपयुक्तो यमर्थमाह स तद्विज्ञानानन्यत्वात्तन्मय एव, तन्मयत्वात्तत्समानलिङ्गनिर्देशः, ततश्च सामायिकवक्ता तदुपयोगानन्यत्वात्सामायिकं प्रतिपादयन् आत्मानमेवाह यतस्तस्मात्तत्समानलिङ्गाभिधान एवासौ, रूढितश्च सामायिकार्थरूपस्य नपुंसकत्वात् स्त्रियाः पुंसो नपुंसकस्य वा प्रतिपादयतः सामायिकस्य नपुंसकलिङ्गनिर्देश एवेति शब्दनयमतां सर्वनयमतान्यपि चामूनि पृथग् पृथग् विपरीतविषयत्वान्न प्रमाणं, समुदितानि तु समस्तान्तर्बाह्यनिमित्तसामग्रीसापेक्षत्वात्प्रमाणं ॥१४४॥ अथ निर्गमद्वारप्रतिपादनार्थमाह—

नामं ठवणा दविए, खित्ते काले तहेव भावे अ। एसो उ निग्गमस्सा, णिक्खेवो छव्विहो होइ ॥ १४५ ॥

नामस्थापने सुगमे, द्रव्यनिर्गमो द्विधा—आगमतः पूर्ववत्, नोआगमतस्त्रिधा, ज्ञभव्यशरीरे सुगमे, तद्व्यतिरिक्तोऽनेकधा, द्रव्यात्सच्चित्ताचित्तमिश्रात् द्रव्यस्य सचित्ताचित्तमिश्रस्य प्रत्येकमिति नवभङ्गी, तद्यथा—सचित्तात्सचित्तस्य निर्गमः पृथिव्या अङ्कुरस्य १, सचित्तान्मिश्रस्य भूमेः पतङ्गस्य, तस्य मिश्रता पक्षाद्यवयवानामचित्तत्वात् २, सचित्तादचित्तस्य भूमेर्बाष्पस्य ३, मिश्रात्सचित्तस्य देहात्कृमेः देहस्य मिश्रता तद्गतकेशनखाद्यवयवानामचित्तत्वात् ४, मिश्रान्मिश्रस्य स्त्रीदेहाद् गर्भस्य ५, मिश्रादचित्तस्य देहाद्विष्ठायाः ६, अचित्तात्सचित्तस्य काष्ठात्कृमेः ७, अचित्तान्मिश्रस्य काष्ठाद् घूणस्य तस्य मिश्रता पक्षाद्यवयवानामचित्तत्वात् ८, अचित्तादचित्तस्य काष्ठाद् घूणचूर्णस्य ९। अथवा चतुर्भङ्गी द्रव्याद्द्रव्यस्य १ द्रव्याद्द्रव्याणां २

द्रव्येभ्यो द्रव्यस्य ३ द्रव्येभ्यो द्रव्याणां ४, तत्र द्रव्याद्द्रव्यस्य यथा रूपकाद्रूपकस्य निर्गमः एकस्मादेव कलान्तरप्रयुक्तादित्यर्थः १, तस्यैकस्मादेव कलान्तरतो बहुकालेन प्रभूतनिर्गमः २, प्रभूतेभ्यः स्वल्पकालेनैकस्य निर्गमः ३, प्रभूतेभ्यः प्रभूतानां ४ इति । क्षेत्रात् क्षेत्रस्य वा निर्गमः, अधोलोकक्षेत्राद्विनिर्गत्य जीवस्तिर्यग्लोके समागतः, क्षेत्रस्य यथा राजकुलाल्लब्धममुकं क्षेत्रं, कालात्कालस्य वा निर्गमः, कालो ह्यमूर्त्तस्तथाप्युपचारतो दुर्भिक्षान्निर्गतो देवदत्तो बालकालाद्वा, कालस्य वसन्तस्य निर्गम उत्पाद इत्यर्थः, भावस्य भावाद्वा निर्गमः, पुद्गलस्य वर्णादिविशेषात् जीवस्य वा क्रोधादिपरिणामाद्विनिर्गमः, भावस्य पुद्गलाद् वर्णादिविशेषस्य जीवात्क्रोधादिपरिणामस्योत्पत्तिः, एष एव तुशब्द एवार्थः, निर्गमस्य निक्षेपः षड्विधो भवतीति ॥ १४५ ॥

एवं शिष्यमतिप्रकाशार्थं प्रसङ्गतोऽनेकधा निर्गम उक्तः, इह च प्रशस्तभावनिर्गममात्रेणाप्रशस्तापगमेन चाधिकारः, शेषैरपि तदङ्गत्वात्, इह च द्रव्यं भगवान् वर्द्धमानः क्षेत्रं महासेनवनं कालः प्रथमपौरुषीरूपः, भावश्च भावपुरुषो वर्द्धमानरूपः, एतानि सामायिकरूपप्रशस्तभावनिर्गमाङ्गानि द्रष्टव्यानि, अत्र वक्ष्यमाणो भावः सामायिकलक्षणः, एतच्च सर्वं भगवान्महावीरलक्षणद्रव्याधीनं अतस्तस्यैव प्रथमतो मिथ्यात्वादिभ्यो निर्गममभिधित्सुराह—

जह मिच्छत्ततमाओ विणिग्गओ, जह य केवलं पत्तो। जह य पयासिअमेयं, सामाइअं तह पवक्खामि ॥१॥ (प्रक्षे०)

इयं गाथान्यकर्तृकी अव्याख्याता च—

पंथं किर देसित्ता, साहूणं अडविविप्पणट्ठाणं। सम्मत्तपढमलंभो, बोद्धव्वो वद्धमाणस्स ॥ १४६ ॥

पन्थानं 'किले' त्याप्तवादे देशयित्वा—कथयित्वा साधुभ्यः, 'अडवि'त्ति सप्तम्या लोपः, अटव्यां पथो विप्रनष्टेभ्यः, पुनस्तेभ्य

एव देशनां श्रुत्वा सम्यक्त्वं प्राप्तः, एवं सम्यक्त्वप्रथमलाभो बोद्धव्यो वर्द्धमानस्य, भावार्थः कथानकादवसेयः ॥ १४६ ॥
एतदेवोपदर्शयन् गाथाद्वयमन्तर्भाष्यकृदाह—

अवरविदेहे गामस्स, चिंतओ रायदारुवणगमणं । साहू भिक्खनिमित्तं सत्था हीणे तहिं पासे ॥ मू. भा. १ ॥

अपरविदेहे ग्रामस्य चिन्तकः, 'रायदारुवणगमणं' ति अत्र निमित्तशब्दलोपो द्रष्टव्यः, राजदारुनिमित्तं तस्य वनगमनं, स साधून् भिक्षानिमित्तं सार्थाद् भ्रष्टान् तत्र दृष्टवान् ॥ १ ॥

दाणन्न पंथनयनं अणुकंप गुरूण कहण सम्मत्तं । सोहम्मे उववण्णो, पलियाउ सुरो महिड्ढीओ ॥ मू. भा. २ ॥

परमभक्त्या दानमन्नपानस्य, नयनं–प्रापणं पथि, तदनन्तरमनुकम्पया गुरोर्धर्मकथनं, ततः सम्यक्त्वप्राप्तिः, तत्प्रभावान्मृत्वा सौधर्मे उत्पन्नः पल्योपमायुः सुरो महर्द्धिकः ॥ २ ॥

लद्धूण य सम्मत्तं, अणुकंपाए उ सो सुविहियाणं । भासुरवरबोंदिधरो, देवो वेमाणिओ जाओ ॥ १४७ ॥

स ग्रामचिन्तकः सुविहितानामनुकम्पया–परमभक्त्या तेभ्यः सम्यक्त्वं लब्ध्वा च भास्वरां–दीप्तिमतीं वरां–प्रधानां बोन्दीं–तनुं धारयतीति भास्वरवरबोन्दिधरो देवो वैमानिको जात इति निर्युक्तिगाथार्थः ॥ १४७ ॥

चइऊण देवलोगा, इह चेव य भारहंमि वासंमि । इक्खागकुले जाओ, उसभसुअसुओ मरीइत्ति ॥ १४८ ॥

देवलोकात्स्वायुःक्षये च्युत्वा इहैव भारते वर्षे इक्ष्वाकुकुले जात उत्पन्नः ऋषभसुतसुतो मरीचिरिति नाम्ना सामान्येन ऋषभपौत्रः ॥ १४८ ॥ यतश्चैवमतः—

श्रीवीरस्य प्रथम-सम्यक्त्व लाभः देवत्वं च मू.भा.१-२ गा. १४६ १४७ मरीचिः गा. १४८

**इक्खागकुले जाओ, इक्खागकुलस्स होइ उप्पत्ती । कुलगरवंसेऽईए, भरहस्स सुओ मरीइत्ति ॥ १४९ ॥**

इक्ष्वाकूणां कुलमिक्ष्वाकुकुलं, तस्मिन् जातः भरतस्य सुतो मरीचिरिति योगः, पूर्वं सामान्यऋषभपौत्रत्वाभिधाने सति इदं विशेषाभिधानामदुष्टमेव, स च, कुलकरा वक्ष्यमाणलक्षणास्तेषां वंशः-प्रवाहस्तस्मिन्नतीतेऽतिक्रान्ते जातः, यतश्चैवमतः इक्ष्वाकुकुलस्य भवत्युत्पत्तिर्वाच्येति वाक्यशेषः ॥ १४९ ॥

तत्र कुलकरवंशेऽतीते इत्युक्तं अतः प्रथमं कुलकराणामेव यस्मिन् काले क्षेत्रे च प्रभवस्तत्प्रतिपिपादयिषुरिदमाह—

**ओसप्पिणी इमीसे, तइयाए समाए पच्छिमे भागे । पलिओवमट्ठभाए, सेसंमि उ कुलगरुप्पत्ती ॥ १५० ॥**

अस्यामवसर्पिण्यां वर्त्तमानायां या तृतीया समा-सुषमदुःषमाभिधाना तस्या यः पश्चिमो भागस्तस्मिन्, पल्योपमाष्टभागे शेषे तिष्ठति सति कुलकरोत्पत्तिः अभूदिति वाक्यशेषः ॥ १५० ॥ कुत्र क्षेत्रे इत्याह—

**अद्धभरहमज्झिल्लुतिभागे, गंगासिंधुमज्झंमि । इत्थ बहुमज्झदेसे, उप्पण्णा कुलगरा सत्त ॥ १५१ ॥**

अर्द्धभरतमध्येऽत्र बहुमध्यदेशे न तु पर्यन्तेषु, उत्पन्नाः कुलकराः सप्त, वैताढ्यपर्वतादारतः परिग्राह्यमर्द्धभरतं ॥ १५१ ॥

**पुव्वभव कुलगराणं उसभजिणिंदस्स भरहरण्णो अ । इक्खागकुलुप्पत्ती णेयव्वा आणुपुव्वीए ॥ १ ॥ ( प्रक्षि० )**

इयं गाथा अन्यकर्तृकी अव्याख्याता च । अथ कुलकरवक्तव्यताभिधायिकां द्वारगाथां प्रतिपादयति—

**पुव्वभवजम्मनामं, पमाण संघयणमेव संठाणं । वण्णित्थियाउ, भागा भवणोवाओ य णीई य ॥ १५२ ॥**

कुलकराणां पूर्वभवा वक्तव्याः १, तथा जन्म २, नाम ३, प्रमाणानि ४, संहननं ५, एवः पूरणार्थः, संस्थानं ६,

वर्ण्णाः ७, स्त्रियः ८ आयुः ९ भागाः कस्मिन्वयोभागे कुलकरत्वं जातं १०, भवनेषूपपातो भवनोपपातश्च, भवनग्रहणं भवनपतिनिकायेषु तेषामुपपातो नान्यत्रेति प्रदर्शनार्थं ११, नीतिश्च हक्कारादिः १२ ॥ १५२ ॥ तत्र प्रथमद्वारार्थाभिधित्सयाह—

अवरविदेहे दो वणिय, वयंसा माइ उज्जुए चेव । कालगया इह भरहे, हत्थी मणुओ अ आयाया ॥ १५३ ॥

अपरविदेहे द्वौ वणिग्वयस्यावभूतां, एको मायी अपरश्च ऋजुरेव, तौ च कालगतौ इह भरते आयातौ, मायी हस्ती जातः इतरो मनुष्यश्च, हस्ती मनुष्यश्चायातावित्यनेन जन्मद्वारं प्रतिपादितं वेदितव्यं ॥ १५३ ॥

दट्ठुं सिणेहकरणं, गयमारुहणं च नामणिप्फत्ती । परिहाणि गेहि कलहो, सामत्थण विन्नवण हत्ति ॥ १५४ ॥

दृष्ट्वा परस्परं स्नेहकरणं गजारोहणं च, नामनिवृत्तिः विमलवाहनाद्विमलवाहन इति । गच्छता कालेन कल्पद्रुमाणां हानिः, ततः प्रभूता प्रभूततरा गृद्धिः । ततः कलहः, 'सामत्थणं ति' देशीवचनतः पर्यालोचनं भण्यते, ततो विमलवाहनस्य विज्ञापना, स तैरधिपश्चक्रे, स च तेषां दण्डं चकार हा इति, ततो हकारनीतिप्रवृत्तिः, स च जातजातिस्मृतिः, तस्य चन्द्रयशाः प्रिया तयोर्युग्मं जातं, एवं क्रमेणैकस्मिन् वंशे सप्त कुलकरा उत्पन्नाः, पूर्वभवाश्च कुलकराणां प्रथमानुयोगतो ज्ञेयाः, जन्म पुनरिहैव सर्वेषां द्रष्टव्यं ॥ १५४ ॥ गतं जन्मद्वारं, अथ नामद्वारमाह—

पढमित्थ विमलवाहण, चक्खुम जसमं चउत्थमभिचंदे । तत्तो अ पसेणइए, मरुदेवे चेव नाभी य ॥ १५५ ॥

प्रथमोऽत्र विमलवाहनः १ चक्षुष्मान् २ यशस्वी ३ चतुर्थोऽभिचन्द्रः ४ ततश्च प्रसेनजित् ५ मरुदेवश्चैव ६ नाभिश्च ७ ॥ १५५ ॥ अथ प्रमाणद्वारार्थाभिधित्सयाह—

णव धणुसया य पढमो, अट्ठ य सत्तद्धसत्तमाइं च। छच्चेव अद्धछट्ठा, पंचसया पण्णवीसं तु ॥ १५६ ॥

नवधनुःशतानि प्रथमः १, अष्टौ च २ सप्त ३ अर्द्धसप्तानि ४ षडेव ५ अर्द्धषष्ठानि ६, सर्वत्र शतशब्दो योज्यः, पञ्चशतानि पञ्चविंशति च ७, अन्येऽन्त्यपादमेवं पठन्ति–पञ्चशतानि पञ्चविंशत्यधिकानि ॥१५६॥ अथ संहननसंस्थानप्रतिपादनार्थमाह—

वज्जरिसहसंघयणा, समचउरंसा य हुंति संठाणे। वण्णंपि य वुच्छामि, पत्तेयं जस्स जो आसी ॥ १५७ ॥

सर्व एव वज्रऋषभसंहननाः समचतुरस्राश्च भवन्ति 'संस्थाने' इति संस्थानविषये निरूप्यमाणे, अथ वर्णद्वारसम्बन्धाभिधानायाह–वर्णमपि च वक्ष्ये प्रत्येकं यस्य य आसीत् ॥ १५७ ॥

चक्खुम जसमं च पसेणइअं एए पिअंगुवण्णाभा। अभिचंदो ससिगोरो, निम्मलकणगप्पभा सेसा ॥ १५८ ॥

चक्षुष्मान् यशस्वी च प्रसेनजिच्च एते प्रियङ्गुवर्णाभाः–नीलवर्णा इत्यर्थः अभिचन्द्रः शशिवद्गौरः, निर्मलकनकप्रभाः शेषा विमलवाहनादयस्त्रयः ॥ १५८ ॥ अथ स्त्रीद्वारमाह—

चंदजसचंदकंता, सुरूव पडिरूव चक्खुकंता य। सिरिकंता मरुदेवी, कुलगरपत्तीण नामाइं ॥ १५९ ॥

विमलवाहनादीनां यथाक्रमं चन्द्रयशाः १ चन्द्रकान्ताः २ सुरूपा ३ प्रतिरूपा ४ चक्षुःकान्ता च ५ श्रीकान्ता ६ मरुदेवी ७ कुलकरपत्नीनां नामानि ॥ १५९ ॥

संघयणं संठाणं, उच्चत्तं चेव कुलगरेहिं समं। वण्णेण एगवण्णा, सव्वाओ पियंगुवण्णाओ ॥ १६० ॥

संहननं संस्थानमुच्चैस्त्वं चैव कुलकरैः आत्मीयैः आत्मीयैः सममनुरूपं आसां प्रस्तुतस्त्रीणां, किन्तु प्रमाणेनेपद्‌न्यूना

इति सम्प्रदायः, तथापीषन्न्यूनत्वान्न भेदाभिधानं, वर्णेनैकवर्णाः सर्वाः प्रियङ्गुवर्णाः ॥ १६० ॥ अथायुर्द्वारमाह—

पलिओवमदसभाए, पढमस्साउं तओ असंखिज्जा । ते आणुपुव्विहीणा, पुव्वा नाभिस्स संखेज्जा ॥१६१॥

पल्योपमदशभागः, 'प्रथमस्य' विमलवाहनस्यायुः, ततोऽन्येषां चक्षुष्मदादीनामसङ्ख्येयानि पूर्वाणि इति सम्बध्यते, तान्येवानुपूर्व्याऽनुक्रमेण हीनानि, नाभेः संख्येयानि आयुष्कं, अन्ये तु व्याचक्षते—पल्योपमदशभाग एव प्रथमस्यायुः, ततो द्वितीयस्याऽसङ्ख्येया इति पल्योपमासङ्ख्येयभागा इति वाक्यशेषः, त एवानुपूर्व्या हीनाः शेषाणामायुः तावद्यावत्पूर्वाणि नाभेः सङ्ख्येयानीति, अविरुद्धा चेयं व्याख्या, अपरे व्याचक्षते—प्रथमस्य प्राग्वत्, ततः शेषाणामसङ्ख्येया इति—समुदितानां पल्योपमासङ्ख्येयभागाः, एतदुक्तं भवति—द्वितीयस्य पल्योपमासङ्ख्येयभागः, शेषाणां तत एवासङ्ख्येयभागः असङ्ख्येयभागः पात्यते तावद्यावन्नाभेरसङ्ख्येयानि पूर्वाणि, इदं पुनरपव्याख्यानं, कुतः ? पञ्चानामसङ्ख्येयभागानां पल्योपमचत्वारिंशत्तमसङ्ख्येयभागानुपपत्तेः, उक्तं, च 'पलिओवमट्ठभागे' इत्यादि, तत्राप्याद्यस्य दशमभाग आयुरुक्तं, तस्मिंश्चापगते विंशतितमभागद्वयस्य व्यपगमाच्छेषश्चत्वरिंशद्भागोऽवतिष्ठते, स च सङ्ख्येयतमस्ततश्च कालो न गच्छति, ननु अत एव नाभेरसङ्ख्येयानि पूर्वाण्यायुरिष्टं, उच्यते, अयुक्तं चैतन्मरुदेव्याः सङ्ख्येयवर्षायुष्कत्वात्, नहि केवलज्ञानमसङ्ख्येयवर्षायुषां भवति, ततः किमिति चेदुच्यते, ततश्च नाभेः सङ्ख्येयवर्षायुष्कत्वमेव ॥ १६१ ॥ यत आह—

जं चेव आउयं कुलगराण, तं चेव होइ तासिंपि । जं पढमगस्स आउं, तावइयं चेव हत्थिस्स ॥ १६२ ॥

यदेवायुः कुलकराणां प्रागुक्तं तदेव तत्प्रमाणमित्यर्थो भवति, तासामपि कुलकराङ्गनानां, यत्तु प्रथमस्य कुलकरस्या-

युस्तावदेव भवति हस्तिनः, एवं शेषकुलकरहस्तिनामपि कुलकरतुल्यं द्रष्टव्यं ॥ १६२ ॥ अथ भागद्वारमाह—

जं जस्स आउयं खलु, तं दसभागे समं विभइऊणं। मज्झिल्लट्ठतिभागे, कुलगरकालं वियाणाहि ॥ १६३ ॥

यद्यस्यायुष्कं खलु तद्दशभागान् समं विभज्य मध्यमेऽष्टभागात्मके त्रिभागे कुलकरकालं विजानीहि ॥१६३॥ अमुमेवार्थं प्रकटयन्नाह—

पढमो य कुमारत्ते, भागो चरमो य वुड्ढभावंमि। ते पयणुपिज्जदोसा, सव्वे देवेसु उववण्णा ॥ १६४ ॥

तेषां दशानां भागानां प्रथमश्च कुमारत्वे गृह्यते भागः, चरमश्च वृद्धभागे, शेषा मध्यमा अष्टौ भागाः कुलकरकाल इति, अत एवोक्तं मध्यमाष्टत्रिभाग इति, मध्यमाश्च तेऽष्टौ च मध्यमाष्टौ, त एव त्रिभागस्तस्मिन्। अथोपपातद्वारमाह–ते प्रतनुप्रेमद्वेषाः, प्रेम–रागो द्वेषः प्रसिद्धः एव, सर्वे विमलवाहनादयो देवेषूपपन्नाः ॥ १६४ ॥ केषु देवेष्वित्याह—

दो चेव सुवण्णेसुं, उदहिकुमारेसु हुंति दो चेव। दो दीवकुमारेसुं एगो नागेसु उववण्णो ॥ १६५ ॥

द्वावेव सुपर्णकुमारेषु देवेषु उदधिकुमारेषु भवतो द्वावेव, द्वौ द्वीपकुमारेषु, एको नागकुमारेषूपपन्नः यथासङ्ख्यं ॥ १६५ ॥

अथ हस्तिनां स्त्रीणां चोपपातमाह—

हत्थी छच्चित्थीओ नागकुमारेसु हुंति उववण्णा। एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती ॥ १६६ ॥

हस्तिनः सप्तापि षट् च स्त्रियो नागकुमारेषु भवन्त्युत्पन्नाः, अन्ये व्याचक्षते–हस्ती एक एव षट् च स्त्रियो नागेषु, शेषैर्नाधिकार इति, एका सिद्धिं प्राप्ता मरुदेवी नाभेः पत्नी ॥ १६६ ॥ अथ नीतिद्वारमाह—

हक्कारे मक्कारे, धिक्कारे चेव दंडनीईओ । वुच्छं तासि विसेसं, जहक्कमं आणुपुव्वीए ॥ १६७ ॥

हकारः मकारः धिक्कारश्चैव दण्डनीतयो वर्त्तन्ते, वक्ष्ये तासांविशेषं यथाक्रमं या यस्येति आनुपूर्व्या–परिपाट्या ॥ १६७ ॥

पढमबीयाण पढमा, तइयचउत्थाण अभिनवा बीया । पंचमछट्ठस्स य, सत्तमस्स तइया अभिनवा उ ॥ १६८ ॥

प्रथमद्वितीययोः कुलकरयोः प्रथमनीतिर्हकाराख्या [ तृतीयचतुर्थयोरभिनवा द्वितीया ] स्वल्पापराधे आद्या महापराधे द्वितीया इति साऽभिनवा, पञ्चमषष्ठयोः सप्तमस्य च तृतीयाऽभिनवा, एषा उत्कृष्टा, द्वितीया मध्यमा, आद्या जघन्या, तिस्रोऽपि लघुमध्यमोत्कृष्टापराधिषु यथाक्रममित्यर्थः ॥ १६८ ॥

सेसा उ दंडनीई, माणवगनिहीओ होति भरहस्स । उसभस्स गिहावासे, असक्कओ आसि आहारो ॥१६९॥

शेषास्तु–चारकच्छविच्छेदलक्षणा दण्डनीतिर्भरतस्य माणवकनिधेः सकाशाद्भवति, इयमत्र भावना–कोपाविष्करणे नरे इतः स्थानान्मा यासीरित्येवं यत्परिभाषणं यश्च मण्डलिबन्धो नाऽस्मात्प्रदेशाद्गन्तव्यं इत्येवंरूपे द्वे दण्डनीती ऋषभस्वामिना प्रवर्त्तिते, वर्त्तमानक्रियाभिधानमिह क्षेत्रे सर्वावसर्प्पिणीस्थितिप्रदर्शनार्थं, अन्यास्वप्यतीतास्वेष्यासु चाऽवसर्प्पिणीष्वयमेव न्यायः प्रायो नीत्युत्पादो, तस्य च भरतस्य पितुर्ऋषभस्य गृहवासेऽसंस्कृत आसीदाहारः स्वभावसम्पन्न इत्यर्थः, तस्य हि देवेन्द्रादेशाद्देवा देवकुरूत्तरकुरुभ्यः स्वादूनि फलानि क्षीरोदकमुपनीतवन्तः ॥१६९॥ इयं मूलनिर्युक्तिगाथा, एनामेव मूलभाष्यकृद् व्याख्यानयन्नाह—

परिभासणा उ पढमा, मंडलिबंधंमि होइ बीया उ । चारग छविच्छेआई, भरहस्स चउव्विहा नीई ॥ ३ ॥

भरतस्य चतुर्विधा दण्डनीतिरभूत्, तथाहि–परिभाषणा तु प्रथमा, मण्डलिबन्धश्च परितो रेखाकरणं भवति द्वितीया

तु, एते द्वे प्रागुक्ते युगादिदेवप्रवर्त्तिते, तृतीया चारकलक्षणा भरतेन माणवकनिधिं परिभाव्य प्रवर्त्तिता, चतुर्थी छविच्छेदो-हस्तपादनासिकाच्छेदः, आदिशब्दाच्छिरःकर्त्तनादिपरिग्रहः, साऽपि, एताश्चतस्रोऽपि यथाक्रममल्पगुरुगुरुतरगुरुतमापराधविषया, आद्ये नीती ऋषभनाथेनैवोत्पादिते, अन्त्ये तु माणवकनिधेरुत्पन्ने इति भरतस्य चतुर्विधा नीतिरभूदित्यर्थः, हारिभद्रीयवृत्तौ तु चतुर्विधापि भरतेनैव प्रवर्त्तितेति ॥ ३ ॥ अथ प्राक् सूचित इक्ष्वाकुवंशः प्रतिपाद्यते—

**नाभी विणीअभूमी, मरुदेवी उत्तरा य साढा य। राया य वइरणाहो, विमाणसव्वट्ठसिद्धाओ ॥ १७० ॥**

इयं निर्युक्तिगाथा प्रभूतार्थप्रतिपादिका, अस्यां च प्रतिपदं क्रियाध्याहारः कार्यः, स चैवं—नाभिर्नाम कुलकरोऽभूत्, विनीता भाविपुरी तस्यां भूम्यामवसत्, मरुदेवी तस्य भार्या, राजा च प्राग्भवे वज्र(वैर)नाभः सन् प्रव्रज्यां गृहीत्वा तीर्थकृन्नामकर्म बद्ध्वा मृत्वा सर्वार्थसिद्धिमवाप्य ततश्च्युत्वा तस्यां मरुदेव्यां तस्यां विनीतभूमौ ऋषभनाथः सञ्जातः, तस्योत्तराषाढा-नक्षत्रमासीदिति ॥ १७० ॥

**धणमिहुणसुरमहब्बलललियंगयवइरजंघमिहुणे य। सोहम्मविज्जअच्चुअ चक्की सव्वट्ठ उसभे ॥१॥ (प्रक्षि०)**

इयं गाथाऽन्यकर्तृकी हारिभद्रीयवृत्तावऽव्याख्याता, आद्यभवे धनः सार्थवाहः १, उत्तरकुरुषु मिथुनकः २, सौधर्मे सुरः ३, गन्धिलावती विजये महाबलो राजा ४, ईशाने ललिताङ्गो देवः ५, महाविदेहे वज्रजङ्घः ६, उत्तरकुरुषु मिथुनकः ७, सौधर्मे देवः ८, विदेहेषु वैद्यः ९, अच्युते देवः १०, विदेहे वज्रनाभश्चक्रवर्ती ११, सर्वार्थसिद्धविमाने देवः १२, ऋषभश्च १३ ॥ १ ॥

एतानेव क्रमेण विवरीषुराह—

धणसत्थवाह घोसण, जइगमण अडविवासठाणं च । बहुवोलीणे वासे चिंता, घयदाणमासि तया ॥१७१॥

धनसार्थवाह आसीत् वसन्तपुरं प्रति प्रचलिषुर्घोषणां कृतवान्, तेन सह यतीनां गमनमभूत् अटव्यां वर्षास्थानं च बहु व्युत्क्रान्ते वर्षाकाले धनस्य चिन्ताऽभवत्, घृतदानमासीत्तदा ॥ १७१ ॥

उत्तरकुरु सोहम्मे, महाविदेहे महव्वलो राया । ईसाणे ललियंगो, महाविदेहे वइरजंघो ॥ १ ॥ (प्रक्षि०)

इयमन्यकर्तृकी सोपयोगित्वात् वृत्तौ व्याख्याता, उत्तरकुरुषु मिथुनकः, सौधर्मे देवः, महाविदेहे महाबलो राजा, ईशाने ललिताङ्गदेवः, महाविदेहे वज्रजङ्घः ।

उत्तरकुरु सोहम्मे, विदेहि तेगिच्छियस्स तत्थ सुओ । रायसुय सेट्ठिमच्चासत्थाहसुया वयंसा से ॥ १७२॥

उत्तरकुरुषु मिथुनकः, सौधर्मो देवः, विदेहे चिकित्सकस्य सुतः, तत्र 'से' तस्य राजसुतश्रेष्ठ्यमात्यसार्थवाहसुताश्चत्वारो वयस्या अभवन् ॥ १७२ ॥

विज्जसुयस्स य गेहे, किमिकुट्ठोवहुअं जइं दट्ठं । बिंति य ते विज्जसुयं, करेहि एअस्स तेगिच्छं ॥ १७३ ॥

तस्य वैद्यसुतस्य च गेहे कृमिकुष्ठोपद्रुतं यतिं दृष्ट्वा वदन्ति च ते चत्वारोऽपि वयस्याः वैद्यसुतं-कुरु चिकित्सामिति॥१७३॥

तिल्लं तेगिच्छसुओ, कंवलगं चंदणं च वाणियओ । दाउं अभिणिक्खंतो, तेणेव भवेण अंतगडो ॥ १७४॥

तैलं चिकित्सकसुतोऽदात्, कम्बलरत्नं गोशीर्षचन्दनं च तस्य न स्त इति द्रव्याणां लक्षे गृहीत्वा काञ्चिद्वणिग्विपणिं जग्मुः, तेन वणिजा सम्भ्रान्तेन भणितं किमेताभ्यां कार्यं, ते ऊचुः साधुचिकित्सार्थं, तेन भणितं, मूल्येनालं मुधैव गृहीत्वा

यान्तु ममापि लाभो भवत्विति संवेगमापन्नः, अभिनिष्क्रान्तो दीक्षां प्रतिपन्नवान्, तेनैव भवेनान्तकृत् सिद्धो जातः ॥ १७४ ॥

साहुं तिगिच्छिऊणं, सामण्णं देवलोगगमणं च। पुंडरगिणिए उ चुया, तओ सुया वइरसेणस्स ॥ १७५ ॥

साधुं चिकित्सयित्वा, श्रामण्यं परिपाल्य, पञ्चानामपि देवलोके गमनं च, अच्युतकल्प इत्यर्थः, ततश्च्युताः पुण्डरीकिण्यां नगर्यां वज्रसेनस्य सुता अभवन् ॥ १७५ ॥

पढमित्थ वइरणाभो, बाहु सुबाहू य पीढमहपीढे। तेसिं पिआ तित्थयरो, णिक्खंता तेऽवि तत्थेव ॥ १७६ ॥

तत्र प्रथमो वैद्यसुतोऽत्र वज्रनाभोऽभूत्। शेषास्तु राजश्रेष्ठ्यमात्यसार्थवाहसुताः क्रमेण बाहुसुबाहुपीठमहापीठा बभूवुः, तेषां च पिता वज्रसेनस्तीर्थकरो जातः, तेऽपि वज्रनाभादयः पञ्चापि तत्रैव तीर्थकरस्य पितुः समीपे निष्क्रान्ताः ॥ १७६ ॥

पढमो चउदसपुव्वी, सेसा इक्कारसंगविउ चउरो। बीओ वेयावच्चं, किइकम्मं तइओ कासी ॥ १७७ ॥

प्रथमो वज्रनाभश्चतुर्दशपूर्वी जातः, शेषाश्चत्वारोऽप्येकादशाङ्गविदः, द्वितीयो बाहुर्वैयावृत्त्यं भक्तपानादिनोपष्टम्भलक्षणं चक्रवर्त्तिभोगफलमकार्षीत्, तृतीयः सुबाहुः कृतिकर्म्म—साधुविश्रामणारूपं बाहुबलफलमकार्षीत् ॥ १७७ ॥

भोगफलं बाहुफलं, पसंसणा जिट्ठ इयर अचियत्तं। पढमो तित्थयरत्तं, वीसहि ठाणेहि कासी य ॥ १७८ ॥

भोगफलं बाहुबलमिति व्याख्यातमेव, प्रशंसनं गुरुणा क्रियते ज्येष्ठयोः, कनिष्ठयोः पीठमहापीठयोः 'अचिअत्त'ति गुरुषु प्रशंसां कुर्व्वत्सु मात्सर्यमभूत्। प्रथमस्तीर्थकरत्वं विंशत्या स्थानैरकार्षीत् ॥ १७८ ॥ कानि तानि इत्याह—

अरिहंत सिद्ध पवयण गुरु थेर बहुस्सुए तवस्सीसुं। वच्छल्लया एएसिं, अभिक्खणाणोवओगे य ॥ १७९ ॥

अर्हन् १, सिद्धाः प्रसिद्धाः २, प्रवचनं–श्रुतज्ञानं तदुपयोगानन्यत्वाद्वा सङ्घः ३, गुरुर्धर्मदेशकः ४, स्थविरास्त्रिधा–वयःश्रुतपर्यायैः, तत्र वयसा षष्टिवर्षप्रमाणाः श्रुतेन समवायाङ्गधराः पर्यायेण विंशतिवर्षव्रतपर्यायाः ५, बहु श्रुतं येषां ते बहुश्रुताः, आपेक्षिकं बहुश्रुतत्वं, एवमर्थेऽपि संयोज्यं, किन्तु सूत्रधरेभ्योऽर्थधराः प्रधानास्तेभ्योऽप्युभयधराः ६, विचित्रमनशनादिलक्षणं तपो विद्यते येषां ते तपस्विनः सामान्येन साधवो वा, ततो द्वन्द्वः ७, वत्सलभावो वत्सलता, सा चानुरागयथावस्थितगुणोत्कीर्त्तनाऽनुरूपोपचारलक्षणा तया, एतेषामर्हदादीनामिति, प्राक् षष्ठ्यर्थे सप्तमी, 'बहुस्सुए तवस्सीणं' वा पाठान्तरं, तीर्थकरनामकर्म्म बध्यते इति शेषः, अभीक्ष्णमनवरतं ज्ञानोपयोगे च सति बध्यते ॥ १७९ ॥

**दंसण विणए आवस्सए य, सीलव्वए निरइआरो । खणलव तवच्चियाए, वेयावच्चे समाही य ॥ १८० ॥**

दर्शनं सम्यक्त्वं ९, विनयो ज्ञानादिविनयो दशवैकालिकोक्तस्तयोर्निरतिचारस्तीर्थकरनामकर्म्म बध्नात्येवमग्रेऽपि १०, आवश्यकमवश्यकर्त्तव्यं संयमव्यापारनिष्पन्नं प्रतिक्रमणादि तस्मिंश्च ११, शीलानि च व्रतानि च शीलव्रतानि, शीलान्युत्तरगुणा व्रतानि मूलगुणास्तेषु चानतिचारः १२ क्षणलवग्रहणं कालोपलक्षणं, क्षणलवादिषु संवेगभावनादितः, १३ तपो बाह्याभ्यन्तरःभेदभिन्नं तत्प्रवृत्तिः १४ त्यागो द्विधा–द्रव्यत्यागो नाम आहारोपधिशय्यादीनामप्रायोग्याणां परित्यागः प्रायोग्याणां साधूनां (घूम्यो) भक्तादिदानं, भावत्यागः क्रोधादीनां विवेको ज्ञानादीनां यतिजनेभ्यो वितरणं, द्विविधस्यापि त्यागस्य प्रवृत्तिः १५, वैयावृत्त्यं दशविधं, आचार्यस्य वैयावृत्त्यं १ एवमुपाध्यायस्य २, स्थविरस्य ३, तपस्विनः, ४ ग्लानस्य, ५ शैक्षकस्य ६, साधर्म्मिकस्य ७, कुलस्य ८, गणस्य ९, सङ्घस्य १० इति, एकैकं पुनस्त्रयोदशविधं, भक्त १ पान २ आसनानां दानं ३,

उपकरणप्रत्युपेक्षा ४, पादप्रमार्जनं ५, वस्त्र ६, भैषज्ययोर्दानं ७, अध्वनि साहाय्यं ८, दुष्टस्तेनादिभ्यो रक्षणं ९, वसतौ प्रविशतां दण्डकग्रहणं १०, कायिकमात्रक ११ संज्ञामात्रक १२ श्लेष्ममात्रकाणां समर्प्पणं १३, एवंविधे वैयावृत्त्ये सति बध्यते १६, समाधिश्च गुर्वादीनां कार्यकरणद्वारेण स्वस्थतापादनं तस्मिन् सति १७ ॥ १८० ॥

अप्पुव्वनाणगहणे, सुयभत्ती पवयणे पभावणया । एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ १८१ ॥

अपूर्वस्य ज्ञानस्य ग्रहणे सति १८, श्रुतभक्तिश्च विवक्षितकर्म्मबन्धकारणं १९, प्रवचनप्रभावना च, सा च यथाशक्तिप्रवचनार्थोपदेशरूपा, सङ्कटे महाप्रभावदर्शनेन २०, एवमेभिः कारणैरनन्तरोक्तैस्तीर्थकरत्वं लभते जीवः ॥ १८१ ॥

पुरिमेण पच्छिमेण य, एए सव्वेऽवि फासिया ठाणा । मज्झिमएहिं, जिणेहिं एक्कं दो तिण्णि सव्वे वा ॥१८२॥

पूर्वेण ऋषभनाथेन पश्चिमेन–महावीरेण प्राग्भवे एतानि सर्वाणि स्पृष्टान्यासेवितानि, मध्यमैर्जिनैरेकं द्वे त्रीणि सर्वाणि वा ॥ १८२ ॥

तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भगवओ, तइयभवोसक्कइत्ताणं ॥ १८३ ॥

चः पुनरर्थेन, ननु तत्पुनस्तीर्थकरनामकर्म उदयप्राप्तं कथं वेद्यते ? एवं शिष्येण प्रश्ने कृते सूरिराह–अग्लान्या–ग्लानिपरिहारेण धर्म्मदेशनादिभिः–अष्टमहाप्रातिहार्यादिरूपे सुरेन्द्रकृते पूजोपचारे सति, आदिशब्दाच्चतुस्त्रिंशतातिशयैः पञ्चत्रिंशता बुद्धवचनातिशेषैरित्यादिपरिग्रहः, तत्तु तीर्थकरनामकर्म भगवतस्तीर्थकरभवात् प्राग् अवसर्प्य पश्चिमानुपूर्व्या यस्तृतीयभवस्तस्मिन् बध्यते निकाच्यते, निकाचनारूपश्च बन्धस्तृतीयभवादारभ्य तावत् यावत्तीर्थकरभवे अपूर्वकरणस्य सङ्ख्येयभागास्तत

ऊर्द्धं बन्धव्यवच्छेदः, केवलिकाले च तस्योदयः ॥ १८३ ॥ तत्कस्यां गतौ बध्यते इत्याह—

**नियमा मणुयगईए, इत्थी पुरिसेयरो य सुहलेसो । आसेवियबहुलेहिं, वीसाए अण्णयरएहिं ॥ १८४ ॥**

नियमान्नियमेन मनुष्यगतौ बध्यते, निकाचनारूपो बन्धोऽत्र ग्राह्यः, स्त्री पुरुष इतरो वेति नपुंसकः, शुभलेश्या यस्यासौ शुभलेश्यः, कैर्विंशतेरन्यतरैः स्थानैः, कथम्भूतैः ? आसेवितबहुलैः बहुलमनेकप्रकारमासेवितैरित्यर्थः, पूर्वापरपदनिपातव्यत्ययः प्राकृतशैलेशीवशात् ॥ १८४ ॥

**उववाओ सव्वट्ठे, सव्वेसिं पढमओ चुओ उसभो । रिक्खेण आसाढाहिं, असाढबहुले चउत्थीए ॥ १८५ ॥**

उपपातः सर्वार्थे सर्वेषां सञ्जातः, ततश्चायुःपरिक्षये सति प्रथमो वज्रनाभश्च्युत ऋषभः ऋक्षेण—नक्षत्रेणाषाढाभिरुत्तराषाढाभिः आषाढबहुले चतुर्थ्याम् ॥ १८५ ॥ अथ तद्वक्तव्यतामभिधित्सुर्द्वारगाथामाह—

**जम्मणे नाम वुड्ढी अ, जाईस्सरणे इअ । वीवाहे अ अवच्चे, अभिसेए रज्जसंगहे ॥ १८६ ॥**

जन्मविषयो विधिर्वक्तव्यः १, एवं नामविषयः, २, वृद्धिश्च वाच्या ३, जातिस्मरणे च ४, विवाहे च ५, अपत्ये ६, अभिषेके ७, राज्यसङ्ग्रहे ८, विधिर्वक्तव्यः सर्वत्र योज्यम् ॥ १८६ ॥ अथाद्यद्वारार्थमाह—

**चित्तबहुलट्ठमीए, जाओ उसभो असाढणक्खत्ते । जम्मणमहो अ सव्वो, णेयव्वो जाव घोसणयं ॥ १८७ ॥**

चैत्रबहुलाष्टम्यां जात ऋषभ उत्तराषाढानक्षत्रे, तस्य जन्ममहस्सर्वोऽपि तावन्नेतव्यः—शिष्यबुद्धिं प्रापणीयः यावद् घोषणकमाभियोगिकैरिन्द्रकारितं ॥ १८७ ॥

तीर्थंकरनामकर्मबन्धः श्रीऋषभजन्मादिवक्तव्यता च गा० १८४-१८९

जातिं स्मरतीति जातिस्मरश्च भगवान्, अप्रतिपतितैरेव त्रिभिर्मतिश्रुतावधिरूपैर्ज्ञानैः, अवधिज्ञानं हि भगवतो देवलौकिकमेवाप्रच्युतं भवति, कान्त्या च बुद्ध्या च तेभ्यस्तत्कालभाविभ्यो मिथुनमनुष्येभ्योऽभ्यधिकः ॥ १९३ ॥ अथ विवाहद्वारमाह—

पढमो अकालमच्चू, तहिं तालफलेण दारओ पहओ। कण्णा य कुलगरेणं, सिट्ठे गहिआ उसहपत्ती ॥१९४॥

भगवतो देशोनवर्षकाले एव किञ्चिन्मिथुनं सञ्जातापत्यं सत् तदपत्यमिथुनकं तालवृक्षस्याधो विमुच्य रिरंसया कदलीगृहादिक्रीडागृहमगमत्, तस्माच्च तालवृक्षात् पवनप्रेरितपक्वं तालफलमपतत्, तेन दारकोऽकाले मृतः, एष प्रथमोऽवसर्पिण्यामकालमृत्युः, तदपि मिथुनकं तां दारिकां संवर्द्धयित्वा प्रतनुकषायं मृत्वा सुरलोके समुत्पन्नं, तां चोत्कृष्टरूपां दारिकां दृष्ट्वा मिथुनका नाभिकुलकराय न्यवेदयन्, शिष्टे च-निवेदिते च कन्या ऋषभपत्नी भविष्यतीति कुलकरेण गृहीता ॥ १९४ ॥

भोगसमत्थं नाउं, वरकम्मं तस्स कासि देविंदो। दुण्हं वरमहिलाणं, वहुकम्मं कासि देवीओ ॥ १९५ ॥

भोगसमर्थं भगवन्तं ज्ञात्वा तस्य वरकर्म्म देवेन्द्रोऽकार्षीत्, द्वयोर्वरमहेलयोर्नन्दासुमङ्गलयोः वधूकर्म्म देव्यो-देवेन्द्राग्रमहिष्योऽकार्षुः ॥ १९५ ॥ अथ अपत्यद्वारमाह—

छप्पुव्वसयसहस्सा, पुव्विं जायस्स जिणवरिंदस्स। तो भरहबंभिसुंदरिबाहुबली चेव जायाइं ॥ १९६ ॥

जातस्य जिनवरेन्द्रस्य षट् पूर्वशतसहस्राणि-पूर्वलक्षाणीत्यर्थः, व्यतिक्रामन् एतावत्यवसरे भगवतो भरतादिचत्वार्यपत्यानि जातानि अनुत्तरविमानादवतीर्य सुमङ्गलाया बाहुः पीठश्च भरतबाह्मीति मिथुनकं जातं, तथा सुबाहुर्महापीठश्च सुनन्दाया बाहुबली सुन्दरीति मिथुनकम् ॥ १९६ ॥ अमुमेवार्थं प्रतिपादयन्नाह मूलभाष्यकारः—

देवी सुमंगलाए, भरहो बंभी य मिहुणयं जायं। देवीइ सुनंदाए, बाहुबली सुंदरी चेव ॥ ४ ॥ (मू० भा०)

सुगमा। अन्यान्यप्यपत्यान्याह—

अउणापण्णं जुअले, पुत्ताण सुमंगला पुणो पसवे। नीईणमइक्कमणे, निवेअणं उसभसामिस्स ॥ १९७ ॥

एकोनपञ्चाशतं पुत्राणां युग्मानि सुमङ्गला पुनः प्रसूतवती, अत्रान्तरे प्राग्निरूपितानां हक्कारादिदण्डनीतीनां ते लोकाः प्रचुरतरकषायसम्भवात् अतिक्रमणं कृतवन्तः, ततश्च नीतीनामतिक्रमणे सति ते लोका अभ्यधिकज्ञानादिगुणसमन्वितं भगवन्तं विज्ञाय निवेदनं—कथनम् ऋषभस्वामिने कृतवन्त इत्यध्याहारः ॥ १९८ ॥ एवं निवेदिते सति भगवानाह—

राय करेइ दंडं, सिट्ठे ते बिंति अम्हवि स होउ। मग्गह य कुलगरं, सो य वेइ उसभो य मे राया ॥ १९८ ॥

नीत्यतिक्रमकारिणां राजा करोति दण्डं, स चामात्याऽऽरक्षकादिबलयुक्तः कृताभिषेकोऽनतिक्रमणीयाज्ञश्च भवति, एवं भगवता शिष्टे—कथिते सति ते मिथुनका ब्रुवते—अस्माकमपि स राजा भवतु, वर्त्तमाननिर्देशः खल्वन्यास्वप्यवसर्प्पिणीषु प्राय एष एव न्याय इति प्रदर्शनार्थः, सूत्रस्य त्रिकालगोचरत्वात्, अथवा प्राकृतत्वादार्षत्वाद्वा, भगवानाह—यद्येवं तर्हि मार्गयत—याचध्वं कुलकरं, तैर्याचितो नाभिकुलकरः, स च ब्रूतेऽहं महान् जातः, ऋषभो मे भवतां राजा, ततश्च ते मिथुनकनरा राज्याभिषेककरणार्थमुदकानयनार्थं पद्मिनीसरो गतवन्तः, अत्रान्तरे आसनप्रकम्पादवधिना विज्ञाय शक्रः समागत्य राज्याभिषेकं कृतवान् ॥ १९८ ॥ अमुमेवार्थमुपसंहरन्ननुक्तं च प्रतिपादयन्नाह—

आभोएउं सक्को, उवागओ तस्स कुणइ अभिसेअं। मउडाइअलंकारं, नरिंदजोग्गं च से कुणइ ॥ १९९ ॥

आभोग्यावधिज्ञानेन सम्यग्वस्तुगतिमवगम्य शक्र उपागतः, तस्य भगवतः करोति राज्याभिषेकं, मुकुटाद्यलङ्कारं च; आदिशब्दात्कटककुण्डलकेयूरादिपरिग्रहः, चशब्दस्य व्यवहितः सम्बन्धः, नरेन्द्रयोग्यं च'से' तस्य करोति, अत्रापि वर्त्तमाननिर्देशः प्राग्वत्। पाठान्तरं वा 'आभोएउं सक्को आगंतुं तस्स कासि अभिसेयं। मउडाइअलंकारं नरिंदजोग्गं च से कासी'ति ॥१॥ अत्रान्तरे मिथुनकनराः समागताः ॥ १९९ ॥ एतदेवाह—

भिसिणीपत्तेहिअरे, उदयं घित्तुं छुहंति पाएसु। साहु विणीआ पुरिसा, विणीअनयरी अह निविट्ठा ॥ २०० ॥

विसिनीपत्रैः—पद्मिनीपत्रैरितरे—मिथुनकनराः उदकं गृहीत्वा प्रक्षिपन्ति भगवत्पादयोरुपरि, तानेवंविधक्रियोपेतान् दृष्ट्वा देवराजोऽचिन्तयत्—साधु विनीताः पुरुषा एते इति वैश्रमणमाज्ञापितवान्, इह द्वादशयोजनदीर्घां नवयोजनविष्कम्भां विनीतनगरीं निष्पादयेति, तेन च शक्रादेशाद् अथ—अनन्तरं दिव्यभवनप्राकारमालोपशोभिता विनीताभिधाना नगरी निविष्टा अन्तर्भूतण्यर्थत्वान्निवेशितेत्यर्थः ॥ २०० ॥ गतमभिषेकद्वारमथ राज्यसङ्ग्रहद्वारमाह—

आसा हत्थी गावो, गहिआइं रज्जसंगहनिमित्तं। घित्तूण एवमाई, चउविहं संगहं कुणइ ॥ २०१ ॥

अश्वा हस्तिनो गाव एतानि चतुष्पदानि भगवता तदा गृहीतानि राज्यविषयः सङ्ग्रहः राज्यसङ्ग्रहः तन्निमित्तम्, अश्वादिग्रहणं एवमादिचतुष्पदजातमसौ गृहीत्वा चतुर्विधं—वक्ष्यमाणलक्षणं सङ्ग्रहं करोति, वर्त्तमाननिर्देशः प्राग्वत्, पाठान्तरं वा 'संगहं कासी' ॥ २०१ ॥ कोऽसौ चतुर्विधः सङ्ग्रह इत्याह —

उग्गा भोगा रायण्ण खत्तिआ संगहो भवे चउहा। आरक्खि गुरु वयंसा सेसा जे खत्तिआ ते उ ॥ २०२॥

उग्राः १ भोगाः २ राजन्याः ३ क्षत्रियाः ४ एष सङ्ग्रहो भवेच्चतुर्द्धा, एतेषामेव यथाक्रमं स्वरूपमाह—आरक्षका उग्रदण्डकारित्वादुग्राः १, गुरवो गुरुस्थानीया भगवतः प्रतिपत्तिस्थानीया इत्यर्थो भोगाः २, समानवयसः कृतमण्डलाधिपत्या वयस्याः ३, शेषा ये उक्तव्यतिरिक्ताः, तुः पुनरर्थो, ते पुनः क्षत्रियाः॥२०२॥ अथ विविधलोकस्थितिनिबन्धनप्रतिपादनार्थं द्वारश्लोकचतुष्टयमाह—

आहारे सिप्प कम्मे अ, मामणा अ विभूसणा । लेहे गणिए अ रूवे अ, लक्खणे माण पोअए १९ ॥ २०३ ॥

आहारविषयो विधिर्वक्तव्यः १ एवं शिल्पं घटादि तद्विषयः २, कर्म कृष्यादि तद्विषयः ३, चः समुच्चये, 'मामण' त्ति ममीकारार्थे देशीवचनं ४, चः पूर्ववत्, विभूषणा मण्डनं ५, ते च वक्तव्ये, लेखो लिपिविधानं ६, गणितं—सङ्ख्यानं ७, रूपं काष्ठकर्मादि ८, चौ पूर्ववत्, लक्षणं नृलक्षणादि ९, एतद्विषयो विधिर्वक्तव्यः, 'मान'मिति मानोन्मानावमानप्रमाण-(प्रतिमान)गणिमानां लक्षणं १०, पोत इति बोहित्थः प्रोतं वा अनयोर्मानपोतयोर्विधिर्वाच्यः ११॥ २०३ ॥

ववहारे नीइ जुद्धे अ, ईसत्थे अ उवासणा । तिगिच्छा अत्थसत्थे अ, बंधे घाए अ मारणा ॥ २०४ ॥

व्यवहारविषयः १२, नीतिविषयः १३, युद्धविषयश्च १४, इषुशास्त्रं धनुर्वेदस्तद्विषयश्च प्राकृतत्वात् सुकारलोपः १५, उपासना—नापितकर्म तदपि तदैव जातं १६, 'चिकित्सा' रोगहरणलक्षणा सा च तदैव जाता, एवं सर्वत्र क्रियाध्याहारः कार्यः १७, अर्थशास्त्रं १८, बन्धो निगडादिजन्यः १९, घातो दण्डादिताडना २०, 'मारण' त्ति जीविताद्व्यपरोपणं २१ ॥ २०४ ॥

जण्णूसव समवाए मंगलेकोउगे इअ । वत्थे गंधे अ मल्ले अ, अलंकारे तहेव य ॥ २०५ ॥

एकारान्ताः शब्दाः प्रायः सर्वत्र प्राकृतत्वात् प्रथमान्ता ज्ञेयाः, यज्ञाः—नागपूजाः २२, उत्सवाः—शक्रोत्सवादयः २३,

समवायाः—गोष्ठ्यादिमेलापकाः २४, मङ्गलानि—स्वस्तिकादीनि २५, कौतुकानि—रक्षादीनि, मङ्गलानि च कौतुकानि चेति समासः, मङ्गलेत्ति एकारोऽलाक्षणिकः २६, 'वस्त्रं' चीनांशुकादि २७, गन्धः कोष्ठपुटादिः २८, 'माल्यं' पुष्पदाम २९, 'अलङ्कारः' केशभूषणादिः ३० ॥ २०५ ॥

चोलोवण विवाहे अ, दत्तिआ मडयपूअणा । झावणा थूभ सद्दे अ, छेलावणय पुच्छणा ॥ २०६ ॥

'चूले' ति बालानां चूडाकर्म्म ३१, तेषामेव कलाग्रहणार्थं नयनमुपनयनं साधुसकाशं धर्मश्रवणनिमित्तं वा ३२, विवाहश्च ३३, दत्ता च कन्या पित्रादिना परिणीयते, इत्येतत्तदैव सञ्जातं, भिक्षादानं वा ३४, मृतकपूजना ३५, 'ध्यापना' अग्निसंस्कारः ३६, भगवदादिदग्धस्थानेषु स्तूपाः ३७, शब्दश्च—रुदितशब्दः ३८, 'च्छेलापनक'मिति देशीवचनं, उत्कृष्टिबालक्रीडापनसेण्टिताद्यर्थवाचकं ३९, पृच्छनं सा इङ्गिणिकादिलक्षणा ४०, इति द्वारसङ्क्षेपार्थः ॥ २०६ ॥

अवयवार्थं प्रतिद्वारं भाष्यकृद्वक्ष्यति, अत्राद्यद्वाराभिधित्सयाह मूलभाष्यकृत्—

आसी अ कंदहारा मूलाहारा य पत्तहारा य । पुप्फफलभोइणोऽवि अ, जइआ किर कुलगरो उसमो ॥५॥ (मू. भा.)

यदा 'किले'ति परोक्षाप्तागमवादसंसूचकः, ऋषभः कुलकरो—राजा आसीत् तदा ते मिथुनकरा आसन्, कन्दाहारा मूलाहाराश्च पत्राहाराश्च पुष्पफलभोजिनोऽपि च ॥ ५ ॥

आसी अ इक्खुभोई, इक्खागा तेण खत्तिआ हुंति । सणसत्तरसं धण्णं, आमं ओमं च भुंजीआ ॥ ६ ॥ (मू. भा.)

तदा क्षत्रिया येन कारणेन बाहुल्येनेक्षुभोजिन आसीत् तेन कारणेन ते क्षत्रिया इक्ष्वाकवो लोके ख्याताः । सणः

सप्तदशो यस्य तत् सणसप्तदशं धान्यं–शाल्यादि आमम्–अपक्वं ओमं–न्यूनं 'भुंजीया' भुक्तवन्तः ॥ ६ ॥

ओमंपाहारंता अजीरमाणंमि ते जिणमुविंति । हत्थेहिं घंसिऊणं, आहारेहत्ति ते भणिआ ॥ ७ ॥ (मू. भा.)

अवममपि–स्तोकमप्याहारयन्तोऽजीर्यत्याहारे ते जिनमुपयान्ति, भगवता च हस्ताभ्यां घृष्ट्वाऽऽहारयध्वमिति भणिताः सन्तः ॥ ७ ॥ किमित्याह—

आसी अ पाणिघंसी, तिम्मिअतंदुलपवालपुडभोई । हत्थतलपुडाहारा, जइआ किर कुलकरो उसहो ॥८॥ (मू. भा.)

आसंश्च ते भगवदुपदेशात् पाणिभ्यां घर्षितुं शीलं येषां ते पाणिघर्षिणः, ता एवौषध्यो हस्ताभ्यां घृष्ट्वा त्वचं चापनीय भुक्तवन्त इत्यर्थः, कियत्यपि काले गते ता अपि न जीर्णवन्तः, पुनरपि भगवन्तमापृच्छ्य तदुपदेशात् तीमितान् तन्दुलान् प्रवालपुटे पत्रपुटे मुहूर्त्तं धृत्वा भुञ्जत इत्येवंशीलास्तीमिततन्दुलप्रवालपुटभोजिनः, कियता कालेन ता अपि न जीर्यन्ति इति भूयोऽपि घृष्ट्वा तदुपदेशेन हस्ततलपुटेषु कियन्तमपि कालमौषधीः स्थापयित्वा भुक्तवन्त इत्यर्थः । कालदोषत औषध्यः कठिनतरभावमापन्ना न जीर्यन्ति ततो भगवदुपदेशेन कक्षासु स्वेदयित्वा भुक्तवन्तः, यदा किल कुलकरऋषभः, पूर्ववत् पुनरभिहितप्रकारद्व्यादिसंयोगैराहारितवन्तः, तद्यथा–पाणिभ्यां घृष्ट्वा पत्रपुटेषु च मुहूर्त्तं तीमित्वा तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु च मुहूर्त्तं धृत्वा पुनर्हस्ताभ्यां घृष्ट्वा कक्षासु च स्वेदं कृत्वा तथा तीमित्वा हस्तपुटेषु च मुहूर्त्तं धृत्वेत्यादिभङ्गकयोजनां, केचित् प्रदर्शयन्ति घृष्ट्वापदं विहाय, तच्चायुक्तं, त्वगपनयनमन्तरेण तीमितस्यापि हस्तपुटधृतस्य सौकुमार्यत्वानुपपत्तेः, सूक्ष्मत्वग्भावाद्वाऽदोषः इति द्विकसंयोगाः, त्रिकसंयोगजभङ्गाः पुनर्हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु च मुहूर्त्तं

धृत्वेत्यादि, चतुःसंयोगजभङ्गः पुनरेवं–त्रिकं पूर्ववत् कक्षासु च स्वेदयित्वा इति ॥ ८ ॥ अमुमेवार्थमुपसंहरन्नाह—

घंसेऊणं तिम्मण घंसणतिम्मणपवालपुडभोई । घंसणतिम्मपवाले, हत्थउडे कक्खसेए य ॥ ९ ॥ ( मू. भा. )

घृष्ट्वा भुक्तवन्तः, तीमनं प्रवालपुटे कृत्वा भुक्तवन्त इत्यनेन प्रागभिहितप्रत्येकभङ्गकाक्षेपः कृतः, घृष्टप्रवालपुटतीमित-भोजिन इत्यनेन द्विकसंयोगाक्षेपः, घृष्ट्वा तीमनं 'प्रवाले' इति प्रवाले तीमित्वा हस्तपुटे कियन्तमपि कालं धृत्वा भुक्तवन्त इति वाक्यशेषः, अनेन त्रिकसंयोगभङ्गकाक्षेपः, तथा कक्षास्वेदे च कृते सति भुक्तवन्त इत्यनेनानन्तराभिहितत्रययुक्तेन चतुर्भङ्गक-योजनाक्षेपः कृतः ॥ ९ ॥ अत्रान्तरे—

अगणिस्स य उट्ठाणं, दुमघंसा दट्ठु भीअपरिकहणं । पासेसुं परिछिंदेह, गिण्हह पागं च तो कुणइ ॥ १० ॥ (मू. भा.)

एकान्तस्निग्धरूक्षकालयोर्वह्न्युत्पादो न भवति, तदा च सम्यग् रूक्षः, अस्मिन् प्रस्तावे अग्नेश्चोत्थानं संवृत्तं वने द्रुमाणां परस्परं सङ्घर्षात्, तं च प्रवृद्धज्वालावलीसनाथं भूप्राप्तं तृणादि दहन्तं दृष्ट्वाऽपूर्वरत्नबुद्ध्या ग्रहणं प्रति प्रवृत्तवन्तः, दह्यमानास्तु-भीताः परिकथनं–ऋषभाय कृतवन्तः, [ भीतानां ] परिकथनं भीतकथनं, भीत्या वा परिकथनं भीतिपरिकथनं पाठान्तरं, भगवानाह–अश्वेषु आरुह्य यावत्यग्निः प्रज्वलति तावन्तं प्रदेशं विहाय तस्य सर्वासु दिक्षु पार्श्वेषु तृणादिकं सर्वं परिच्छिन्त न प्रसरति यथा, अग्निं गृह्णीत पाकं कुरुत ॥ १० ॥ एतदेवाह—

पक्खेव डहणमोसहि, कहणं निग्गमण हत्थिसीसंमि । पयणारंभपवित्ती, ताहे कासी अ ते मणुआ ॥ ११ ॥ (मू. भा.)

तथा कृत्वा अग्निं गृहीत्वा तत्रौषधीनां प्रक्षेपं कृतवन्तः, ततो दहनमौषधीनामभूत्, ततो भगवते हस्तिस्कन्धारूढाय

विनिर्गच्छते कथनं–एष एव सर्वं भक्षयति नास्माकं किमपि दत्ते, प्रभुर्हस्तिशिरसि कुम्भे मृत्पिण्डस्य पत्रकाकारणं निदर्शनं (निर्दिश्य) ईदृशानि कृत्वाऽग्नौ पक्त्वा एतेषु पाकं निवर्त्तयध्वमित्युक्तवान्। ततस्ते मिथुनकास्तथारूपाणि कृत्वा पचनारम्भ-प्रवृत्तिमकार्षुः। इत्थं प्रथमं कुम्भकारशिल्पं समुत्पन्नम् ॥ ११ ॥

मिंठेण हत्थिपिंडे मट्टियपिंडं गहाय कुडगं च। निवत्तेसि अ तइआ जिणोवइट्ठेण मग्गेण ॥ १ ॥ (प्र.)
निव्वत्तिए समाणे भण्णई राया तओ बहुजणस्स। एवइआ भे कुव्वह पयट्टिअं पढमसिप्पं तु ॥ २ ॥ (प्र.)

अमू अन्ये अव्याख्याते च

उक्तमाहारद्वारं, अथ शिल्पद्वारार्थमाह—

पंचेव य सिप्पाइं, घड १ लोहे २ चित्त ३ णंत ४ कासवए ५। इक्किक्कस्स य इत्तो वीसं वीसं भवे भेया ॥ २०७ ॥

पञ्चैव मूलभूतानि शिल्पानि, तद्यथा–घट इति कुम्भकारशिल्पं १, लोहकारशिल्पं २ चित्रकारशिल्पं ३ 'णंत'मिति देशीवचनं वस्त्रवाचकं, अनेन वस्त्रशिल्पं ४ काश्यप इति–नापितशिल्पं ५। इयमत्र भावना वस्त्रवृक्षेषु परिहीयमानेषु प्रभुणा वस्त्रशिल्पमुत्पादितं, गृहाकारद्रुषु हीनेषु लोहकारशिल्पं, प्राणिनां कालदोषान्नखरोमाण्यपि वर्द्धितुं प्रवृत्तानि तन्निमित्तं नापितशिल्पं, गृहाणि चित्ररहितानि विशोभनानीति चित्रकारशिल्पम्। पञ्चभ्य एकैकस्य विंशतिः विंशतिः भेदा अभूवन् ॥ २०७ ॥ अथ शेषद्वारार्थप्रतिपादनायैकोनविंशतिगाथा भाष्यकृदाह—

कम्मं किसिवाणिजाइ ३ मामणा जा परिग्गहे ममया ४। पुव्विं देवेहिं कया, विभूसणा मंडणा गुरुणो ५ ॥ १२ ॥

कर्म-कृषिवाणिज्यादि ३, मामणा ममीकारार्थे देशीवचनमेव, या परिग्रहे ममता सा मामणा, सा च तत्काल एव प्रवृत्तेति ४, विभूषणा-मण्डना, सा च पूर्वं देवेन्द्रैर्गुरोर्भगवतः कृता, ततो लोकेऽपि प्रवृत्ता ॥ १२ ॥

लेहं लिवीविहाणं, जिणेण बंभीइ दाहिणकरेणं ६ । गणिअं संखाणं, सुंदरीइ वामेण उवइट्ठं ॥ १३ ॥ (मू. भा.)

लेखनं लेखः, सूत्रे नपुंसकता प्राकृतत्वात्, लिपिविधानं जिनेन ब्राह्म्या दक्षिणकरेण प्रदर्शितं अत एव तदादित आरभ्य वाच्यते ६, गणितं एकद्वित्र्यादिसङ्ख्यानं तच्च सुन्दर्या वामकरणोपदिष्टं अतस्तदारभ्य गण्यते ॥ १३ ॥

भरहस्स रूवकम्मं ८, नराइलक्खणमहोइअं बलिणो ९ । माणुम्माणवमाणप्पमाणगणिमाईवत्थूणं ॥ १४ ॥

रूपं काष्ठकर्म पुस्तककर्मेत्येवमादि तच्च भरतस्योपदिष्टं ८, नरादिलक्षणं-पुरुषलक्षणादि, तच्चाद्या (तच्च काष्ठकर्माद्य) नन्तरं बाहुबलिने उदितं-कथितं ९, वस्तूनां मानोन्मानावमानप्रमाणगणितानि, मानं द्विधा धान्यमानं रसमानं च, तत्र धान्यमानं सेतिकादि, मेयस्य रसस्य कर्षादि, उन्मानं गण्यस्य पूगीफलादेः, अत्र पुञ्जे दश सहस्राः सन्तीत्यादि, उप (अव) मानं तोल्यस्य इयन्ति पलानि हस्तादि वा, प्रमाणं परिच्छेद इयद्वर्णमिदं स्वर्णं इयत्पानीयमिदं रत्नं, गणितमेकादि प्रागुक्तं, एवं रूपं पञ्चप्रकारमपि भगवति राज्यमनुशासति भगवदुपदेशेन प्रवृत्तं ॥ १४ ॥ पोतद्वारमाह—

मणिमाई दोराइसु, पोआ तह सागरंमि वहणाइं ११ । ववहारो लेहवणं, कज्जपरिच्छेदणत्थं वा ॥ १५ ॥ (मू. भा.)

१ मलयगिरिवृत्तौ तु रसमानादि एवं निरूपितं-रसमानं 'चउसट्ठिया बत्तिसिया सोलसिया' इत्यादि, उन्मानं येनोन्मीयते, तच्च तुलागतं कर्षः पलमित्यादि, अवमानं येनावमीयते, तद्यथा-हस्तो दण्डो युगमित्यादि, प्रमाणं प्रतिमानं, तच्च सुवर्णपरिमाणहेतुर्गुञ्जादि ।

ये मणिकादय आदिशब्दान्मुक्ताफलादयः, दवरकादिषु लोकेन प्रोताः क्रियन्ते तदेतत्प्रकर्षेण उतनं प्रोतं तदा प्रवृत्तं, अथवा पोता नाम सागरे वहनानि-प्रवहणानि, तान्यपि तदैव प्रवृत्तानि ११, व्यवहारो नाम विसंवादे सति राजकुलकरणे गत्वा निजनिजभाषालेखापनलक्षणः कार्यपरिच्छेदार्थं वा पणमुक्तिलक्षणः स उभयरूपोऽपि तदा प्रवृत्तः १२ ॥ १५ ॥

णीई हकाराई, सत्तविहा अहव सामभेआई । जुद्धाइ बाहुजुद्धाइआइ वट्टाइआणं वा ॥ १६ ॥ (भाष्यम्)

कालदोषतो लोकानां प्रायः स्वस्वभावापगमात् सप्तविधा हकारादिका नीतिरभूत्, हकारः १ मकारः २ धिकारः ३ परिभाषणा ४ मण्डलीवन्धः ५ चारकप्रक्षेपः ६ महापराधे च्छविच्छेदः ७, एता विमलवाहनादारभ्य भरतकालपर्यन्तं कृत्वा यथा-योगं प्रवृत्ताः, अथवा सामभेदादिका चतुर्द्धा-सामः १ भेदः २ दण्डः ३ उपप्रदानं ४, एषा चतुर्विधापि भगवत्काले समुत्पन्ना १३, युद्धानि यदि वा वर्त्तिकादीनामुभयान्यपि तदा प्रवृत्तानि १४ ॥ १६ ॥

ईसत्थं धणुवेओ उवासणा मंसुकम्माईआ । गुरुरायाईणं वा, उवासणा पज्जुवासणया ॥ १७ ॥ (भाष्यम्)

इषुशास्त्रं धनुर्वेदः, स च तदैव राजधर्म्मे [सति] प्रावर्त्तत १५, उपासना श्मश्रुकर्त्तनादि नापितकर्म, तदपि तदैव जातं, यदिवा उपासना गुरुराजादीनां पर्युपासना, सापि तदैव प्रवृत्ता १६ ॥ १७ ॥

रोगहरणं तिगिच्छा अत्थागमसत्थमत्थसत्थंति । निअलाइजमो बंधो, घाओ दंडाइताडणया ॥ १८ ॥ (भाष्यम्)

चिकित्सा रोगापहारक्रिया १७, अर्थागमनिमित्तं शास्त्रमर्थशास्त्रमिति १८, वन्धो-निगडादिभिर्यमः-संयमनं १९, घातो दण्डादिभिस्ताडना ॥ २० ॥

मारणया जीववहो, जण्णा नागाइआण पूआओ। इंदाइमहा पायं, पइनिअया ऊसवा हुंति ॥ १९ ॥(भाष्यम्)

मारणं जीववधो भरतकाले समुत्पन्नं २१, यज्ञाः—नागादीनां पूजाः २२, उत्सवाः प्रतिनियता वर्षमध्ये प्रतिनियतदिवसभाविन इन्द्र(न्द्रादि)महाः, पूजास्त्वनियतकालभाविन्य इति पूजोत्सवानां प्रति विशेषः, एतेऽपि तत्काले प्रवृत्ताः २३ ॥ १९ ॥

समवाओ गोट्ठीणं, गामाईणं च संपसारो वा। तह मंगलाइं सत्थिअसुवण्णसिद्धत्थयाईणि ॥२०॥ (भाष्यम्)

समवायो गोष्ठिकानां मेलापकः, यद्वा ग्रामादीनामादिशब्दात् खेटकर्वटनगरादिपरिग्रहः, सम्—एकीभावेन किमपि प्रयोजनमुद्दिश्य एकत्र मीलनं सम्प्रसारः—समवायः, ग्रामादिजनानां किञ्चित्प्रयोजनमुद्दिश्य यदेकत्र मीलनं [स वा]समवायः २४, तथा मङ्गलानि स्वस्तिकसुवर्णसिद्धार्थकादीनि तानि पूर्वं देवैर्भगवतो मङ्गलबुद्ध्या प्रयुक्तानि, ततो लोके प्रवृत्तानि २५ ॥ २० ॥

पुव्विं कयाइ पहुणो, सुरेहि रक्खाइ कोउगाइं च। तह वत्थगंधमल्लालंकारा केसभूसाई ॥ २१ ॥ (भाष्यम्)

पूर्वं प्रभोः सूरैः कृतानि कौतुकानि—रक्षादीनि २६, तथा वस्त्रं—चीनांशुकादि २७, गन्धः—कुष्ठपुटादि २८, माल्यं—पुष्पदाम २९, अलङ्कारः—केशभूषादि ३० ॥ २० ॥

तं दट्ठूण पवत्तोऽलंकारेउं जणोऽवि सेसोवि। विहिणा चूलाकम्मं, बालाणं चोलया नाम ३१ ॥ २२ ॥(भाष्यम्)

तं चालङ्कारं भगवतो देवैः कृतं दृष्ट्वा अवशेषोऽपि जनः स्वं स्वमलङ्कर्तुं प्रवृत्तः, विधिना शुभनक्षत्रतिथिमुहूर्त्तादौ बालानां चूडाकर्म्म, तदपि तदा प्रवृत्तं ३१ ॥ २२ ॥

उवणयणं तु कलाणं, गुरुमूले साहुणो तओ धम्मं। घित्तुं हवंति सड्ढा, केई दिक्खं पवज्जंति ३२ ॥ २३ ॥ (भाष्यम्)

उपनयनं तेषामेव बालानां कलाग्रहणाय गुरोर्मूलं समीपे नयनं, धर्मश्रवणनिमित्तं वा साधोः सकाशं नयनमुपनयनं, तस्माच्च साधोर्धर्म्मं गृहीत्वा केचित् श्राद्धा भवन्ति अपरे लघुकर्म्माणो दीक्षां प्रपद्यन्ते, एतच्चोभयमपि तदा प्रवृत्तं ३२ ॥२३॥

दट्ठुं कयं विवाहं, जिणस्स लोगोऽवि काउमारद्धो ३३। गुरुदत्तिआ य कण्णा, परिणिज्जंते तओ पायं ॥ २४ ॥(भाष्यम्)

जिनस्य विवाहं कृतं दृष्ट्वा लोकोऽपि स्वापत्यानां विवाहं कर्तुमारब्धवान् ३३, भगवता युगलधर्मव्यवच्छेदाय भरतेन सह जाता ब्राह्मी बाहुबलिने दत्ता, बाहुबलिना [ सह ] जाता सुन्दरी च भरताय इति दृष्ट्वा तदारभ्य प्रायो लोके कन्यापित्रा दत्ता सती परिणीयते ॥ २४ ॥

दत्तिव्व दाणमुसभं, दिंतं दट्ठूं जणंमिवि पवत्तं। जिणभिक्खादाणंपि हु, दट्ठूं भिक्खा पवत्ताओ ३४ ॥२५॥ (भा०)

अथवा दत्तिर्दानं, तच्च भगवन्तं सांवत्सरिकदानं ददतं दृष्ट्वा लोकेऽपि प्रवृत्तं, यदि वा दत्तिर्भिक्षादानं, तच्च जिनस्य प्रपौत्रेण कृतं दृष्ट्वा लोकेऽपि भिक्षा प्रवृत्ता ३४ ॥ २५ ॥

मडयं मयस्स देहो, तं मरुदेवीइ पढमसिद्धुत्ति। देवेहि पुरा महिअं, झावणया अग्गिसक्कारो ॥ २६ ॥ ( भाष्यम् )

मृतकं मृतस्य देहः, तच्च मृतकं मरुदेव्याः प्रथमसिद्ध इतिकृत्वा देवैः पुरा महितं–पूजितं ३५, ध्मापनाऽग्निसंस्कारः ॥ २६ ॥

सो जिणदेहाईणं, देवेहि कओ ३६ चिआसु थूभाई ३७। सद्दो य रुण्णसद्दो, लोगोऽवि तओ तहा पगओ ॥२७॥ (भा०)

स च भगवतो निर्वाणप्राप्तस्यान्येषां च साधूनां प्रथमं त्रिदशैः कृतः ३६, भगवद्देहादिदग्धस्थानेषु भरतेन स्तूपाः

कृताः, एतल्लोकेऽपि तदारभ्य प्रवृत्तं ३७, शब्दश्च रुदितशब्दः, स च भगवत्यपवर्गं गते भरतदुःखमसाधारणमवबुध्य तदपसरणाय शक्रेण कृतः, ततः लोकोऽपि तथा—शक्रवत् रुदितशब्दं प्रकृतः—कर्तुमारब्धवान् ३८ ॥ २७ ॥

छेलावणमुक्किट्ठाइ, बालकीलावणं व सेंटाई ३९। इंखिणिआइ रुअं वा, पुच्छा पुण किं कहं कज्जं ? ॥ २८ ॥ (भाष्यम्)

च्छेलापनकं देशीवचनं, तच्चानेकार्थं, उत्कृष्टं(ष्टिः) नाम हर्षवशादुत्कर्षेण नदनं, आदिशब्दात् सिंहनादादिपरिग्रहः; यदिवा बालक्रीडापनं अथवा सेंटि(शेण्टि)तादि ३९, प्रच्छनं पृच्छा सा इङ्खिणिकादिरुतलक्षणा, इङ्खिणिका हि कर्णमूले घण्टिकां चालयन्ति, ततो यक्षाः खल्वागत्य तासां कर्णेषु किमपि प्रष्टुर्विवक्षितं कथयन्ति, आदिशब्दादिङ्खिणिकासदृशपरिग्रहः, अथवा किं कार्यं ? कथं वा कार्यमित्येवंलक्षणा या लोके प्रसिद्धा पृच्छा सा ॥ २८ ॥

अहव निमित्ताईणं, सुहसइआइ सुहदुक्खपुच्छा वा ४०। इच्चेवमाइ पाएणुप्पन्नं उसभकालंमि ॥ २९ ॥ (भाष्यम्)

अथवा निमित्तादीनामादिशब्दात् स्वप्नफलाफलादिपरिग्रहः, अथवा सुखशयितादिरूपा सुखदुःखपृच्छा इत्येवमादि प्रायः सर्वमुत्पन्नमृषभकाले, उपलक्षणमेतत्, किञ्चिद्भरतकुलकरकाले च ४० ॥ २९ ॥ तथा चाह—

किंचिच्च (त्थ) भरहकाले, कुलगरकालेऽवि किंचि उप्पन्नं। पहुणा य देसिआइं, सव्वकलासिप्पकम्माइं ॥३०॥ (भा०)

किञ्चिन्निगडादिभिर्घात इत्यादि भरतकाले उत्पन्नं, किञ्चित्—हक्कारादिकं कुलकरकाले उत्पन्नं, प्रभुणा तु देशितानि सर्वकलाशिल्पकर्म्माणि ॥ ३० ॥

उसभचरिआहिगारे, सव्वेसिं जिणवराण सामण्णं। संबोहणाइ वुत्तुं, वुच्छं पत्तेअमुसभस्स ॥ २०८ ॥

इह वक्तुमिदानीमधिकृतं भगवतश्चरित्रं, तत्र ऋषभचरित्राधिकारे वक्ष्यमाणं सम्बोधनादि सर्वेषामपि जिनवराणां सामान्यं, अतस्तथैव सामान्येनोक्त्वा पश्चात्प्रत्येकं ऋषभस्य, शेषं चरित्रं वक्ष्ये ॥ २०८ ॥ अथ सम्बोधनादिद्वारप्रतिपादनार्थं द्वारश्लोकत्रयमाह—

संबोहण परिचाए, पत्तेअं उवहिंमि अ । अन्नलिंगे कुलिंगे अ, गामायार परीसहे ॥ २०९ ॥
जीवोवलंभ सुयलंभे, पचक्खाणे अ संजमे । छउमत्थ तवोकम्मे उप्पाया नाण संगहे ॥ २१० ॥
तित्थं गणो गणहरो, धम्मोवायस्स देसगा । परिआअ अंतकिरिया, कस्स केण तवेण वा ? ॥ २११ ॥

सर्वेऽपि तीर्थकृतः स्वयंबुद्धास्तथापि कल्प इतिकृत्वा लोकान्तिकदेवाः सम्बोधनं कुर्वन्ति, ततः सम्बोधनं १, परित्याग इति परित्यागविधिर्वक्तव्यः, प्रत्येकमिति कः कियत्परिवारो निष्क्रान्तः ३, उपधिविषयो विधिर्वाच्यः, कः केनोपधिरासेवितः ? को वा विनेयानामनुज्ञातः ४, अन्यलिङ्गं–साधुलिङ्गं, [कुलिङ्गं–] तापसादिलिङ्गं, तत्र ते नाऽन्यलिङ्गे निष्क्रान्ता नापि कुलिङ्गे किन्तु तीर्थकरलिङ्ग एव ५, ग्राम्याचाराः–विषयाः, परीषहाः–क्षुदादयः, तयोर्विधिर्वाच्यः, कुमारप्रव्रजितैर्विषया न भुक्ताः शेषैर्भुक्ताः ६, परीषहाः सर्वैर्निर्जिता एवेति ७ ॥ २०९ ॥ जीव इति उपलक्षणं, सर्वैरेव तीर्थकृद्भिर्नवजीवादिपदार्था उपलब्धाः ८, श्रुतलाभः पूर्वभवे प्रथमस्य द्वादशाङ्गान्यासन् शेषाणामेकादश, प्रथमान्तस्याप्येकारान्तता सूत्रे प्राकृतत्वात् ९, प्रत्याख्यानं च पञ्च महाव्रतरूपमाद्यचरमयोः, मध्यमानां तु चतुर्महाव्रतरूपं १०, संयमोऽप्याद्यचरमयोः सामायिकच्छेदोपस्थानाभ्यां द्विभेदः, मध्यमानां सामायिकरूप एव, सप्तदशप्रकारो वा सर्वेषां, ११, कः कियन्तं कालं छद्मस्थ आसीत् ? १२, तपःकर्म किं

कस्येति वाच्यं १३, ज्ञानोत्पादो वाच्यः यस्य यस्मिन्नहनि केवलमुत्पन्नमिति १४, सङ्ग्रहः कस्य कियान् शिष्यादिः १५ ॥२१०॥ कस्य कदा तीर्थमुत्पन्नं, तीर्थ–सङ्घः १६, गणः–एकवाचनाचारक्रियास्थानां समुदायः, ते कस्य कियन्तः ? १७, गणधराः–सूत्रकर्त्तारस्ते कस्य कियन्तः १८ ?, तथा धर्म्मोपायस्य देशका वक्तव्याः, तत्र दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्म्मः तस्योपायो–द्वादशाङ्गं प्रवचनं तस्य देशकास्ते च सर्वतीर्थकृतां गणधरा एव, अथवा यस्य यावन्तश्चतुर्दशपूर्वविदः १९, कः कस्य प्रव्रज्यादिपर्यायः २०, अन्ते क्रिया [ अन्तक्रिया ] सा च निर्वाणलक्षणा, सा कस्य केन तपसा सञ्जाता, वाशब्दात्कस्मिन्वा सञ्जाता कियत्परिवृतस्य चेति वक्तव्यम् ॥ २१ ॥ २११ ॥ आद्यद्वारार्थाभिधित्सयाह—

सव्वेऽवि सयंबुद्धा, लोगंतिअवोहिआ य जीएणं १ । सव्वेसिं परिचाओ, संवच्छरिअं महादाणं ॥ २१२ ॥

सर्व एव तीर्थकृतः, स्वयंवुद्धा वर्त्तन्ते, गर्भस्थानामपि ज्ञानत्रयोपेतत्वात्, तथापि लोकान्तिकाः–सारस्वतादिदेवास्तद्बोधिताश्च जीतमिति–कल्प इतिकृत्वा, तथा च स्थितिरियं तेषां यदुत स्वयंवुद्धानपि भगवतो वोधयन्ति । परित्यागद्वारमाह–सर्वेषां परित्यागः सांवत्सरिकं महादानं–वक्ष्यमाणलक्षणम् ॥ २१२ ॥

रज्जाइचाओऽवि य २, पत्तेअं को व कत्तिअसमग्गो ३ । को कस्सुवही ?, को वाऽणुण्णाओ सीसाणं ४ ॥ २१३ ॥



राज्यादित्यागोऽपि च परित्यागः २, प्रत्येकद्वारमाह–प्रत्येकमिति ३, एककः को वा कियत्समग्र [ निष्क्रान्त ] इति वाच्यं, कः कस्योपधिः ?, को वा केनानुज्ञातः शिष्याणामुपधिरिति ४ ॥ २१३ ॥

इदं गाथाद्वयं समासव्याख्यारूपं, न च समासेनोक्तं मन्दमतयोऽवबुध्यन्ते, ततः प्रपञ्चेन विवरीषुराद्यद्वारमाह—




सारस्सयमाइच्चा, वण्ही वरुणा य गद्दतोया य।
तुसिआ अव्वाबाहा, अग्गिच्चा चेव रिट्ठा य ॥ २१४ ॥

सारस्वताः १ मकारोऽलाक्षणिकः, आदित्याः २ वह्नयः ३ वरुणाः ४ गर्दतोयाः ५, चः समुच्चये, तुषिताः ६, अव्याबाधाः ७ अग्नयश्चैव संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते ८, रिष्ठाश्चेति 'तात्स्थ्यात्तद्व्यपदेश' इति-न्यायात् रिष्ठविमानवासिनो देवा अपि रिष्ठाः ९, ब्रह्मलोकस्थरिष्टप्रस्तटा-धाराष्टकृष्णराजिमध्यस्थविमाननवकनिवासिन इत्यर्थः ॥२१४॥ स्थापना—

एए देवनिकाया भयवं, बोहिंति जिणवरिंदं तु ।
सव्वजगज्जीवहिअं, भयवं! तित्थं पवत्तेहिं ॥ २१५ ॥

एते देवनिकायाः सारस्वतादयः, भगवन्तं बोधयन्ति जिनवरेन्द्रं तु, सर्वे च ते जगज्जीवाश्च सर्वजगज्जीवाः तेभ्यो हितं भगवन्! तीर्थं प्रवर्त्तयस्व ॥ २१५ ॥ परित्यागद्वारमाह—

आठ कृष्णराजीना नाम– १ कृष्णराजी २ मेघराजी ३ मघा ४ माघवती ५ वातपरिघ ६ वातप्रतिक्षोभ ७ देवपरिघ ८ देवप्रतिक्षोभ, नव लोकान्तिक-देवोना विमानोना नाम–१ अर्चि २ अर्चिमाली ३ वैरोचन ४ प्रभंकर ५ चंद्राभ ६ सूर्याभ ७ शुक्राभ ८ सुप्रतिष्ठाभ ९ रिष्टाभ, नव लोकान्तिकदेवोना नाम–१ सारस्वत २ आदित्य ३ वह्नि ४ वरुण ५ गर्दतोय ६ तुषित ७ अव्याबाध ८ आग्नेय ९ रिष्ट।

संवच्छरेण होही, अभिणिक्खमणं तु जिणवरिंदाणं। तो अत्थसंपयाणं, पवत्तए पुव्वसूरंमि ॥ २१६ ॥

संवत्सरेण जिनवरेन्द्राणामभिनिष्क्रमणं भविष्यति, ततोऽर्थदानं प्रवर्त्तते; अर्थस्य सम्यक्-तीर्थप्रभावनबुद्ध्यानुकम्पा-बुद्ध्या च, न तु कीर्त्तिबुद्ध्या, प्रदानं जनेभ्यः प्रवर्त्तते, पूर्वसूर्ये-पूर्वाह्णे ॥ २१६ ॥ कियत्प्रतिदिवसं दीयत इत्याह—

एगा हिरण्णकोडी, अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईअं, दिज्जइ जा पायरासाओ ॥ २१७ ॥

एका हिरण्यकोटी अष्टौ चान्यूनानि-परिपूर्णानि शतसहस्राणि-लक्षाणि, सूर्योदय आदौ यस्य दानस्य तत्सूर्योदयादि, क्रियाविशषणं, सूर्योदयादारभ्य दीयत इति भावः, प्रातरशनं प्रातराशः तस्मात्तमभिव्याप्य, प्रातर्भोजनकालं यावदिति ॥ २१७ ॥ यथा दीयते तथा चाह—

सिंघाडगतिगचउक्कचच्चरचउमुहमहपहेसुं। दारेसु पुरवराणं, रत्थामुहमज्झयारेसुं ॥ २१८ ॥

वरवरिआ घोसिज्जइ, किमिच्छअं दिज्जए बहुविहीअं। सुरअसुरदेवदाणवनरिंदमहिआण निक्खमणे ॥२१९॥

शृङ्गाटकं शृङ्गाटकाकृतिपथयुक्तं त्रिकोणं स्थानं वा△, त्रिकं यत्र रथ्यात्रयं मिलति ⊥, चतुष्पथसमाहारः ×, चत्वरं बहुरथ्यापातस्थानं✳, चतुर्मुखं यस्माच्चतसृष्वपि दिक्षु पन्थानो निस्सरन्ति ╬, महापथो राजमार्गः, शेषः सामान्यः पन्थाः पथः एतेषां द्वन्द्वस्तेषु, पुरवराणां द्वारेषु प्रतोलिष्वित्यर्थः, रथ्यानां मुखानि-प्रवेशा मध्यकारा-मध्या एव कारशब्दस्य स्वार्थिकत्वा-द्रथ्यामुखमध्यकारास्तेषु ॥ २१८ ॥ किमित्याह-वरं याचध्वं वरं याचध्वं इत्येवं घोषणा समयपरिभाषया वरवरिकोच्यते, सा शृङ्गाटिकादिषु घोष्यते, कः किमिच्छति-यो यदिच्छति तस्य तद्दानं दीयते इति समयसंज्ञया किमिच्छकमुच्यते, बहवो

विधयः—रत्नस्वर्णादिदानप्रकारा यत्र तद्बहुविधिकं, सुरैर्वैमानिकैरसुरैर्भवनपतिभिः, देवग्रहणेन ज्योतिष्कैर्दानवग्रहणेन व्यन्तरैः, नरेन्द्रेति इन्द्रशब्दः प्रत्येकमभिसम्बध्यते, नरेन्द्रैश्चक्रवर्त्तिप्रभृतिभिर्महितानां भगवतां निष्क्रमणे ॥ २१९॥ अथैकैकेन तीर्थकृता कियद्द्रव्यं दत्तं संवत्सरेणेत्याह—

तिण्णेव य कोडिसया, अट्ठासीइं च हुंति कोडीओ। असिइं च सयसहस्सा, एअं संवच्छरे दिण्णं ॥२२०॥

त्रीण्येव कोटिशतानि अष्टाशीतिश्च भवन्ति कोट्यः अशीतिश्च शतसहस्राणि ३८८८०००००० एतत्संवत्सरे दत्तमेकैकेन तीर्थकृता, एतच्च प्रतिदिनं देयं त्रिभिः षष्ठ्यधिकैर्वासरशतैर्गुणितं यथावर्णितं भवति, इति प्रथमवरवरिकावचूर्णिः ॥ २२० ॥

सम्प्रति अधिकृतद्वारार्थानुपात्येव वस्तु प्रतिपादयन्नाह—

वीरं अरिट्ठनेमिं, पासं मल्लिं च वासुपुज्जं च। एए मुत्तूण जिणे, अवसेसा आसि रायाणो ॥ २२१ ॥

एतान् पञ्च जिनान् मुक्त्वा अवशेषा आसन् राजानः ॥ २२१ ॥

रायकुलेसुऽवि जाया, विसुद्धवंसेसु खत्तिअकुलेसुं। न य इत्थिआभिसेआ, कुमारवासंमि पव्वइआ ॥ २२२ ॥

एते हि महावीरप्रभृतयः पञ्च तीर्थकृतो राजकुलेष्वपि जाता विशुद्धवंशेषु क्षत्रियकुलेषु, राजकुलं हि किञ्चिदक्षत्रियमपि स्यादतः क्षत्रियकुलेष्वित्याह—न चेप्सिता (च स्त्रीपाणिग्रहणराज्या) भिषेकाः किन्तु कुमारवास एव प्रव्रजिताः ॥ २२२ ॥

संती कुंथू अ अरो, अरिहंता चेव चक्कवट्टी अ। अवसेसा तित्थयरा, मंडलिआ आसि रायाणो ॥ २२३ ॥

ये च राजानस्तेषु शान्तिः कुन्थुश्चार एते त्रयोऽर्हन्तश्चक्रवर्त्तिनश्चाभवन्, अवशेषाः पुनस्तीर्थकरा माण्डलिका राजान

वार्षिकदान-
प्रमाणं
नि० गा०
२२०
कुमाराद्य-
वस्थायां
प्रव्रज्या
नि० गा०
२२१-
२२३

आसन्, स्वस्वमण्डलमात्राधिपतय इत्यर्थः ॥ २२३ ॥ गतं परित्यागद्वारं, अथ प्रत्येकद्वारमाह—

एगो भगवं वीरो, पासो मल्ली अ तिहि तिहि सएहिं । भयवं च वासुपुज्जो, छहिं पुरिससएहि निक्खंतो ॥ २२४॥

उग्गाणं भोगाणं, रायण्णाणं च खत्तिआणं च । चउहि सहस्सेहुसभो, सेसा उ सहस्सपरिवारा ॥२२५॥

एको भगवान् वीरः प्रव्रजितः, पार्श्वो मल्लिश्च त्रिभिः त्रिभिः शतैः, भगवांश्च वासुपूज्यः षड्भिः पुरुषशतैः सह निष्क्रान्तः ॥ २२४ ॥ उग्राणां भोगानां राज्या( जन्या )नां च क्षत्रियाणां च, सर्वसङ्ख्यया चतुर्भिः सहस्रैः सह ऋषभो निष्क्रान्तः, शेषास्त्वजितस्वाम्यादयः सहस्रपरिवाराः, एतेषां [ उग्रादीनां च ] विशेषः प्रागेवोपदर्शितः, ॥ २२५ ॥ प्रसङ्गतोऽत्रैव द्वारे ये यस्मिन् वयसि निष्क्रान्ता इत्येतदभिधित्सुराह—

वीरो अरिट्ठनेमी, पासो मल्ली अ वासुपुज्जो अ । पढमवए पव्वइआ, सेसा पुण पच्छिमवयंमि ॥ २२६ ॥

एते पञ्च तीर्थकृतः प्रथमवयसि–कुमारत्वलक्षणे प्रव्रजिताः, शेषा मध्ये वयसि–यौवनलक्षणे वर्त्तमानाः प्रव्रजिताः ॥२२६॥

उपधिद्वारमाह–

सव्वेऽवि एगदूसेण, निग्गया जिणवरा चउव्वीसं । न य नाम अण्णलिंगे, नो गिहिलिंगे कुलिंगे वा ॥२२७॥

सर्वेऽपि भगवन्तोऽतीता जिनवराश्चतुर्विंशतिसङ्ख्याः, एतेन सर्वास्वप्यवसर्पिणीषु ( चूत्सर्पिणीषु च ) प्रत्येकं भरतक्षेत्रे चतुर्विंशतिरेव तीर्थकरा अभूवन्निति ख्यापितं, एकदूष्येण–एकेन वस्त्रेण निर्गताः–अभिनिष्क्रान्ताः, किं पुनस्तन्मतानुसारिणो न सोपधयः?, ततश्च य उपधिरासेवितो भगवद्भिः स साक्षादेवोक्तः, यः पुनर्विनेयेभ्यः स्थविरकल्पिकादिभेदभिन्नेभ्योऽनुज्ञातः स खलु

अपिशब्दसंसूचितो ग्रन्थान्तरादवसेयः । अथ लिङ्गद्वारमाह–सर्वे तीर्थकृतस्तीर्थकरलिङ्गे च निष्क्रान्ताः, न च नाम अन्यलिङ्गे न गृहस्थलिङ्गे कुलिङ्गे वा, अन्यलिङ्गाद्यर्थ उक्त एव ॥ २२७ ॥ अथ यो येन तपसा निष्क्रान्तस्तदभिधित्सुराह—

सुमई थ निच्चभत्तेण, निग्गओ वासुपुज्ज जिणो चउत्थेणं । पासो मल्लीवि अ, अट्ठमेण सेसा उ छट्ठेणं ॥ २२८ ॥

चतुर्विंशतौ तीर्थकृत्सु मध्ये सुमतिर्नित्यभक्तेनाऽनवरतभक्तेन निर्गतो निष्क्रान्तः, थ इति निपातः पूरणे, तथा वासुपूज्यो जिनश्चतुर्थेन, निर्गत इति वर्त्तते, पार्श्वो मल्ल्यपि चाष्टमेन, शेषास्तु ऋषभादयः षष्ठेन ॥ २२८ ॥ अथैहैव निर्गमनाधिकाराद्यो यत्र येषूद्यानादिषु निष्क्रान्त इत्येतदाह—

उसभो अ विणीआए, बारवईए अरिट्ठवरनेमी । अवसेसा तित्थयरा, निक्खंता जम्मभूमीसुं ॥ २२९ ॥
उसभो सिद्धत्थवणंमि, वासुपुज्जो विहारगेहंमि । धम्मो अ वप्पगाए, नीलगुहाए अ मुणिनामा ॥ २३० ॥
आसमपयंमि पासो, वीरजिणिंदो अ नायसंडंमि । अवसेसा निक्खंता, सहसंबवणंमि उज्जाणे ॥ २३१ ॥

*ऋषभो विनीतायां निष्क्रान्तः, द्वारावत्यामरिष्टवरनेमिः, अवशेषास्तीर्थकरा निष्क्रान्ता जन्मभूमिषु, यत्र जातास्तत्रैवेत्यर्थः* ॥२२९॥ ऋषभः सिद्धार्थवने, वासुपूज्यो विहारगृहकाभिधाने उद्याने, [ धर्मो–धर्मस्वामी भगवान् वप्रगायां–वप्रगाभिधाने उद्याने ], नीलगुफायां च–नीलगुफाउद्याने मुनिसुव्रतः ॥ २३० ॥ आश्रमपदे उद्याने पार्श्वः, वीरजिनेन्द्रश्च ज्ञातखण्डे उद्याने, अवशेषाः सहस्राम्रवने निष्क्रान्ताः ॥ २३१ ॥ प्रसङ्गत एव निर्गमनकालमाह—

निष्क्रमणतपउद्याननामानि नि० गा० २२८-२३१

पासो अरिट्ठनेमी, सिज्जंसो सुमइ मल्लिनामो अ। पुव्वण्हे निक्खंता, सेसा पुण पच्छिमण्हंमि ॥ २३२ ॥

पार्श्वादयः पञ्च जिनाः पूर्वाह्ने निष्क्रान्ताः, शेषाः पुनः पश्चिमाह्ने ॥ १३२ ॥

गतमुपधिद्वारं, ततः प्रसङ्गत एवान्यलिङ्गा[द्य]र्थोऽपि व्याख्यात एव। अथ ग्राम्याचारद्वारमाह—

गामायारा विसया, निसेविआ ते कुमारवज्जेहिं ६। गामागराइएसु व, केसु विहारो भवे कस्स ॥ २३३ ॥

ग्राम्याचारा विषया उच्यन्ते, ते विषया निषेविताः कुमारवर्जैः, कुमारभावे ये प्रव्रज्यां गृहीतवन्तस्तान्मुक्त्वा शेषैः सर्वतीर्थकृद्भिरासेविता विषयाः, अथ ग्रामाकारादिषु विहारास्ते वक्तव्याः, कस्य केषु ग्रामाकरादिषु विहार आसीत् ॥ २३३ ॥ एतदेवाह—

मगहारायगिहाइसु, मुणओ खित्तारिएसु विहरिंसु। उसभो नेमी पासो, वीरो अ अणारिएसुंपि ॥ २३४ ॥

मन्यन्ते स्म जगतः समस्तस्यापि त्रिकालावस्थामिति मुनयस्तीर्थकृतस्ते सर्वेऽपि मगधादिषु जनपदेषु क्षेत्रार्येष्वित्यार्यक्षेत्रेषु विहृतवन्तः ॥ २३४ ॥ परीषहद्वारमाह—

उदिआ परीसहा सिं, पराइआ ते अ जिणवरिंदेहिं ७। नव जीवाइपयत्थे, उवलभिऊणं च निक्खंता ८ ॥२३५॥

उदिताः परीषहाः एतेषां तीर्थकृतां परं पराजितास्ते च परीषहाः सर्वैरपि जिनवरेन्द्रैः, जीवोपलम्भद्वारमाह–ते च जीवादिपदार्थानुपलभ्य च निष्क्रान्ताः, आदिशब्दादजीवाश्रवसंवरबन्धपुण्यपापनिर्जरामोक्षपरिग्रहः ॥ २३५ ॥

निर्गमनकालं ग्राम्याचारपरीषहजीवोपलम्भद्वाराणि च नि० गा० २३२-२३५

अथ श्रुतलाभद्वारमाह—

पढमस्स य बारसंगं, सेसाणिक्कारसंग सुयलंभो। पंच जमा पढमंतिमजिणाण सेसाण चत्तारि ॥ २३६ ॥

पच्चक्खाणमिणं संजमो अ पढमंतिमाण दुविगप्पो। सेसाणं सामइओ, सत्तरसंगो अ सव्वेसिं ॥ २३७ ॥

वाससहस्सं बारस चउदस अट्ठार वीस वरिसाइं। मासा छन्नव तिन्नि अ चउतिग दुगमिक्कग दुगं च ॥ २३८ ॥
तिग दुगमिक्कग सोलस वासा तिन्नि अ तहेवऽहोरत्तं। मासिक्कारस नवगं चउपण्णदिणाइ चुलसीई ॥ २३९ ॥
तह बारस वासाइं, जिणाण छउमत्थकालपरिमाणं। उग्गं च तवोकम्मं, विसेसओ वद्धमाणस्स ॥ २४० ॥

प्रथमस्य ऋषभस्य पूर्वभवे श्रुतलाभः परिपूर्णं द्वादशाङ्गं, शेषाणामेकादशाङ्गानि, यस्य च यावान् पूर्वभवे श्रुतलाभस्तस्य तावांस्तीर्थकरजन्मन्यनुवर्त्तते। अथ प्रत्याख्यानद्वारमाह–प्रथमान्त्यजिनस्य पञ्च यमाः–प्राणातिपातनिवृत्त्यादीनि व्रतानि, शेषाणां द्वाविंशतेर्मैथुनव्रतवर्जाणि चत्वारि, तस्य परिग्रहे एवान्तर्भावात् ॥ २३६ ॥ इदं प्रत्याख्यानं, संयमोऽपि सामायिकादिरूपः प्रथमान्त्यजिनयोर्द्विविकल्पः, इत्वरं सामायिकं च्छेदोपस्थापनीयं च, शेषाणां द्वाविंशतेर्यावत्कथिकमेवैकं सामायिकं, सप्तदशाङ्गः–सप्तदशभेदः पुनः सर्वेषां चतुर्विंशतेरपि तीर्थकृतामभूत्, चः पुनरर्थे, स चासौ 'पञ्चास्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः। दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः, ॥ २३७ ॥ अथ छद्मस्थतपःकर्मद्वारमाह–ऋषभस्य च्छद्मस्थकालो वर्षसहस्रं १, एवमजितादीनां यथाक्रमं वक्ष्यमाणं वर्षशब्दसम्बन्धात् द्वादशवर्षाणि २, चतुर्दशवर्षाणि ३, अष्टादशवर्षाणि ४, विंशतिवर्षाणि ५, षण्मासाः ६, नवमासाः ७, त्रयो मासाः ८, चत्वारो मासाः ९ त्रयो

मासाः १० द्वौ मासौ ११ एको मासः १२ द्वौ मासौ १३ ॥ २३८ ॥ वक्ष्यमाणवर्षशब्दसम्बन्धात् त्रीणि वर्षाणि १४, द्वे वर्षे १५, एकं वर्षं १६, षोडश वर्षाणि १७, त्रीणि दिनानि १८, अहोरात्रमेकं १९, एकादश मासाः २०, नव मासाः २१, चतुःपञ्चाशद्दिनानि २२, चतुरशीतिर्दिनानि २३ ॥ २३९ ॥ तथेति समुच्चये, द्वादश वर्षाणि किञ्चित्सातिरेकाणि ग्राह्याणि २४, एतज्जिनानां च्छद्मस्थकालपरिमाणं, सर्वेषामपि च तीर्थकृतां च्छद्मस्थकाले तपःकर्म्म उग्रमितरजन्तुभिर्दुरध्यवसेयं विशेषतो वर्द्धमानस्य सम्बन्धि तपो दुरध्यवसेयं, वक्ष्यमाणन्यायेन सोपसर्गत्वादपानकत्वाद्बहुत्वाच्च ॥ २४० ॥

अथ ज्ञानोत्पादनद्वारमाह—

फग्गुणबहुलिक्कारसि, उत्तरसाढाहि नाणमुसभस्स १ । पोसिक्कारसि सुद्धे, रोहिणिजोएण अजिअस्स २ ॥ २४१ ॥
कत्तिअबहुले पंचमि, मिगसिरजोगेण संभवजिणस्स ३ । पोसे सुद्धचउद्दसि, अभीइ अभिणंदणजिणस्स ४ ॥ २४२ ॥
चित्ते सुद्धिक्कारसि, महाहि सुमइस्स नाणमुप्पण्णं ५ । चित्तस्स पुण्णिमाए, पउमाभजिणस्स चित्ताहिं ६ ॥ २४३ ॥
फग्गुणबहुले छट्ठी, विसाहजोगे सुपासनामस्स ७ । फग्गुणबहुले सत्तमि, अणुराह ससिप्पहजिणस्स ८ ॥ २४४ ॥
कत्तिअसुद्धे तइया, मूले सुविहिस्स पुप्फदंतस्स ९ । पोसे बहुलचउद्दसि, पुव्वासाढाहि सीअलजिणस्स १० ॥ २४५ ॥
पण्णरसि माहबहुले, सिज्जंसजिणस्स सवणजोएणं ११ । सयभिय वासुपुज्जे, बीयाए माहसुद्धस्स १२ ॥ २४६ ॥
पोसस्स सुद्धछट्ठी, उत्तरभद्दवय विमलनामस्स १३ । वइसाहबहुलचउदसि, रेवइजोएणऽणंतस्स १४ ॥ २४७ ॥
पोसस्स पुण्णिमाए, नाणं धम्मस्स पुस्सजोएणं १५ । पोसस्स सुद्धनवमी, भरणीजोगेण संतिस्स १६ ॥ २४८ ॥

ज्ञानोत्पादन
दिननक्षत्र-
नामानि
नि० गा०
२४१-२४८

चित्तस्स सुद्धतइआ, कित्तिअजोगेण नाण कुंथुस्स १७। कत्तिअसुद्धे बारसि, अरस्स नाणं तु रेवइहिं १८॥ २४९॥
मग्गसिरसुद्धइक्कारसीइ, मल्लिस्स अस्सिणीजोगे १९। फग्गुणबहुले बारसि, सवणेणं सुव्वयजिणस्स २०॥ २५०॥
मगसिरसुद्धिक्कारसि, अस्सिणिजोगेण नमिजिणिंदस्स २१। आसोअमावासाए, नेमिजिणिंदस्स चित्ताहिं २२॥२५१॥
चित्ते बहुलचउत्थी, विसाहजोएण पासनामस्स २३। वइसाहसुद्धदसमी, हत्थुत्तरजोगि वीरस्स २४॥ २५२॥

एता द्वादशापि गाथाः स्पष्टाः॥ अथ कस्य कस्मिन् विभागे ज्ञानमुत्पन्नमित्याह—

तेवीसाए नाणं, उप्पण्णं जिणवराण पुव्वण्हे। वीरस्स पच्छिमण्हे, पमाणपत्ताए चरिमाए॥ २५३॥

त्रयोविंशतेस्तीर्थंकराणां ज्ञानमुत्पन्नं पूर्वाह्णे, सूरोद्गमनमुहूर्त्ते इत्यर्थः, वीरस्यपश्चिमाह्णे, तत्रापि प्रमाणप्राप्तायां चरमपौरुष्यां॥ २५३॥

अथ येषु क्षेत्रेषूत्पन्नं तदाह—

उसभस्स पुरिमताले, वीरस्सुजुवालिआनईतीरे। सेसाण केवलाइं, जेसुज्जाणेसु पव्वइआ॥ २५४॥

ऋषभस्य विनीताप्रत्यासन्ने पुरिमतालनगरे, तत्रापि शकटमुखे उद्याने न्यग्रोधपादपस्याधो निविष्टस्य, वीरस्य ऋजुवालिकानदीतीरे गृहपतिश्यामाकखले सालतरोरधःस्थितस्य, शेषाणां केवलज्ञानानि येषूद्यानेषु प्रव्रजितास्तत्रोत्पन्नानि॥ २५४॥

अथ यस्य येन तपसोत्पन्नं तत्तपः प्रतिपादयन्नाह—

अट्ठमभत्तंतंमी, पासोसहमल्लिरिट्ठनेमीणं। वसुपुज्जस्स चउत्थेण, छट्ठभत्तेण सेसाणं॥ २५५॥

ज्ञानोत्पादनदिन-विभागक्षेत्र-तपांसि नि० गा० २५३-२५५

अष्टमभक्तान्ते चतुर्णां ज्ञानमुत्पन्नं, वासुपूज्यस्य चतुर्थेन, षष्ठभक्तेन शेषाणामेकोनविंशतेः ॥ २५५ ॥
गतं ज्ञानद्वारं, अथ सङ्ग्रहद्वारमाह—

चुलसीइं च सहस्सा, एगं च दुवे अ तिण्णि लक्खाइं । तिण्णि अ वीसहिआइं, तीसहिआइं च तिण्णेव ॥ २५६ ॥

ऋषभस्य चतुरशीतिः सहस्राणि यतिशिष्यसङ्ग्रहप्रमाणं १, एवं यथाक्रमं एकं लक्षं २, द्वे लक्षे ३, त्रीणि लक्षाणि ४, विंशतिसहस्राधिकानि त्रीणि लक्षाणि ५, त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ६ ॥ २५६ ॥

तिण्णि अ अड्ढाइज्जा, दुवे अ एगं च सयसहस्साइं । चुलसीइं च सहस्सा, बिसत्तरि अट्ठसट्ठिं च ॥ २५७ ॥

त्रीणि लक्षाणि ७, अर्द्धतृतीये लक्षे ८, द्वे लक्षे ९, एकं लक्षं १०, चतुरशीतिसहस्राणि ११, द्विसप्ततिः सहस्राणि १२, अष्टषष्टिः सहस्राणि १३ ॥ २५७ ॥

छावट्ठिं चउसट्ठिं बावट्ठिं सट्ठिमेव पण्णासं । चत्ता तीसा वीसा, अट्ठारस सोलस सहस्सा ॥ २५८ ॥

षट्षष्टिः सहस्राणि १४, चतुःषष्टिः सहस्राणि १५, द्विषष्टिः सहस्राणि १६, षष्टिः सहस्राणि १७, पञ्चाशत्सहस्राणि १८, चत्वारिंशत्सहस्राणि १९, त्रिंशत् सहस्राणि २०, विंशतिः सहस्राणि २१, अष्टादश सहस्राणि २२, षोडश सहस्राणि २३ ॥२५८॥

चउदस य सहस्साइं, जिणाण जइसीससंगहपमाणं । अज्जासंगहमाणं, उसभाईणं अओ वुच्छं ॥ २५९ ॥

चतुर्दशसहस्राणि २४, एवं चतुर्विंशतेरपि सर्वसङ्ख्यया यदुक्तं—अट्ठावीसं लक्खा अडयालीसं च तह सहस्साइं । सव्वेसिंपि जिणाणं जईण माणं विणिदिट्ठं १, । तदेतत् जिनानां वृषभादिवर्द्धमानान्तानां यथाक्रमं यतिशिष्यसङ्ग्रहप्रमाणं विज्ञेयं,

शिष्यसङ्ग्रह-प्रमाणम् नि० गा० २५६-२५९

आर्यासङ्ग्रहमानमृषभादीनामितो वक्ष्ये ॥ २५९ ॥ एतदेवाह—

तिण्णेव य लक्खाइं तिण्णि य तीसा य तिण्णि छत्तीसा। तीसा य छच्च पंच य, तीसा चउरो अ वीसा य ॥ २६० ॥

ऋषभस्य त्रीणि लक्षाण्यार्यासङ्ग्रहोऽभूत् १, त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि २, षट्त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ३, त्रिंशत्सहस्राधिकानि षट् लक्षाणि ४, त्रिंशत्सहस्राधिकानि पञ्च लक्षाणि ५, विंशतिसहस्राधिकानि चत्वारि लक्षाणि, हारिभद्रीयवृत्तिटिप्पनके तु त्रिंशत्सहस्राधिकानि इत्यक्षराणि सन्ति ६ ॥ २६० ॥

चत्तारि य तीसाइं, तिण्णि अ असिआइ तिन्निमित्तो अ। वीसुत्तरं छलहिअं, तिसहस्ससहिअं च लक्खं च ॥ २६१ ॥

त्रिंशत्सहस्राधिकानि चत्वारि लक्षाणि ७, अशीतिसहस्राधिकानि त्रीणि लक्षाणि ८, 'तिन्निमीत्तो अ' त्ति त्रिलक्षमात्रः आर्यासङ्ग्रह इति गम्यते ९, विंशतिसहस्राधिकं लक्षं १०, षट्सहस्राधिकं लक्षं ११, त्रिसहस्राधिकं लक्षं १२, इति गाथार्थः, हारिभद्रीयवृत्तिटिप्पनककारः पुनरेवमाह–अष्टजिनानन्तरं 'तिन्हमित्तो अ' त्ति त्रयाणां तीर्थकृतां सुविध्यादीनामित ऊर्ध्वं यथाक्रमं वक्ष्ये इति गम्यते, तदेवाह–'वीसुत्तरं छलहिअं तिसहस्ससहिअं च'त्ति, अनन्तरलक्षस्येहापि सम्बन्धाद्विंशतिसहस्राधिकं लक्षं ९, षड्भिरार्यिकाभिरधिकं लक्षं १०, त्रिभिः सहस्रैरधिकं लक्षं ११ 'लक्खं च'त्ति लक्षमेकं १२ ॥ २६१ ॥

लक्खं अट्ठ सयाणि अ, बावट्ठिसहस्स चउसयसमग्गा। एगट्ठी छच्च सया, सट्ठिसहस्सा सया छच्च ॥ २६२ ॥

विमलस्यैकलक्षं १३, लक्षशब्दस्येहापि सम्बन्धादेकं लक्षमष्ट शतानि १४, द्वाषष्टिः सहस्राणि चतुःशतसमग्राणीति चतुःशताभ्यधिकानि १५, टिप्पनकृदत्राप्येवमाह–विमलस्याष्टभिः शतैरधिकं लक्षं १३ सम्पूर्णानि द्विषष्टिः सहस्राणि १४, 'चउसय

समग्ग'त्ति, अनन्तरातिक्रान्ताः सहस्रा अत्रापि सम्बध्यते, ततश्चतुर्भिः शतैः समग्राणि द्विषष्टिसहस्राणि १५ इति, शद्शताधिकान्येकषष्टिः सहस्राणि १६, षद्शताधिकानि षष्टिः सहस्राणि १७ ॥ २६२ ॥

सट्ठि पणपण्ण पण्णेगचत्त चत्ता तहट्ठतीसं च । छत्तीसं च सहस्सा, अज्जाणं संगहो एसो ॥ २६३ ॥

षष्टिः सहस्राणि १८, पञ्चपञ्चाशत्सहस्राणि १९, पञ्चाशत्ससहस्राणि २०, एकचत्वारिंशत्सहस्राणि २१, चत्वारिंशत्सहस्राणि २२, अष्टत्रिंशत् सहस्राणि२३, षद्त्रिंशत्सहस्राणि २४, एष उक्तस्वरूपश्चतुर्विंशतेरपि तीर्थकृतां यथाक्रममार्यिकाणां सङ्ग्रहो विज्ञेयः, सर्वसङ्ख्यया यदुक्तं 'चोआलीसं लक्खा छायाला सह चउसमग्गो छच्चेव अजिआणं सव्वासिं संगहो एसो ॥१'॥२६३॥

पढमाणुओगसिद्धो, पत्तेअं सावयाइआणं पि । नेओ सव्वजिणाणं, सीसाण परिग्गहो( संगहो )कमसो ॥ २६४ ॥

श्रावकादीनां आदिशब्दात् श्राविकाचतुर्दशपूर्वधरादिसङ्ग्रहः प्रत्येकं शिष्याणां सङ्ग्रहः क्रमशो-यथाक्रमं सर्वजिनानां प्रथमानुयोगशिष्टोऽत्र ज्ञेयः ॥ २६४ ॥ गतं सङ्ग्रहद्वारं, अथ तीर्थद्वारमाह—

तित्थं चाउव्वण्णो, संघो सो पढमए समोसरणे । उप्पण्णो अ जिणाणं, वीरजिणिंदस्स बीअंमि ॥ २६५ ॥

तीर्थं—चतुर्वर्ण्णः सङ्घः, स जिनानां प्रथमे समवसरणे उत्पन्नः वीरजिनेन्द्रस्य द्वितीये, यत्र केवलमुत्पन्नं तदपेक्षया मध्यमायां द्वितीयमुच्यते ॥ २६५ ॥

चुलसीइ पंचनउई, बिउत्तरं सोलसुत्तर सयं च । सत्तहिअं पणनउई, तेणउई अट्ठसीई अ ॥ २६६ ॥

ऋषभस्य चतुरशीतिः १, पञ्चनवतिः २, द्व्युत्तरं शतमिति गम्यते ३, एवमग्रेपि षोडशोत्तरं शतं ४, सम्पूर्णं शतं ५,

आर्याश्रावकादिसङ्ग्रहप्रमाणम् नि० गा० २६३-२६४

तीर्थद्वारम् गणसङ्ख्या च नि० गा० २६५-२६६

सप्तोत्तरं शतं ६, पञ्चनवतिः ७, त्रिनवतिः ८, अष्टाशीतिश्च ९ ॥ २६६ ॥

इक्कासीई छावत्तरी अ, छावट्ठी सत्तवण्णा य । पण्णा तेयालीसा, छत्तीसा चेव पणतीसा ॥ २६७ ॥

एकाशीतिः १०, षट्सप्ततिः ११, षट्षष्टिः १२, सप्तपञ्चाशत् १३, पञ्चाशत् १४, त्रिचत्वारिंशत् १५, षट्त्रिंशत् १६, पञ्चत्रिंशत् १७ ॥ २६७ ॥

तित्तीस अट्ठवीसा, अट्ठारस चेव तहय सत्तरस । इक्कारस दस नवगं, गणाण माणं जिणिंदाणं ॥ २६८ ॥

त्रयस्त्रिंशत् १८, अष्टाविंशतिः १९, अष्टादश २०, सप्तदश २१, एकादश २२, दश २३, नव २४, इति ऋषभादिजिनेन्द्राणां यथाक्रमं गणानां मानं विज्ञेयं ॥ २६८ ॥ अथ गणधरद्वारमाह–

एक्कारस उ गणहरा, जिणस्स वीरस्स सेसयाणं तु । जावइआ जस्स गणा, तावइआ गणहरा तस्स ॥ २६९ ॥

गणधरा मूलसूत्रकर्त्तारः ते च वीरजिनस्यैकादश, गणास्तु नव, अन्त्ययोर्द्वयोर्युगलयोरेकैकवाचनाचारक्रियास्थत्वात्, शेषाणां यस्य यावन्तो गणास्तस्य तावन्तो गणधराः, प्रतिगणधरं भिन्नभिन्नवाचनाचारक्रियास्थत्वात् ॥ २६९ ॥

अथ धर्मोपायदेशकद्वारमाह–

धम्मोवाओ पवयणमहवा पुव्वाइं देसगा तस्स । सव्वजिणाण गणहरा, चउदसपुव्वी य जे जस्स ॥ २७० ॥

धर्मोपायः प्रवचनं, तदन्तरेण धर्मस्यासम्भवात्, अथवा पूर्वाणि, तस्य–धर्म्मोपायस्य देशकाः सर्वजिनानां गणधराः, तेषां मूलसूत्रकर्तृत्वात्, अथवा ये यस्य तीर्थकृतश्चतुर्दशपूर्विणस्ते धर्म्मोपायस्य देशकाः, परिपूर्णश्रुततया तेषां यथावस्थित-

गणगणधर-सङ्ख्या नि० गा० २६७-२६९

धर्मोपाय-देशक-द्वारम् नि० गा० २७०

वस्तुदेशकत्वात् ॥ २७० ॥ अथ प्रकारान्तरेण धर्मोपायमुपदर्शयन्नाह—

सामाइयाइया वा वयजीवणिकायभावणा पढमं । एसो धम्मोवाओ, जिणेहि सव्वेहि उवइट्ठो ॥ २७१ ॥

वाशब्दः प्रकारान्तरद्योतनार्थः, सामायिकमादिर्यासां ताः सामायिकादिकाः सामायिकपूर्विका इत्यर्थः, व्रतानि प्राणातिपातविरमणादीनि, जीवनिकायाः पृथिव्यादयः, भावनाः पञ्चविंशतिः अनित्यत्वादिविषया द्वादश वा एषां द्वन्द्वस्ततः सामायिकाङ्गीकारपूर्विकाः सत्यो व्रतजीवनिकायभावना इत्येष धर्मोपायो जिनैः सर्वैरुपदिष्ट इति सम्बन्धः, कदा ?, प्रथमं आद्यसमवसरणवर्त्तनावसर एवेत्यर्थः, उत्तरकालं जिनकल्पपरिहारविशुद्धिकभिक्षुप्रतिमाभिग्रहादिभेदभिन्नोऽनेकविधो द्रष्टव्यः, त एव च जिनास्तस्योपदेशकाः ॥ २७१ ॥ पर्यायद्वारमाह—

उसभस्स पुव्वलक्खं, पुव्वंगूणमजिअस्स तं चेव । चउरंगूणं लक्खं, पुणो पुणो जाव सुविहित्ति ॥ २७२ ॥

ऋषभस्य श्रामण्यपर्यायः एकं पूर्वलक्षं १, अजितस्य तदेवं पूर्वलक्षं एकेन पूर्वाङ्गेन न्यूनं, पूर्वाङ्गं नाम चतुरशीतिवर्षलक्षाणि २, अत ऊर्द्धं चतुरङ्गोनं पूर्वलक्षं पुनः पुनस्तावद्वक्तव्यं यावत्सुविधिः, तथाहि सम्भवादीनां व्रतपर्यायः सर्वत्रैकं पूर्वलक्षं चतुर्भिः पूर्वाङ्गैर्न्यूनं ३, अष्टभिः ४, द्वादशभिः ५, षोडशभिः ६, विंशत्या ७, चतुर्विंशत्या ८, अष्टाविंशत्या पूर्वाङ्गैर्न्यूनं पूर्वलक्षं ९ ॥ २७२ ॥ एवं सुविधिं यावदतिदेशेनाभिधाय शीतलानां प्रत्येकमाह—

पणवीसं तु सहस्सा, पुव्वाणं सीअलस्स परिआओ । लक्खाइं इक्कवीसं, सिज्जंसजिणस्स वासाणं ॥ २७३ ॥

पञ्चविंशतिः पूर्वाणां सहस्राणि व्रतपर्यायः १०, वर्षाणामेकविंशतिर्लक्षाणि ११ ॥ २७३ ॥

चउपण्णं पण्णरस, तत्तो अद्धट्ठमाइ लक्खाइं । अड्ढाइज्जाइं तओ, वाससहस्साइं पणवीसं ॥ २७४ ॥

चतुःपञ्चाशद्वर्षलक्षाणि १२, पञ्चदशवर्षलक्षाणि १३, सार्द्धसप्तलक्षाणि १४, सार्द्धवर्षलक्षद्वयं १५, पञ्चविंशतिर्वर्षसहस्राणि १६ ॥ २७४ ॥

तेवीसं च सहस्सा, सयाणि अद्धट्ठमाणि अ हवंति । इगवीसं च सहस्सा, वाससउणा य पणपण्णा ॥२७५॥

त्रयोविंशतिवर्षसहस्राणि सार्द्धसप्तशताधिकानि १७, एकविंशतिर्वर्षसहस्राणि १८, वर्षशतन्यूनानि पञ्चपञ्चाशद्वर्षसहस्राणि १९ ॥ २७५ ॥

अद्धट्ठमा सहस्सा अड्ढाइज्जा य सत्त य सयाइं । सयरी चिचत्तवासा, दिक्खाकालो जिणिंदाण ॥ २७६ ॥

सार्द्धसप्तवर्षसहस्राणि २०, सार्द्धवर्षसहस्रद्वयं २१, सप्तवर्षशतानि २२, सप्ततिवर्षाणि २३, द्विचत्वारिंशद्वर्षाणि २४, एष दीक्षाकालो जिनेन्द्राणां यथाक्रमं ज्ञेयः ॥ २७६ ॥ अथ कुमारवासादिपर्यायान् प्रतिपादयन्नाह—

उसभस्स कुमारत्तं, पुव्वाणं वीसई सयसहस्सा । तेवट्ठी रज्जंमी, अणुपालेऊण णिक्खंतो ॥ २७७ ॥

ऋषभस्य कुमारत्वं पूर्वाणां–७०५६०००००००००० एतावद्वर्षप्रमितानां विंशतिः शतसहस्राणि लक्षाणीत्यर्थः, त्रिषष्टिः पूर्वलक्षाणि राज्येऽनुपाल्य–गमयित्वा पश्चान्निष्क्रान्तः, एकं पूर्वलक्षं शेषं व्रतपर्यायः ॥ २७७ ॥

अजिअस्स कुमारत्तं, अट्ठारस पुव्वसयसहस्साइं । तेवण्णं रज्जंमी, पुव्वंगं चेव बोद्धव्वं ॥ २७८ ॥

अजितस्य कुमारत्वं पूर्वमष्टादशलक्षाणि त्रिपञ्चाशत्पूर्वलक्षाणि राज्ये एकं च पूर्वाङ्गं बोद्धव्यं, शेषमेकं पूर्वाङ्गोनं पूर्वलक्षं

व्रतपर्यायः ॥ २७८ ॥

पण्णरस सयसहस्सा, कुमारवासो अ संभवजिणस्स । चोआलीसं रज्जे, चउरंगं चेव बोद्धव्वं ॥ २७९ ॥

पञ्चदश पूर्वलक्षाणि कुमारभावः सम्भवजिनस्य, चतुश्चत्वारिंशत्पूर्वलक्षाणि राज्ये चत्वारि च पूर्वाङ्गानि बोद्धव्यानि, शेषमेकं पूर्वलक्षं पूर्वाङ्गचतुष्कोनं व्रतपर्यायः ॥ २७९ ॥

अद्धतेरस लक्खा, पुव्वाणऽभिणंदणे कुमारत्तं । छत्तीसा अद्धं चिय, अट्ठंगा चेव रज्जंमि ॥ २८० ॥

सार्द्धानि द्वादशपूर्वलक्षाण्यभिनन्दनविषयं कुमारत्वं, षट्त्रिंशत्पूर्वलक्षाण्यर्द्धमिति पञ्चाशत्पूर्वसहस्राणि अष्टौ च पूर्वाङ्गानि राज्ये, शेषमेकं पूर्वलक्षं पूर्वाङ्गाष्टकोनं व्रतपर्यायः ॥ २८० ॥

सुमइस्स कुमारत्तं, हवंति दस पुव्वसयसहस्साइं । अउणातीसं रज्जे, बारस अंगा य बोद्धव्वा ॥ २८१ ॥

सुमतेः कुमारत्वं दशपूर्वलक्षाणि, एकोनत्रिंशत्पूर्वलक्षाणि द्वादश पूर्वाङ्गानि च राज्ये, शेषमेकं पूर्वलक्षं द्वादशपूर्वाङ्गोनं व्रतपर्यायः ॥ २८१ ॥

पउमस्स कुमारत्तं, पुव्वाणऽद्धट्ठमा सयसहस्सा । अद्धं च एगवीसा, सोलस अंगा य रज्जंमि ॥ २८२ ॥

पद्मप्रभस्य कुमारत्वं सार्द्धसप्तपूर्वलक्षाणि, सार्द्धैकविंशतिपूर्वलक्षाणि षोडशपूर्वाङ्गानि राज्ये, शेषमेकं पूर्वलक्षं षोडशपूर्वाङ्गोनं व्रतपर्यायः ॥ २८२ ॥

पुव्वसयसहस्साइं, पंच सुपासे कुमारवासो उ । चउदस पुण रज्जंमी वीसं अंगा य बोद्धव्वा ॥ २८३ ॥

सुपार्श्वविषयः कुमारवासः पञ्च पूर्वलक्षाणि, चतुर्दश पूर्वलक्षाणि राज्ये विंशतिः पूर्वाङ्गाणि च, शेषमेकं पूर्वलक्षं विंशत्या पूर्वाङ्गैरूनं व्रतपर्यायः ॥ २८३ ॥

अड्ढाइज्जा [अद्धुट्ठा उ] लक्खा, कुमारवासो ससिप्पहे होइ । अद्धं छच्चिय रज्जे, जउवीसंगा य वोद्धव्वा ॥ २८४ ॥

सार्द्धं पूर्वलक्षद्वयं [कुमार]वासश्चन्द्रप्रभविषयः, सार्द्धषट् पूर्वलक्षाणि राज्ये चतुर्विंशतिः पूर्वाङ्गाणि च, शेषमेकं पूर्वलक्षं चतुर्विंशत्या पूर्वाङ्गैर्हीनं व्रतपर्यायः ॥ २८४ ॥

पण्णं पुव्वसहस्सा, कुमारवासो उ पुप्फदंतस्स । तावइअं रज्जंमी, अट्ठावीसं च पुव्वंगा ॥ २८५ ॥

पञ्चाशत्पूर्वसहस्राणि कुमारवासः पुष्पदन्तस्य, तावत्पञ्चाशत्पूर्वसहस्राणि राज्येऽष्टाविंशतिश्च पूर्वाङ्गाणि; शेषमेकं पूर्वलक्षमष्टाविंशतिपूर्वाङ्गहीनं व्रतपर्यायः ॥ २८५ ॥

पणवीससहस्साइं, पुव्वाणं सीअले कुमारत्तं । तावइअं परिआओ, पण्णासं चेव रज्जंमि ॥ २८६ ॥

पञ्चविंशतिः पूर्वसहस्राणि शीतलविषयं कुमारत्वं, तावदेव व्रतपर्यायः, पञ्चाशत् पूर्वसहस्राणि राज्ये ॥ २८६ ॥

वासाण कुमारत्तं, इगवीसं लक्ख हुंति सिज्जंसे । तावइअं परिआओ, बायालीसं च रज्जंमि ॥ २८७ ॥

एकविंशतिर्वर्षलक्षाणि श्रेयांसविषयं कुमारत्वं, तावदेव व्रतपर्यायः, द्विचत्वारिंशद्वर्षलक्षाणि राज्ये ॥ २८७ ॥

गिहवासे अट्ठारस, वासाणं सयसहस्स निअमेणं । चउपण्ण सयसहस्सा, परिआओ होइ वसुपुज्जे ॥ २८८ ॥

गृहवासे कुमारलक्षणेऽष्टादशवर्षलक्षाणि, चतुःपञ्चाशद्वर्षलक्षाणि व्रतपर्यायो वासुपूज्यविषयः, राज्यानभ्युपगमाच्च

राज्यपर्यायाभावः ॥ २८८ ॥

पण्णरस सयसहस्सा, कुमारवासो अ तीसई रज्जे । पण्णरस सयसहस्सा, परिआओ होइ विमलस्स ॥ २८९ ॥

पञ्चदशवर्षलक्षाणि कुमारवासः, त्रिंशद्वर्षलक्षाणि राज्ये पञ्चदशवर्षलक्षाणि व्रतपर्यायो भवति विमलस्य ॥ २८९ ॥

अद्धट्ठमलक्खाइं, वासाणमणंतई कुमारत्ते । तावइअं परिआओ, रज्जंमी हुंति पण्णरस ॥ २९० ॥

सार्द्धसप्तवर्षलक्षाण्यनन्तजिनकुमारत्वं, तावदेव व्रतपर्यायः, राज्ये पञ्चदशवर्षलक्षाणि ॥ २९० ॥

धम्मस्स कुमारत्तं, वासाणड्ढाइआइं लक्खाइं । तावइअं परिआओ, रज्जे पुण हुंति पंचेव ॥ २९१ ॥

धर्मस्य कुमारत्वं सार्द्धवर्षलक्षद्वयं, तावदेव व्रतपर्यायः राज्ये पञ्च वर्षलक्षाणि ॥ २९१ ॥

संतिस्स कुमारत्तं, मंडलियचक्किपरिआअ चउसुंपि । पत्तेअं पत्तेअं, वाससहस्साइं पणवीसं ॥ २९२ ॥

शान्तेश्चतुर्ष्वपि स्थानेषु प्रत्येकं प्रत्येकं पञ्चविंशतिवर्षसहस्राणि ॥ २९२ ॥

एमेव कुंथुस्सवि, चउसुवि ठाणेसु हुंति पत्तेअं । तेवीससहस्साइं, वरिसाणद्धट्ठमसया य ॥ २९३ ॥

एवमेव शान्तेरिव कुन्थोरपि चतुर्ष्वपि स्थानेषु प्रत्येकं त्रयोविंशतिवर्षसहस्राणि सार्द्धसप्तवर्षशतानि च ॥ २९३ ॥

एमेव अरजिणिंदस्स, चउसुवि ठाणेसु हुंति पत्तेअं । इगवीस सहस्साइं, वासाणं हुंति णायव्वा ॥ २९४ ॥

एवमेवारजिनेन्द्रस्य चतुर्ष्वपि स्थानेषु एकविंशतिर्वर्षसहस्राणि ॥ २९४ ॥

मल्लिस्सवि वाससयं, गिहवासे सेसयं तु परिआओ । चउप्पण्णसहस्साइं, नव चेव सयाइं पुण्णाइं ॥ २९५ ॥

मल्लेर्वर्षशतं गृहवासः, शेषं तु सर्वमायुर्व्रतपर्यायः, तच्चतुःपञ्चाशद्वर्षसहस्राणि नव च शतानि ॥ २९५ ॥

अद्धट्ठमा सहस्सा, कुमारवासो उ सुव्वयजिणस्स । तावइअं परिआओ, पण्णरससहस्स रज्जंमि ॥ २९६ ॥

सार्द्धसप्तवर्षसहस्राणि कुमारवासः सुव्रतस्य, तावदेव व्रतपर्यायः, पञ्चदश वर्षसहस्राणि राज्ये ॥ २९६ ॥

नमिणो कुमारवासो, वाससहस्साइ दुण्णि अद्धं च । तावइअं परिआओ, पंचसहस्साइं रज्जंमि ॥ २९७ ॥

नमेः कुमारवासः सार्द्धवर्षसहस्रद्वयं, तावदेव व्रतपर्यायः, पञ्च वर्षसहस्राणि राज्ये ॥ २९७ ॥

तिण्णेव य वाससया, कुमारवासो अरिट्ठनेमिस्स । सत्त य वाससयाइं, सामण्णे होइ परिआओ ॥ २९८ ॥

त्रीणि वर्षशतानि कुमारवासो नेमेः, सप्तवर्षशतानि श्रामण्यविषयः पर्यायः ॥ २९८ ॥

पासस्स कुमारत्तं, तीसं परिआओ सत्तरी होइ । तीसा य वद्धमाणे, बायालीसा उ परिआओ ॥ २९९ ॥

पार्श्वस्य कुमारत्वं त्रिंशद्वर्षाणि, व्रतपर्यायः सप्ततिर्वर्षाणि, वर्द्धमानविषयो गृहवासस्त्रिंशद्वर्षाणि, द्वाचत्वारिंशद्वर्षाणि व्रतपर्यायः ॥ २९९ ॥ सम्प्रति केवलिपर्यायो वक्तव्यः, स च श्रामण्यपर्यायाच्छद्मस्थपर्यायापगमे स्वयमेव ज्ञेयः, अथ पूर्वोक्तमेव श्रामण्यपर्यायं स्मारयति—

उसभस्स पुव्वलक्खं, पुव्वंगूणमजिअस्स तं चेव । चउरंगूणं लक्खं, पुणो पुणो जाव सुविहित्ति ॥ ३०० ॥

व्याख्या पूर्ववत् ॥ ३०० ॥

सेसाणं परिआओ, कुमारवासेण सहिओ भणिओ । पत्तेअंपि अ पुव्वं, सीसाणमणुग्गहट्ठाए ॥ ३०१ ॥

शेषाणां-शीतलादीनां पर्यायः पूर्वं कुमारवासेन सह भणितः, प्रत्येकमपि च, किमर्थमुभयथा भणित इत्याह-शिष्याणामनुग्रहाय मन्दमतीनां बुद्धौ सम्यग् यथा प्रतिस्फलति ॥ २०१ ॥

छउमत्थकालमित्तो, सोहेउं सेसओ उ जिणकालो । सव्वाउअंपि इत्तो, उसभाईणं निसामेह ॥ ३०२ ॥

यथोदितात् श्रामण्यकालात् छद्मस्थकालमात्रं प्रागुक्तस्वरूपं शोधयित्वा शेषो यः श्रामण्यकालः स ऋषभादीनां जिनकालोऽवसातव्यः, टिप्पनककार एवमाख्यत्-'छद्मस्थकालं इत्तो सोहेउं'ति एतस्मात् स्थानद्वयोक्तदीक्षाकालाच्छोधयित्वा शेषकस्तूद्धरितो जिनकालो विज्ञेयः, सर्वायुष्कमपि ऋषभादीनामित ऊर्द्ध्वं मम कथयतो निशामयत यूयं ॥ ३०२ ॥ एतदेवाह-

चउरासीइ बिसत्तरि सट्ठी पण्णासमेव लक्खाइं । चत्ता तीसा वीसा, दस दो एगं च पुव्वाणं ॥ ३०३ ॥

इह गाथापर्यन्ते पूर्वाणामित्युक्तं, गाथाद्यार्द्धपर्यन्ते च लक्षाणीत्युक्तं ततश्चेत्थं सम्बन्धो द्रष्टव्यः, पूर्वाणां लक्षाणि चतुरशीतिः ऋषभस्य १, एवं द्विसप्ततिः पूर्वलक्षाणि २, षष्टिः पूर्वलक्षाणि ३, पञ्चाशत्पूर्वलक्षाणि ४, चत्वारिंशत् पूर्वलक्षाणि ५, त्रिंशत्पूर्वलक्षाणि ६, विंशतिः पूर्वलक्षाणि ७, दश पूर्वलक्षाणि ८, द्वे पूर्वलक्षे ९, एकं पूर्वलक्षं १० ॥ ३०३ ॥

चउरासीई बावत्तरी अ सट्ठी अ होइ वासाणं । तीसा य दस य एगं च एवमेए सयसहस्सा ॥ ३०४ ॥

इहापि सम्बन्धः पूर्ववत्, चतुरशीतिर्वर्षलक्षाणि ११, द्विसप्ततिर्वर्षलक्षाणि १२, षष्टिर्वर्षलक्षाणि १३, त्रिंशद्वर्षलक्षाणि १४, दशवर्षलक्षाणि १५, एकं वर्षलक्षाणि १६ ॥ ३०४ ॥

पंचाणउइ सहस्सा, चउरासीई अ पंचवण्णा य । तीसा य दस य, एगं सयं च बावत्तरी चेव ॥ ३०५ ॥

पञ्चनवतिः सहस्राणि, वर्षाणामिति पाश्चात्यमिहापि सम्बध्यते १७, चतुरशीतिर्वर्षसहस्राणि १८, पञ्चपञ्चाशद्वर्षसहस्राणि १९, त्रिंशद्वर्षसहस्राणि २०, दश वर्षसहस्राणि २१, एकं वर्षसहस्रं २२, एकं वर्षशतं २३, द्वासप्ततिर्वर्षाणि २४ ॥ ३०५ ॥ गतं पर्यायद्वारं, अथान्तक्रियाद्वारावसरः, तत्रापि कस्य केन तपसा क्व वा जाता कियत्परिवृतस्येत्याह—



निव्वाणमंतकिरिआ, सा चउदसमेण पढमनाहस्स । सेसाण मासिएणं, वीरजिणिंदस्स छट्ठेणं ॥ ३०६ ॥

निर्वाणलक्षणा अन्तक्रिया सा ऋषभस्य षड्भिरुपवासैरभूत् शेषाणां द्वाविंशतेर्मासिकेन—मासोपवासेन, वीरजिनेन्द्रस्य षष्ठेन ॥ ३०६ ॥

अट्ठावयचंपुज्जिंतपावासम्मेअसेलसिहरेसुं । उसभ वसुपुज्ज नेमी, वीरो सेसा य सिद्धिगया ॥ ३०७ ॥

अष्टापदे ऋषभः सिद्धिमगमत्, चम्पायां वासुपूज्यः, उज्जयन्ते नेमिः, पापायां नगर्यां वीरः, शेषाः विंशतिः सम्मेतशिखरे ॥ ३०७ ॥

एगो भयवं वीरो, तित्तीसाइ सह निव्वुओ पासो । छत्तीसएहिं पंचहिं, सएहि नेमी उ सिद्धिगओ ॥३०८॥

एकाकी निर्वृतो वीरः, त्रयस्त्रिंशता साधुभिः सह पार्श्वः, षट्त्रिंशदधिकैः पञ्चभिः शतैर्नेमिः ॥ ३०८ ॥

पंचएहि समणसएहिं, मल्ली संती उ नवसएहिं तु । अट्ठसएणं धम्मो, सएहि छहि वासुपुज्जजिणो ॥ ३०९ ॥



पञ्चभिः श्रमणशतैर्मल्लिः, शान्तिर्नवभिः शतैः, अष्टोत्तरशतेन ( अष्टभिः शतैः ) धर्म्मः, षड्भिः शतैर्वासुपूज्यः ॥ ३०९ ॥

सत्तसहस्साणंतइजिणस्स विमलस्स छस्सहस्साइं । पंचसयाइ सुपासे, पउमाभे तिण्णि अट्ठ सया ॥३१०॥

अनन्तस्य सिद्धिं गच्छतः सप्त सहस्राणि परिवार आसीत्, विमलस्य षट्-सहस्राणि, पञ्चशतानि सुपार्श्वविषयाणि, पद्मप्रभतीर्थकृद्विषये त्रीण्यष्टोत्तरशतानि साधूनां निर्वृतानि, त्रीणि शतानि चतुर्विंशतिसमाधिकानि इत्यर्थः ॥ ३१० ॥

**दसहि सहस्सेहि उसभो, सेसा उ सहस्सपरिवुडा सिद्धा । कालाइ जं न भणिअं, पढमणुओगाउ तं णेयं ॥३११॥**

दशभिः सहस्रैर्ऋषभः, शेषास्तु—उक्तव्यतिरिक्ताः प्रत्येकं सहस्रपरिवृताः सिद्धाः, अन्तक्रियासम्बन्धिकालादिस्वरूपं यन्मयेह न भणितं तत्प्रथमानुयोगात् द्वादशाङ्गान्तर्गताच्छास्त्रविशेषाद्विज्ञेयं ॥ ३११ ॥

**इच्चेवमाइ सव्वं, जिणाण पढमाणुओगओ णेअं । ठाणासुण्णत्थं पुण, भणिअं २१ पगयं अओ वुच्छं ॥३१२॥**

इतिरेवंप्रकारार्थे, ततश्च 'संबोहणपरिच्चाए' इत्यादिग्रन्थसन्दर्भेण यन्मया तीर्थकृतां सम्बोधनपरित्यागादिनोक्तमित्येवं-प्रकारमादौ कृत्वाऽपरमपि पूर्वभववक्तव्यतादिकं सविस्तरं सर्वजिनानां सम्बन्धि प्रथमानुयोगादुक्तस्वरूपाद्विज्ञेयं, ननु यद्येवं तर्हि सर्वमपि तत एव ज्ञास्यते, त्वया किञ्चिदपि किमित्युक्तं इत्याशङ्क्याह—स्थानाऽशून्यार्थं पुनर्भणितं किञ्चिदिति गम्यते इति न दोष इति, किमित्याह—प्रकृतं—प्रस्तुतं वस्तु अतो वक्ष्ये ॥ ३१२ ॥ किं तदिह प्रकृतमित्याह—

**उसभजिणसमुट्ठाणं, उट्ठाणं जं तओ मरीइस्स । सामाइअस्स एसो, जं पुव्वं निग्गमोऽहिगओ ॥ ३१३ ॥**

कथमसौ सम्यक्त्वमवाप ? कथं तीर्थकृन्नामकर्म बबन्ध ? कुतो वाऽऽगत्येहोत्पन्नः ? कदा वा दीक्षां जग्राहेत्यादिलक्षण-मृषभजिनसमुत्थानमत्र प्रकृतं तद्वक्ष्ये इति पूर्वगाथावयवेन सम्बन्धः, ननु कथमत्र ऋषभजिनसमुत्थानं प्रकृतमित्याह—यद्—यस्मात्कारणात्ततः—ऋषभजिनात् उत्थानमुत्पत्तिर्मरीचेः, इदमुक्तं भवति—मरीचेरिहोत्पत्तिरानेतव्या, न चासौ ऋषभदेवसमुत्था-

नेऽवर्णितेऽभिहिताऽपि सम्यगवधार्यते इति (ऋषभ)जिनसमुत्थानमिह प्रकृतं, ननु स्यादेवं यदि मरीचेरप्युत्पत्त्या किञ्चिदिह प्रयोजनं स्यात् तच्च नास्त्यऽसम्बन्धत्वात्तस्या इत्याह—यद्यस्मात् कारणादेष सर्वोऽपि पूर्वं षड्विधनिर्गमस्वरूपप्रतिपादनादारभ्य सामायिकस्य कुतः पुरुषद्रव्यादिदं निर्गतं, सोऽपि च पुरुषः कथं मिथ्यात्वादिभ्यो निर्गत इत्येवंरूपो निर्गमोऽधिकृतः, तेन मरीच्युत्पत्तिः प्रयोजनवती, यदि नाम सामायिकस्य निर्गमोऽधिकृतस्तर्हि मरीच्युत्पत्तेः किमायातं?, सत्यं, एतदुक्तं भवति—सामायिकाध्ययनं ह्येतत्, ततस्तस्य द्रव्यनिर्गमे विचार्यमाणे कुतो द्रव्यादिदं निर्गतमिति जिज्ञासिते महावीरद्रव्यादि वक्तव्यं, महावीरोऽपि कथं मिथ्यात्वादिभ्यो निर्गत इति बुभुत्सिते महावीरोत्पत्तिर्वक्तव्या, न चासौ मरीच्युत्थानकथनमन्तरेण अविकला कथिता स्यादिति मरीच्युत्थानं वक्तव्यं, तदपि च न ऋषभसमुत्थानकथनमन्तरेण सम्यक् कथयितुं शक्यते इति ऋषभजिनसमुत्थानस्य प्रकृतता, तच्च किञ्चिदुक्तं किञ्चिच्च 'चित्तबहुलट्ठमीए' इत्यादिनाऽनन्तरमेव वक्ष्यते ॥ ३१३ ॥

चित्तबहुलट्ठमीए, चउहि सहस्सेहि सो उ अवरण्हे । सीआ सुदंसणाए, सिद्धत्थवणंमि छट्ठेणं ॥ ३१४ ॥

चैत्रबहुलाष्टम्यां राज्ञां चतुर्भिः सहस्रैः समन्वितः सोऽपराह्ने शिबिकायां सुदर्शनायां व्यवस्थितः सिद्धार्थवने षष्ठेन भक्तेन निष्क्रान्त इति वाक्यशेषः, अलङ्कारं विमुच्य चतुर्मुष्टिकं लोचं कृत्वा, पञ्चममुष्टियोग्यान् किल केशान् भगवतः कनकावदाते शरीरेऽञ्जनरेखा इव राजमानानुपलभ्य शक्रेण विज्ञप्तं—भगवन्! मय्यनुग्रहं विधाय ध्रियन्तामेवामी, भगवतापि तदुपरोधात्तथैव कृतं, अत एवेदानीमपि स्कन्धोपरि वेल्लरिकाः क्रियन्ते इति भावः ॥ ३१४ ॥ चतुर्भिः सहस्रैः समन्वित इत्युक्तं, तेषां किं दीक्षां भगवान् दत्तवानुत नेत्यत्राह—

चउरो साहस्सीओ, लोअं काऊण अप्पणा चेव । जं एस जहा काही, तं तह अम्हेऽवि काहामो ॥ ३१५ ॥

चत्वारि सहस्राणि, सूत्रे स्त्रीत्वं प्राकृतत्वात् लोचमात्मनैव पञ्चमुष्टिकं लोचं कृत्वा इत्थं प्रतिज्ञां कृतवन्तः—यत्क्रियानुष्ठानमेष भगवान् यथा—येन प्रकारेण करिष्यति तत्तथा वयमपि करिष्यामः, भगवानपि भुवनगुरुत्वात् स्वयमेव सामायिकं प्रतिपद्य विजहार ॥ ३१५ ॥

उसभो वरवसभगई, घित्तूणमभिग्गहं परमघोरं । वोसट्ठचत्तदेहो, विहरइ गामाणुगामं तु ॥ ३१६ ॥

ऋषभो वृषभसमागतिः गृहीत्वाऽभिग्रहं परमघोरं, परमः परमसुखहेतुभूतत्वात्, घोरः प्राकृतपुरुषैः कर्त्तुमशक्यत्वात्, व्युत्सृष्टत्यक्तदेहो विहरति ग्रामानुग्रामं तु, व्युत्सृष्टो निष्प्रतिकर्म्मशरीरतया, त्यक्तः खलु दिव्याद्युपसर्गसहिष्णुतया, भगवानपि तैरात्मीयैः परिवृतो विजहार, न च तदा अद्यापि भिक्षादानं प्रवर्त्तते, लोकस्य परिपूर्णत्वादर्थ्यभावाच्च ॥ ३१६ ॥ तथा चाह मूलभाष्यकारः—

णवि ताव जणो जाणइ का भिक्खा ? केरिसा व भिक्खयरा ? ।
ते भिक्खमलभमाणा, वणमज्झे तावसा जाया ॥ ३१ ॥ (भाष्यम्)

नापि तावज्जनो जानाति यथा—का भिक्षा ? कीदृशा वा भिक्षाचराः ? इत्यतस्ते भगवत्परिवारभूता भिक्षामलभमानाः क्षुत्परीषहार्त्ताः भगवतो मौनव्रतावस्थितादुपदेशमनाकर्ण्णयन्तः कच्छमहाकच्छावेवमुक्तवन्तः—अस्माकमनाथानां भवन्तौ नेतारौ अतः कियन्तं कालमस्माभिः क्षुत्पिपासोपगतैरासितव्यं, ? तावाहतुः वयमपि तावन्न विद्मः, यदि भगवाननागतमेव

पृष्टोऽभवत्किमस्माभिः कर्त्तव्यं किं वा नेति ततः शोभनं भवेत्, इदानीं त्वेतावद्युज्यते–भरतलज्जया गृहगमनमयुक्तं, आहारमन्तरेण चासितुं न शक्यते, ततो वनवासो नः श्रेयान्, तत्रोपवासरताः परिशटितपरिणतपत्राद्युपभोगिनो भगवन्तमेव ध्यायन्तस्तिष्ठाम इत्येवं सम्प्रधार्य सर्वसम्मतेनैव गङ्गानदीदक्षिणकूले रम्येषु वनेषु वल्कलचीवरधारिणः वनमध्ये तापसा जाताः। तयोश्च कच्छमहाकच्छयोः सुतौ नमिविनमी पित्रनुरागात्ताभ्यां सह विहृतवन्तौ, तौ च वनाश्रयकाले ताभ्यामुक्तौ–दारुणः खलु इदानीमस्माभिर्वनवासविधिरङ्गीकृतस्तद्यात यूयं स्वगृहाणि यदि वा भगवन्तमेवोपसर्प्पत, स चानुकम्पयाऽभिलषितफलदो भविष्यति, तावपि च पित्रोः प्रणामं कृत्वा पित्रादेशं तथैव कृतवन्तौ, भगवत्समीपमागत्य प्रतिमास्थिते भगवति जलाशयेभ्यो नलिनीपत्रेषूदकमानीय सर्वतः प्रवर्षणं कृत्वा आजानूच्छ्रयमानं सुगन्धिकुसुमप्रकरं कृत्वा अवनतोत्तमाङ्गौ क्षितिनिहितजानुकरतलौ प्रतिदिवसमुभय ( सं त्रि ) सन्ध्यं राज्यसंविभागप्रदानेन विज्ञप्य पुनस्तदुभयपार्श्वे खड्गव्यग्रहस्तौ तस्थतुः ॥ ३१ ॥ तथा चाह निर्युक्तिकारः–

नमिविनमीणं जायण, नागिंदो विज्जदाण वेअड्ढे। उत्तरदाहिणसेढी, सट्ठीपण्णासनगराइं ॥ ३१७ ॥

नमिविनम्योर्याचना, नागेन्द्रो भगवद्वन्दनायागतः, तेन पठितसिद्धाष्टचत्वारिंशत्सहस्रविद्यादानमनुष्ठितं, वैताढ्ये उत्तरदक्षिणश्रेण्योर्यथाक्रमं षष्टिः पञ्चाशच्च नगराणि निवेशितानि, भावार्थः कथानकादवसेयः ॥ ३१७ ॥

भगवं अदीणमणसो, संवच्छरमणसिओ विहरमाणो। कण्णाहि निमंतिज्जइ, वत्थाभरणासणेहिं च ॥ ३१८ ॥

भगवानप्यदीनमनाः–निष्प्रकम्पचित्तः संवत्सरं–वर्षमनशितो निराहारो विहरन्, भिक्षाप्रदानानभिज्ञेन लोकेनाभ्यर्हित-

त्वात् कन्याभिर्निमन्त्र्यते वस्त्राभरणासनैश्च ॥ ३१८ ॥ अथ कियता कालेन भिक्षा लब्धेत्याह—

**संवच्छरेण भिक्खा, लद्धा उसभेण लोगनाहेण । सेसेहि बीयदिवसे, लद्धाओ पढमभिक्खाओ ॥ ३१९ ॥**

संवत्सरेण भिक्षा लब्धा ऋषभेन लोकनाथेन, शेषैः—अजितादिभिर्द्वितीयदिने लब्धा प्रथमभिक्षा ॥ ३१९ ॥ अथ यद्यस्य पारणकमासीत्तदाह—

**उसभस्स उ पारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमण्णं, अमयरसरसोवमं आसी ॥३२०॥**

ऋषभस्य त्विक्षुरसः प्रथमपारणके आसीत् लोकनाथस्य, शेषाणामजितादीनां परमान्नं—पायसं, किंविशिष्टं ?, अमृतरसवत् रसोपमा यस्य तदमृतरसरसोपममासीत् ॥ ३२० ॥ तीर्थकृतां प्रथमपारणके यद्वृत्तं तदाह—

**घुट्ठं च अहोदाणं, दिव्वाणि अ आहयाणि तूराणि । देवा य संनिवइआ, वसुहारा चेव वुट्ठा य ॥ ३२१ ॥**

देवैराकाशस्थितैर्घुष्टं यथा—अहोदानं अहोदानं, अहो विस्मये, एवं दीयते, दिव्यानि तूराणि त्रिदशैराहतानि, देवाश्च सन्निपतितास्तदैव, वसुधारानिपातार्थमाकाशं जृम्भका देवाः समागताः, वसुधारा चैव वृष्टा, द्रव्यवृष्टिरभूदित्यर्थः ॥ ३२१ ॥

अथ [ यत्र ] यथा [ च ] आदितीर्थकरस्य पारणकमासीत्तदाह—

**गयउर सिज्जंसिक्खुरसदाण वसुहार पीढ गुरुपूआ । तक्खसिलायलगमणं, बाहुबलिनिवेअणं चेव ॥३२२॥**

गजपुरं नगरमासीत्, तत्र बाहुबलिसूनुसोमप्रभराज्ञः पुत्रः श्रेयांसः, तेनेक्षुरसदानं भगवते दत्तं, तत्रार्द्धत्रयोदशहिरण्यकोटीपरिमाणा वसुधारा निपतिता, 'पीढ'मिति यत्र भगवता पारितं तत्र तत्पादयोर्मा कश्चिदाक्रमणं कार्षीदिति श्रेयांसेन भक्त्या

रत्नमयं पीठं कारितं, गुरुपूजेति–तदर्चनं कृतवान्, कालेन लोकैस्तदादित्यमण्डलं कृतं, भगवतस्तक्षशिलातले गमनं बभूव, तत्प्रवृत्तिनियुक्तपुरुषैस्तु बाहुबलिने निवेदनं कृतं, एतच्चाग्रे भावयिष्यते ॥ ३२२ ॥ शेषतीर्थकराणामपि येषु स्थानेषु प्रथमपारणकान्यासंस्तान्याह–

हत्थिणउरं अओज्झा, सावत्थी तह्य चेव साकेअं । विजयपुर बंभथलयं, पाडलिसंडं पउमसंडं ॥ ३२३ ॥

ऋषभस्य प्रथमभिक्षास्थानं हस्तिनागपुरं १, एवमजितादीनां यथाक्रमं अयोध्या २, श्रावस्ती ३, साकेतं ४, विजयपुरं ५, ब्रह्मस्थलं ६, पाटलिखण्डं ७, पद्मखण्डं ८ ॥ ३२३ ॥

सेयपुरं रिट्ठपुरं, सिद्धत्थपुरं महापुरं चेव । धण्णकड वद्धमाणं, सोमणसं मंदिरं चेव ॥ ३२४ ॥

श्रि(श्रे)यःपुरं ९, रिष्टपुरं १०, सिद्धार्थपुरं ११, महापुरं १२, धान्यकरं १३, वर्द्धमानं १४, सौमनसं १५, मन्दिरपुरं १६ ॥ ३२४ ॥

चक्कपुरं रायपुरं, मिहिला रायगिहमेव बोद्धव्वं । वीरपुरं बारवई, कोअगडं कोल्लयग्गामो ॥ ३२५ ॥

चक्रपुरं १७, राजपुरं १८, मिथिला १९, राजगृहं २०, वीरपुरं २१, द्वारावती २२, कोव(प)कडं २३, कुल्लक(कोल्लाक)ग्रामः ॥ ३२५ ॥

एएसु पढमभिक्खा, लद्धाओ जिणवरेहिं सव्वेहिं । दिण्णाउ जेहिं पढमं, तेसिं नामाणि वोच्छामि ॥ ३२६ ॥

एतेषु स्थानेषु प्रथमभिक्षा लब्धा यथाक्रमं सर्वैर्जिनैः, यैः प्रथमं भिक्षा दत्ता तेषां नामानि यथाक्रमं वक्ष्ये ॥ ३२६ ॥

जिनपारणकानां स्थानानि
नि० गा० ३२३-३२५

सिज्जंस बंभदत्ते, सुरेंददत्ते य इंददत्ते अ। पउमे अ सोमदेवे, महिंद तह सोमदत्ते अ ॥ ३२७ ॥

ऋषभाय श्रेयांसः प्रथमभिक्षां दत्तवान् १, एवं ब्रह्मदत्तः २, सुरेन्द्रदत्तः ३, इन्द्रदत्तः ४, पद्मः ५, सोमदेवः ६, महेन्द्रः ७, सोमदत्तः ८ ॥ ३२७ ॥

पुस्से पुणवसू पुण नंद सुनंदे जए अ विजए य। तत्तो अ धम्मसीहे, सुमित्त तह वग्घसीहे अ ॥ ३२८ ॥

पुष्यः ९, पुनर्वसुः १०, नन्दः ११, सुनन्दः १२, जयः १३, विजयः १४, धर्मसिंहः १५, सुमित्रः १६, व्याघ्रसिंहः १७ ॥ ३२८ ॥

अपराजिअ विस्ससेणे, वीसइमे होइ बंभदत्ते अ। दिण्णे वरदिण्णे पुण, धण्णे बहुले अ बोद्धव्वे ॥ ३२९ ॥

अपराजितः १८, विश्वक्सेनः १९, विंशतितमो ब्रह्मदत्तः २०, दिन्नः २१, वरदिन्नः २२, धन्यः २३, बहुलः २४ ॥

एए कयंजलिउडा, भत्तीबहुमाणसुक्कलेसागा। तक्कालपहट्ठमणा, पडिलाभेसुं जिणवरिंदे ॥ ३३० ॥

एते श्रेयांसप्रभृतयः कृताञ्जलिपुटाः भक्तिः—उचितप्रतिपत्त्या विनयकरणं बहुमानः—आन्तरप्रीतिस्ताभ्यां शुक्ला—अतीव शोभना लेश्या—परिणामविशेषो येषां ते भक्तिबहुमानशुक्ललेश्याकाः, तत्कालं—तस्मिन् काले प्रहृष्टमनो येषां ते यथाक्रमं ऋषभादीन् जिनवरेन्द्रान् प्रतिलाभितवन्तः ॥ ३३० ॥

सव्वेहिंपि जिणेहिं, जहिअं लद्धाओ पढमभिक्खाओ। तहिअं वसुहाराओ, वुट्ठाओ पुप्फवुट्ठीओ ॥ ३३१ ॥

सर्वैरपि जिनैर्यत्र प्रथमभिक्षा लब्धास्तत्र वसुधाराः—हिरण्य[पात]रूपा वृष्टाः, पुष्पवृष्टयश्च ॥ ३३१ ॥ वसुधाराणां जघन्यत

जिनप्रथम-
भिक्षा-
दातार-
नामानि
नि० गा०
३२६-
३३०

उत्कर्षतश्च परिमाणमाह—

अद्धतेरसकोडी, उक्कोसा तत्थ होइ वसुहारा । अद्धतेरस लक्खा, जहण्णिआ होइ वसुहारा ॥ ३३२ ॥

सार्द्धद्वादशहिरण्यानां कोटय उत्कृष्टा, सार्द्धानि द्वादश हिरण्यानां लक्षाणि जघन्या ॥ ३३२ ॥ अथ यैः प्रथमभिक्षा दत्ता ते किम्भूता अभवन्नित्याह—

सव्वेसिंपि जिणाणं, जेहिं दिण्णाउ पढमभिक्खाओ । ते पयणुपिज्जदोसा, दिव्ववरपरक्कमा जाआ ॥ ३३३ ॥

केई तेणेव भवेव, निव्वुआ सव्वकम्मउम्मुक्का । अन्ने तइअभवेणं, सिज्झिस्संति जिणसगासे ॥ ३३४ ॥

सुगमे ॥ ३३३ ॥ ३३४ ॥ अथ पूर्वोक्तं निर्वाहयति—

कल्लं सविड्ढीए, पूएमहऽदट्ठु धम्मचक्कं तु । विहरइ सहस्समेगं, छउमत्थो भारहे वासे ॥ ३३५ ॥

बहलीअडंबइल्लाजोणगविसओ सुवण्णभूमी अ । आहिंडिआ भगवआ, उसभेणं तवं चरंतेणं ॥ ३३६ ॥

बहली अ जोणगा, पण्हगा य जे भगवया समणुसिट्ठा । अन्ने य मिच्छजाई, ते तइआ भद्दया जाया ॥ ३३७ ॥

कल्ये–प्रगे सर्वर्द्ध्या पूजयाम्यहं, प्रातर्गतोऽदृष्ट्वा भगवन्तं तत्पदभूमौ धर्मचक्राख्यं चक्रं कारितवान्, तच्च सर्वरत्नमय-पञ्चयोजनोच्छ्रितदण्डस्योपरि सर्वरत्नमयं सहस्रारं योजनायामविष्कम्भं वृत्ताकारं, चूर्णौ तु चक्रस्यैतदेव मानं दण्डस्तु योजनोच्छ्रय एवोक्तः, लघु वृत्तोच्छ्रितं योजनशतं विष्कम्भोऽष्ट योजनानां ॥ ३३५–३३७ ॥

तित्थयराणं पढमो, उसभसिरी विहरिओ निरुवसग्गो । अट्ठावओ णगवरो, अग्गभूमी जिणवरस्स ॥३३८॥

छउमत्थप्परिआओ, वाससहस्सं तओ पुरिमताले। णग्गोहस्स य हेट्ठा, उप्पण्णं केवलं नाणं ॥ ३३९ ॥

सुगमे 'उसभसिरी'त्ति श्रीऋषभः अग्र्या-प्रधाना निर्वाणप्राप्त्या भूमिरग्र्यभूमिः ॥ ३३८ ॥ ३३९ ॥

फग्गुणबहुले एक्कारसीइ अह अट्ठमेण भत्तेणं । उप्पण्णंमि अणंते, महव्वया पंच पण्णवए ॥ ३४० ॥

सुगमे ॥ ३४० ॥ महाव्रतानि पञ्च प्रज्ञापयतीत्युक्तं, तानि च त्रिदशकृतसमवसरणावस्थित एव, तथा चाह—

उप्पण्णंमि अणंते, नाणे जरमरणविप्पमुक्कस्स । तो देवदाणविंदा, करिंति महिमं जिणिंदस्स ॥ ३४१ ॥

उत्पन्ने-घातिकर्मचतुष्टयक्षयात्सञ्जातेऽनन्ते ज्ञाने, केवले इत्यर्थः, जरामरणाभ्यां विप्रमुक्तवद्विप्रमुक्तस्तस्य, ततो देव-दानवेन्द्राः कुर्वन्ति महिमां-ज्ञानपूजां जिनेन्द्रस्य, देवेन्द्रग्रहणाद्वैमानिकज्योतिष्कपरिग्रहः, दानवेन्द्रग्रहणाच्च भवनवासिव्यन्तर-ग्रहणं, सर्वतीर्थकृतां च देवा अवस्थितानि नखलोमानि कुर्वन्ति ॥ ३४१ ॥ अथोक्तानुक्तार्थसङ्ग्रहगाथामाह—

उज्जाणपुरिमताले, पुरी[इ] विणीयाइ जत्थ नाणवरं । चक्कुप्पाया य भरहे निवेअणं चेव दोण्हंपि ॥ ३४२ ॥

आउहवरसालाए, उप्पण्णं चक्करयण भरहस्स । जक्खसहस्सपरिवुडं, सव्वरयणामयं चक्कं ॥ १ ॥ (प्र. अन्या.)

उद्यानं च तत्पुरिमतालं च, अत्यासन्नत्वाद्विनीतायाः पुर्या उद्यानस्थानीयं पुरिमतालनगरं सम्प्राप्तः, तत्रेशानस्थशकट-मुखोद्याने न्यग्रोधपादपस्याधस्ताद्भगवत उत्पन्नं ज्ञानवरं केवलं, तस्मिन्नेवाहनि भरतनृपतेरायुधशालायां चक्रोत्पादश्च बभूव । भरताय निवेदनं च द्वयोरपि-ज्ञानचक्रयोस्तन्नियुक्तपुरुषैः कृतं ॥ ३४२ ॥ इयं गाथाऽन्यकर्तृकी अन्याख्याता च ॥ १ ॥ अथ भरतश्चिन्तयामास-पूजा तावद् द्वयोरपि कार्या, कस्य प्रथमं कर्तुं युज्यते?, तत्र—

तायंमि पूइए, चक्क पूइअं पूअणारिहो ताओ ।- इहलोइअं तु चक्कं परलोअसुहावहो ताओ ॥ ३४३ ॥

ताते पूजिते सति चक्रं पूजितमेव, तत्पूजानिबन्धनत्वाच्चक्रस्य, पूजामर्हतीति पूजार्हस्तातो वर्त्तते देवेन्द्रादिनुतत्वात्, इहलौकिकं तु चक्रं, तुरेवार्थः, परलोकसुखावहस्तातः, शिवसुखहेतुत्वात् [ तत्पूजाकरणसन्देशव्यापृतो बभूव ] ॥ ३४३ ॥ तस्मात्तिष्ठतु तावच्चक्रं, तातस्य पूजां कर्त्तुं युज्यते' इति सम्प्रधार्य—

सह मरुदेवीइ निग्गओ, कहणं पव्वज्ज उसभसेणस्स । बंभीमरीइदिक्खा, सुंदरी ओरोह सुअदिक्खा ॥ ३४४ ॥

भरतो मरुदेव्या सह भगवद्वन्दनार्थं गतः, मरुदेव्यै प्रभुऋद्धिकथनं धर्म्मकथनं वा, ऋषभसेनो (नस्य) भरतपुत्रस्य प्रव्रज्या, ब्राह्मीमरीचिदीक्षा, सुन्दर्या अवरोधार्थं धारणं, सा श्राविका जाता, सुतदीक्षा ॥ ३४४ ॥

पंच य पुत्तसयाइं, भरहस्स य सत्त नत्तूअसयाइं । सयराहं पव्वइआ, तंमि कुमारा समोसरणे ॥ ३४५ ॥
भवणवइवाणमंतरजोइसवासी विमाणवासी अ । सव्विढ्ढिइ सपरिसा, कासी नाणुप्पायमहिमं ॥ ३४६ ॥

पञ्च पुत्रशतानि भरतस्य, सप्त नप्तृशतानि पौत्रशतानीत्यर्थः, 'सयराहं' देशीवचनं युगपदर्थाभिधायकं, तस्मिन् समवसरणे कुमाराः प्रव्रजिताः ॥ ३४५ ॥ सुगमा ॥ ३४६ ॥

दट्ठूण कीरमाणिं, महिमं देवेहि खत्तिओ मरिई । सम्मत्तलद्धबुद्धी, धम्मं सोऊण पव्वइओ ॥ ३४७ ॥
मागहवरदामपभास-सिंधुखंडप्पवायतमिसगुहा । सट्ठिं वाससहस्से, ओअविउं आगओ भरहो ॥१॥ (प्र० अ०)

मरीचिरिति जातमात्रो मरीचीन् मुक्तवानिति मरीचिमान् मरीचिरभेदोपचारान्मतुल्लोपाद्वा, सामान्यकुमारदीक्षाभिधाने सत्यपि मरीचेर्विशेषाभिधानं प्रकृतोपयोगित्वात्, सम्यक्त्वेन लब्धा-प्राप्ता बुद्धिर्यस्य सः ॥ ३४७ ॥ इयं गाथाऽव्याख्याता हारिभद्रीयवृत्तौ, 'ओअविउं' साधयित्वा ॥ १ ॥

मागहमाई विजयो सुंदरिपवज्ज बारसभिसेओ । आणवण भाउगाणं समुसरणे पुच्छ दिट्ठंतो ॥ ३४८ ॥

मागधमादौ यस्य स मागधादिर्विजयो भरतेन कृतः, विजयं कुर्वता च क्षुल्लहिमवदेवसाधनानन्तरं ऋषभकूटे हिमवदधोभागवर्तिनि स्वनाम लिखितमनेन गाथाद्वयेन 'ओसप्पिणीइमीसे तइआइ समाइ पच्छिमे भागे । अहयंसि चक्कवट्टी भरहुत्ति अ नामधिज्जेणं ॥ १ ॥ अहयंसि पढमराया इहइं भरहाहिवो नरवरिंदो । नत्थि ममं पडिसत्तू जिअं मए भारहं वासं ॥ २ ॥' इति । पुनरागतेन सुन्दरी अवरोधस्थिता दृष्टा, क्षीणत्वात् मुक्ता, प्रव्रज्या दापिता, द्वादश वर्षाण्यभिषेकः कृतो भरताय (तस्य)। आज्ञापनं भ्रातृणां चकार, तेऽपि समवसरणे भगवन्तं पृष्टवन्तः, भगवता चाङ्गारकदाहकदृष्टान्तो गदितः, वैतालिकाख्यं सूत्रकृताङ्गद्वितीयाध्ययनं प्ररूपितं, तेऽष्टानवतिरपि प्रव्रजिताः ॥ ३४८ ॥

बाहुबलिकोवकरणं निवेअणं चक्कि देवया कहणं । नाहम्मेणं जुज्झे दिक्खा पडिमा पइण्णा य ॥ ३४९ ॥
पढमं दिट्ठीजुद्धं वायाजुद्धं तहेव बाहाहिं । मुट्ठीहि अ दंडेहि अ सव्वत्थवि जिप्पए भरहो ॥ ३२ ॥ (भाष्यम्)
सो एव जिप्पमाणो विहुरो अह नरवई विचिंतेइ । किं मन्नि एस चक्की ? जह दाणी दुब्बलो अहयं ॥ ३३ ॥ भा०
ताहे चक्कं मणसी करेइ पत्ते अ चक्करयणंमि । बाहुबलिणा य भणिअं धिरत्थु रज्जस्स तो तुज्झ ॥ १ ॥ (प्र० अ०)

सुन्दर्या अष्टानवतेभ्रातॄणां च दीक्षा भरत-बाहुबलि-युद्धं च
नि० गा० ३४८-३४९
भा० गा० ३२-३३

चिंतेइ य सो मज्झं सहोअरा पुव्वदिक्खिया नाणी। अहयं केवलिहोउं वच्चहामि ठिओ पडिमं ॥ २ ॥ (प्र०)

भरतसन्देशाकर्णने सति बाहुबलिनः कोपकरणं, तन्निवेदनं दूतेन कृतं भरताय, युद्धे जीयमानेन किमयं चक्रवर्त्ती न त्वहं इति चिन्तयतो देवता आगता, त्वं चक्रीति कथनं, स्मृतचक्रे आयाते, बाहुबलिनाऽचिन्ति–अलं मे राज्येनेति, नाऽधर्मेण युद्ध्यामीति, दीक्षा तेन गृहीता, अनुत्पन्नज्ञानः कथमहं ज्यायान् कनीयसो द्रक्ष्यामीत्यभिसन्धानात्प्रतिमा–कायोत्सर्गः कृतः प्रतिज्ञा च कृता–न इतोऽनुत्पन्नज्ञानो यास्यामीति निर्युक्तिगाथार्थः ॥ ३४९ ॥ इयं भाष्यगाथा व्याख्याताऽग्रेतनाप्येका तथैव, तयोर्भरतबाहुबलिनोः प्रथमं दृष्टियुद्धमभूत्, पुनर्वाग्युद्धं, तथैव बाहुभ्यां मुष्टिभिश्च दण्डैश्च, सर्वत्रापि–सर्वेषु युद्धेषु जीयते, भरतः ॥ ३२ ॥ स एवं जीयमानो विधुरोऽथ नरपतिर्विचिन्तितवान्–किमेष चक्रवर्त्ती ? यथेदानीं दुर्बलोऽहमिति ॥ ३३ ॥ [प्रक्षिप्त] गाथाद्वयमन्यकर्तृकमव्याख्यातं च ॥ १–२ ॥

संवच्छरेण धूअं अमूढलक्खो उ पेसए अरिहा। हत्थीओ ओयरत्ति अ वुत्ते चिंता पए नाणं ॥ ३४ ॥
उप्पण्णनाणरयणो तिण्णपइण्णो जिणस्स पामूले। गंतुं तित्थं नमिउं केवलिपरिसाइ आसीणो ॥ ३५ ॥
काऊण एगछत्तं भरहोऽवि अ भुंजए विउलभोए। मरिईवि सामिपासे विहरइ तवसंजमसमग्गो ॥ ३६ ॥
सामाइअमाईअं इक्कारसमाउ जाव अंगाउ। उज्जुत्तो भत्तिगतो अहिज्जिओ सो गुरुसगासे ॥ ३७ ॥ (भाष्यम्)

['संव०'] इत्यादिगाथाचतुष्टयं भाष्यगं व्याख्यातं, कायोत्सर्गावस्थिते भगवति बाहुबलिनि संवत्सरेण, 'धूअं'ति दुहितरममूढलक्षस्तु प्रेषितवानर्हन्नादितीर्थकरः, 'हस्तिनः अवतरत' इति चोक्ते चिन्ता तस्य जाता, यामीति सम्प्रधार्य 'पदे' इति पदो-

त्क्षेपे ज्ञानमुत्पन्नं ॥३४॥ उत्पन्नज्ञानरत्नस्तीर्णप्रतिज्ञो जिनस्य पादमूले केवलिपर्षदं गत्वा तीर्थं नत्वा आसीनः ॥३५॥ अत्रान्तरे— कृत्वा एकच्छत्रं भुवमिति शेषः, भरतोऽपि च भुङ्क्ते विपुलभोगान्, मरीचिरपि स्वामिपार्श्वे विहरति तपःसंयमसमग्रः ॥ ३६ ॥ स च सामायिकादिकमेकादशमङ्गं यावत् उद्युक्तः क्रियायां भक्तिगतो भगवति श्रुते वा अधीतवान् स गुरुसकाशे ॥ ३७ ॥

अह अण्णया कयाई गिम्हे उण्हेण परिगयसरीरो। अण्हाणएण चइओ इमं कुलिंगं विचिंतेइ ॥ ३५० ॥

अथेत्यानन्तर्ये कदाचिद्–एकस्मिन् काले ग्रीष्मे उष्णेन परिगतशरीरः अस्नानेनेति–अस्नानपरीषहेण त्याजितः संयमात् एतत्कुलिङ्गं–वक्ष्यमाणं विचिन्तयति ॥ ३५० ॥

मेरुगिरीसमभारे न हुमि समत्थो मुहुत्तमवि वोढुं। सामण्णए गुणे गुणरहिओ संसारमणुकंखी ॥ ३५१ ॥

मेरुगिरिसमो भारो येषां ते तथाविधास्तान्नैव समर्थो मुहूर्त्तमपि वोढुं, श्रमणानामेते श्रामणाः, के ते ?–गुणाः–विशिष्ट-क्षान्त्यादयस्तान्, कुतो ?, यतो धृत्यादिगुणरहितोऽहं संसारानुकाङ्क्षीति ॥ ३५१ ॥ किं मम युज्यते ?, गृहस्थत्वं तावदनुचितं, श्रमणगुणानुपालनमप्यशक्यं—

एवमणुचिंतंतस्स तस्स निअगा मई समुप्पण्णा। लद्धो मए उवाओ जाया मे सासया बुद्धी ॥ ३५२ ॥

'एव'मुक्तेन प्रकारेणानुचिन्तयतस्तस्य निजा मतिः समुत्पन्नाः, स ह्येवं चिन्तयामास–लब्धो मया वर्त्तमानकालोचितः खलूपायो, जाता मम शाश्वती बुद्धिः, शाश्वतेत्याकालिकी, प्रायो निरवद्यजीविकाहेतुत्वात् ॥ ३५२ ॥ यदुक्तमिदं कुलिङ्गम-चिन्तयत्तदाह—

समणा तिदंडविरया भगवंतो निहुअसंकुइअअंगा। अजिइंदिअदंडस्स उ होउ तिदंडं महं चिंधं ॥ ३५३ ॥

श्रमणा मनोवाक्कायलक्षणत्रिदण्डविरताः ऐश्वर्यादि[भग]योगाद्भगवन्तः, निभृतानि–अन्तःकरणान्यशुभव्यापारपरित्यागात्, सङ्कुचितानि-अशुभकायव्यापारपरित्यागादङ्गानि येषां ते तथा, अहं तु नैवंविधो, यतः न जितानीन्द्रियाणि–चक्षुरादीनि दण्डाश्च–चित्ताद्या येन स अजितेन्द्रियः, तस्याजितेन्द्रियदण्डस्य तु भवतु त्रिदण्डं मम चिह्नम–विस्मरणार्थं ॥ ३५३ ॥

लोइंदिअमुंडा संजया उ अहयं खुरेण ससिहो अ। थूलगपाणिवहाओ वेरमणं मे सया होउ ॥ ३५४ ॥

मुण्डो द्विधा–द्रव्यतो भावतश्च, तत्रैते श्रमणा द्रव्यभावमुण्डाः, कथं ? लोचेनेन्द्रियैश्च मुण्डाः संयतास्तु, अहं पुनर्नेन्द्रिय-मुण्डः, यतः अलं द्रव्यमुण्डतया, तस्मादहं क्षुरेण मुण्डः सशिखश्च भवामि, सर्वप्राणिवधविरताश्च श्रमणाः, अतः स्थूलप्राणातिपाताद्विरमणं मे सदा भवतु ॥ ३५४ ॥

निक्किंचणा य समणा अकिंचणा मज्झ किंचणं होउ। सीलसुगंधा समणा अहयं सीलेण दुग्गंधो ॥ ३५५॥

निर्गतं किञ्चनं–हिरण्यादि येभ्यस्ते निष्किञ्चनाश्च श्रमणाः, तथाऽविद्यमानं किञ्चनमल्पमपि येषां तेऽकिञ्चना जिनकल्पिकादयः, अहं तु नैवंविधो अतो मार्गाविस्मृत्यर्थं मम किञ्चनं भवतु पवित्रिकादि। तथा शीलेन शोभनो गन्धो येषां ते तथा, अहं तु शीलेन दुर्गन्धः अतो गन्धचन्दनग्रहणं मे युक्तं ॥ ३५५ ॥

ववगयमोहा समणा मोहच्छण्णस्स छत्तयं होउ। अणुवाहणा य समणा मज्झं तु उवाहणा होन्तु ॥ ३५६ ॥

व्यपगतो मोहो येषां ते तथा श्रमणाः, अहं तु नेत्थमतो मोहाच्छादितस्य च्छत्रकं भवतु, अनुपानत्काश्च श्रमणाः, मम चोपानहौ भवतः ॥ ३५६ ॥

सुक्कंबरा य समणा निरंबरा मज्झ धाउरत्ताइं । हुंतु इमे वत्थाइं अरिहो मि कसायकलुसमई ॥ ३५७ ॥

शुक्लान्यम्बराणि येषां ते शुक्लाम्बराः श्रमणाः, निरम्बरा—जिनकल्पिकादयः, एते श्रमणा इत्यनेन तत्कालोत्पन्नतापसश्रमणव्युदासः, धातुरक्तानि भवन्तु मम वस्त्राणि, अर्होऽस्मि—योग्योऽस्मि तेषामेव, कषायैः कलुषा मतिर्यस्य सोऽहं कषायकलुषमतिः ॥ ३५७ ॥

वज्जंतऽवज्जभीरु बहुजीवसमाउलं जलारंभं । होउ मम परिमिएणं जलेण ण्हाणं च पिअणं च ॥ ३५८ ॥

वर्जयन्त्यवद्यभीरवो बहुजीवसमाकुलं जलारम्भं, तत्रैव वनस्पतेरवस्थानात् अवद्यं—पापं, अहं तु नेत्थमतो भवतु मम परिमितेन जलेन स्नानं च पानं च ॥ ३५८ ॥

एवं सो रुइअमई निअगमइविगप्पिअं इमं लिंगं । तद्धितहेउसुजुत्तं पारिव्वज्जं पवत्तेइ ॥ ३५९ ॥

स्थूलमृषावादादिनिवृत्तः, एवमसौ रुचिता मतिर्यस्य स रुचितमतिः, निजमत्या विकल्पितं निजमतिविकल्पितं, इदं लिङ्गं, किंविशिष्टं?, तस्य हितास्तद्धितास्ते च(श्च) ते हेतवश्च, तैः सुष्ठु युक्तं—श्लिष्टमित्यर्थः, परिव्राजामिदं पारिव्राजं(व्रज्यं) प्रवर्त्तयति, शास्त्रकारवचनत्वा(ना)द्वर्त्तमाननिर्देशोऽप्यविरुद्ध एव, पाठान्तरं वा 'पारिवज्जं तओ कासी' त्ति पारिव्राजं ततः कृतवान् ॥ ३५९ ॥ भगवता च सह विजहार तं च साधुमध्ये विजातीयं दृष्ट्वा कौतुकाल्लोकः पृष्टवान्, तथा चाह—

अह तं पागडरूवं दट्ठुं पुच्छेइ बहुजणो धम्मं । कहइ जईणं तो सो विआलणे तस्स परिकहणा ॥ ३६० ॥

अथ तं प्रकटरूपं विजातीयत्वात् दृष्ट्वा पृच्छति बहुजनः धर्म्मं, कथयति यतीनां सम्बन्धिभूतं क्षान्त्यादिलक्षणं ततोऽसाविति, लोका भणन्ति–यद्ययं श्रेष्ठो भवता किं नाङ्गीकृत इति विचारणे, तस्य परि–समन्तात् कथना परिकथना–'श्रमणास्त्रिदण्डविरता' इत्यादि, पृच्छतीति त्रिकालगोचरसूत्रप्रदर्शनार्थत्वादेवं निर्देशः, पाठान्तरं वा 'अह तं पागडरूवं दट्ठुं पुच्छिंसु बहुजणो धम्मं । कहती सुजईणं सो विआलणे तस्स परिकहणा' ॥ ३६० ॥

धम्मकहाअक्खित्ते उवट्ठिए देइ भगवओ सीसे । गामनगराइआइं विहरइ सो सामिणा सद्धिं ॥ ३६१ ॥

धर्मकथाक्षिप्तान् उपस्थितान् ददाति भगवतः शिष्यान्, ग्रामनगरादीन् विहरति स स्वामिना सार्द्धम् ॥ ३६१ ॥

समुसरण भत्त उग्गह अंगुलि झय सक्क सावया अहिआ । जेआ वड्ढइ कागिणिलंछण अणुसज्जणा अट्ठ ॥ ३६२ ॥
राया आइच्चजसो महाजसे अइबले अ बलभद्दे । बलविरिए कत्तविरिए जलविरिए दंडविरिए य ॥ ३६३ ॥

समवसरणं भगवतोऽष्टापदे खल्वासीत्, भक्तं भरतेनानीतं पञ्चभिः शकटैः तदग्रहणोन्माथिते सति भरते देवेशो भगवन्तमवग्रहं पृष्टवान्, कतिविधोऽवग्रहः ?, भगवानाह–पञ्चविधः, देवेन्द्रावग्रहः १, राजावग्रहः २, गृहपत्यवग्रहः ३, सागारिकावग्रहः ४, साधर्मिकावग्रहः ५, तत्र राजा भरताधिपः, गृहपतिर्माण्डलिको राजा, सागारिकः–शय्यातरः, साधर्मिकः संयतः, एषां चोत्तरोत्तरेण पूर्वः पूर्वो बाधितो द्रष्टव्यः यथा–राजावग्रहेण देवेन्द्रावग्रहो बाधित इत्यादि प्ररूपिते देवराडाह–भगवन् ! ये एते श्रमणा मदीयावग्रहे विहरन्ति तेषां मयावग्रहोऽनुज्ञात इत्येवमभिधायाभिवन्द्य च भगवन्तं तस्थौ, भरतोऽप्यचिन्तय-

दहमपि स्वावग्रहमनुजानामीत्येतावतापि नः कृतार्थता भवतु, भगवत्समीपेऽनुज्ञातोऽवग्रहः । ततो भरतेन देवलोकनिवासिरूप-पृच्छायां कृतायामिन्द्रेणाङ्गुलिर्दर्शिता, दृष्ट्वा च तां भरतोऽतीव मुमुदे, शक्राङ्गुलीं स्थापयित्वाऽष्टाह्निकां महिमां चक्रे । ततः प्रभृति ध्वजोत्सवः प्रवृत्तः, 'सक्क'त्ति भरतेन किमनेनाहारेण कार्यमिति पृष्टः शक्रोऽभिहितवान्–त्वदधिकेभ्यो दीयतामिति, पर्यालोचयता ज्ञातं श्रावका अधिकास्तेभ्यो दत्तं, उक्ताश्चैते–भवद्भिः प्रतिदिनं मदीयं भोक्तव्यं, कृष्यादि च न कार्यं, स्वाध्याय-परैरासितव्यं, भुक्ते च वक्तव्यं 'जेआ वड्ढइ'त्ति जितो भवान् वर्द्धते भयं तस्मान्मा हनेति, ते तथैव कृतवन्तः, भरतश्च रति-सागरावगाढत्वात्तच्छब्दाकर्णनोत्तरकालमेव केनाहं जित इति ?, आः ज्ञातं कषायैस्तेभ्य एव वर्द्धते भयमित्यालोचनापूर्वकं संवेगं यातवान्। अत्रान्तरे लोकबाहुल्यात्सूपकाराः पाकं कर्त्तुमशक्नुवन्तो भरताय निवेदितवन्तः–नेह ज्ञायते कः श्रावकः को वा नेति, लोकस्य प्रचुरत्वात्, आह भरतः–पृच्छापूर्वकं देयं, ततस्तान् पृष्टवन्तस्ते–को भवान् ?, श्रावकः, कति व्रतानि ?, स आह–श्रावकाणां न सन्ति व्रतानि, किन्त्वस्माकं पञ्चाणुव्रतानि सप्त शिक्षाव्रतानि, ये एवम्भूतास्ते राज्ञो निवेदिताः, स च काकिणी-रत्नेन लाञ्छनं–चिह्नं कृतवान् त्रिरेखां, पुनः षण्मासेन ये योग्या भवन्ति तानपि लाञ्छितवानेवं ब्राह्मणाः सञ्जाताः, ते च स्वसुतान् साधुभ्यो दत्तवन्तस्ते च प्रव्रज्यां चक्रुः, परीषहभीरवस्तु श्रावका आसन्, इयं च भरतराज्यस्थितिः । 'अणुसज्जणा अट्ठ'त्ति अष्टौ पुरुषान् यावदयं धर्म्मः प्रवृत्तः, अष्टौ वा तीर्थकरान् यावत्तत ऊर्द्ध्वं मिथ्यात्वमुपगताः । आदित्ययशसस्तु काकिणीरत्नं नासीदिति सुवर्णमयानि यज्ञोपवीतानि कृतवान्, महायशःप्रभृतयस्तु केचन रूप्यमयानि केचन पट्टसूत्रमयानीत्येवं यज्ञोपवीतप्रसिद्धिः ॥ ३६२ ॥ सुगमा ॥ ३६३ ॥

एएहिं अद्धभरहं सयलं भुत्तं सिरेण धरिओ अ। पवरो जिणिंदमउडो सेसेहिं न चाइओ वोढुं ॥ ३६४ ॥

एतैरर्द्धं भरतं सकलं भुक्तं, शिरसा धृतश्च प्रवरो जिनेन्द्रमुकुटो देवेन्द्रोपनीतः, शेषैर्नरपतिभिर्न शकितो वोढुं, महाप्रमाणत्वात् ॥ ३६४ ॥

अस्सावगपडिसेहो छट्ठे छट्ठे अ मासि अणुओगो। कालेण य मिच्छत्तं जिणंतरे साहुवोच्छेओ ॥ ३६५ ॥

अश्रावकाणां प्रतिषेधः कृतः, ऊर्द्धमपि षष्ठे षष्ठे मासेऽनुयोगः–परीक्षा बभूव, कालेन गच्छता मिथ्यात्वमुपगताः, कदा ?, नवमजिनान्तरे किमिति ?, यतस्तत्र साधुव्यवच्छेद आसीत् ॥ ३६५ ॥ अथोक्तानुक्तार्थप्रतिपादनाय सङ्ग्रहगाथामाह—

दाणं च माहणाणं वेए कासी अ पुच्छ निव्वाणं। कुंडा थूभ जिणहरे कविलो भरहस्स दिक्खा य ॥ ३६६ ॥

(मूलदारगाहा)

दानं च माहनानां लोको दातुं प्रवृत्तः, भरतपूजितत्वात्, आर्यान् वेदान् कृतवांश्च भरत एव, तत्स्वाध्यायनिमित्तं, तीर्थकरस्तुतिरूपान् श्रावकधर्मप्रतिपादकांश्च, अनार्यास्तु पश्चात्सुलसयाज्ञवलकादिभिः कृताः, 'पुच्छ' त्ति भरतो भगवन्तमष्टापदगतमेव पृष्टवान्–याहग्भूता यूयमेवंविधास्तीर्थकृतः कियन्तः खल्विह भविष्यन्तीत्यादि, भगवानष्टापदे निर्वाणं प्राप्तः, देवेन्द्रैरपि कुण्डानि कृतानि स्तूपाश्च, जिनगृहं भरतश्चकार, कपिलो मरीचिसकाशे निष्क्रान्तः, भरतस्य दीक्षा प्रवृत्तेति समुदायार्थः ॥ ३६६ ॥ अवयवार्थ उच्यते–आद्यावयवद्वयं व्याख्यातमेव, पृच्छावयवार्थमाह—

पुणरवि अ समोसरणे पुच्छीअ जिणं तु चक्किणो भरहे। अप्पुट्ठो अ दसारे तित्थयरो को इहं भरहे ? ॥३६७॥ (मूलदार०)

पुनरपि समवसरणे पृष्टवांश्च जिनं तु चक्रवर्त्ती भरतः, भाविनश्चक्रवर्त्तिन इत्युपलक्षणं तीर्थकृतश्चेति, भरतविशेषणं वा, चक्री भरत(भारतां)स्तीर्थकरादीन्, पाठान्तरं वा 'पुच्छी अ जिणे अ चक्किणो भरहे' पृष्टवान् जिनांश्चक्रवर्त्तिनश्च भरतः, चस्य व्यवहितः सम्बन्धः, भगवानपि तान् कथितवान्, तथा अपृष्टश्च दशारान्–वासुदेवबलदेवान्, तथा तीर्थकरः क इह भरते ?, भावितीर्थकृज्जीवः कोऽप्यस्यां पर्षद्यस्तीति, भगवानपि मरीचिं कथितवान् ॥ ३६८ ॥ तथा चाह निर्युक्तिकारः—

जिणचक्किदसाराणं वण्णपमाणाइं नामगोत्ताइं । आऊपुरमाइपियरो परियाय गइं च साहीअ ॥ ३६८ ॥ (दार०)

'जिनचक्रिदशाराणां' जिनचक्रवर्त्तिवासुदेवानामित्यर्थः, वर्णप्रमाणानि नामगोत्राणि आयुःपुराणि मातापितरौ यथासम्भवं पर्यायं गतिं च, चशब्दाज्जिनान्तराणि च 'साहीअ'त्ति द(शि)ष्टवानिति गाथासमासार्थः, अवयवार्थं तु वक्ष्यामः ॥ ३६८ ॥ तत्र प्रश्नत्रयमधिकृत्य तावदाह भाष्यकारः—

जारिसया लोअगुरू भरहे वासंमि केवली तुब्भे । एरिसया कइ अन्ने ताया ! होहिंति तित्थयरा ? ॥३८॥ (भाष्यम्)

याद्दशा लोकगुरवो भारते वर्षे केवलिनो यूयं, ईद्दशाः कियन्तोऽन्येऽत्रैव तात ! भविष्यन्ति तीर्थकराः ? ॥ ३८ ॥

अह भणइ जिणवरिंदो भरहे वासंमि जारिसो अहयं । एरिसया तेवीसं अण्णे होहिंति तित्थयरा ॥ ३६९ ॥

निगदसिद्धेयं ॥ ३६९ ॥ ते चैवं—

होही अजिओ संभव अभिणंदण सुमइ सुप्पभ सुपासो । ससि पुप्फदंत सीअल सिज्जंसो वासुपुज्जो अ ॥ ३७० ॥
विमलमणंतइ धम्मो संती कुंथू अरो अ मल्ली अ । मुणिसुव्वय नमि नेमी पासो तह वद्धमाणो अ ॥ ३७१ ॥

सुगमे ॥ ३७०–३७१ ॥

अह भणइ नरवरिंदो भरहे वासंमि जारिसो उ अहं। तारिसया कइ अण्णे ताया! होंति रायाणो? ॥ ३७२ ॥

अथ भणति नरेन्द्रः, भारते वर्षे यादृशस्त्वहं तादृशाः कत्यन्ये तात! भविष्यन्ति राजानः ॥ ३७२ ॥

अह भणइ जिणवरिंदो जारिसओ तं नरिंदसद्दूलो। एरिसया एक्कारस अण्णे होहिंति रायाणो ॥ ३७३ ॥

अथ भणति जिनवरेन्द्रो यादृशस्त्वं नरेन्द्रशार्दूलः, शार्दूलः–सिंहः, ईदृशा एकादश अन्ये भविष्यन्ति राजानः ॥ ३७३ ॥ ते चैवं—

होही सगरो मघवं सणंकुमारो य रायसद्दूलो। संती कुंथू अ अरो होइ सुभूमो य कोरव्वो ॥ ३७४ ॥

णवमो अ महापउमो हरिसेणो चेव रायसद्दूलो। जयनामो अ नरवई बारसमो बंभदत्तो अ ॥ ३७५ ॥

सुगमे ॥ ३७४–३७५ ॥ अथ यदुक्तं 'अपृष्टश्च दशारान् कथितवां'स्तदभिधित्सुराह भाष्यकारः—

होहिंति वासुदेवा नव अण्णे नीलपीअकोसिज्जा। हलमुसलचक्कजोही सतालगरुडज्झया दो दो ॥३९॥ (भाष्यम्)

भविष्यन्ति वासुदेवा नव, नव बलदेवाश्चानुक्ता अप्यत्र तत्सहचरित(चर)त्वात् द्रष्टव्याः, ते च सर्वे बलदेववासुदेवा यथासङ्ख्यं नीलानि पीतानि च कौशेयानि–वस्त्राणि येषां ते तथा, तथा हलमुशलचक्रयोधिनः–हलमुशलयोधिनो बलदेवाः, चक्रयोधिनो वासुदेवाः, सह तालगरुडध्वजाभ्यां वर्त्तन्ते इति सतालगरुडध्वजाः, एते च भवन्तो युगपद् द्वौ द्वौ भविष्यतः बलदेववासुदेवाविति ॥ ३९ ॥ वासुदेवबलदेवनामान्याह—

तिविट्ठू अ दिविट्ठू सयंभु पुरिसुत्तमे पुरिससीहे। तह पुरिसपुंडरीए दत्ते नारायणे कण्हे ॥ ४० ॥ (भाष्यम्)

अयले विजए भद्दे सुप्पभे अ सुदंसणे । आणंदे णंदणे पउमे रामे आवि अपच्छिमे ॥ ४१ ॥ (भाष्यम्)

सुगमे ॥ ४१–४२ ॥ अथ वासुदेवशत्रूनाह—

आसग्गीवे तारय मेरय महुकेढवे निसुंभे अ । बलि पहराए तह रावणे अ नवमे जरासिंधू ॥ ४२ ॥ (भाष्यम्)

सुगमा, नवरं चतुर्थस्य मधोरेतदेव नाम, कैटभश्च तद्भ्राताऽतः कैटभेनोपलक्षितो मधुर्मधुकैटभः ॥ ४२ ॥

एए खलु पडिसत्तू कित्तीपुरिसाण वासुदेवाणं । सव्वे अ चक्कजोही सव्वे अ हया सचक्केहिं ॥ ४३ ॥ (भाष्यम्)

एते खलु प्रतिशत्रवः, खलुरेवार्थः, एते एव नान्ये, कीर्त्तिपुरुषाणां–वासुदेवानां, सर्वे चक्रयोधिनः, सर्वे च हताः स्वचक्रैः, यतस्तान्येव चक्राणि वासुदेवव्यापत्तये प्रतिक्षिप्तानि तैः, पुण्योदयाद्वासुदेवं प्रणम्य तानेव व्यापादयन्तीति ॥ ४३ ॥ एवं प्रागुपन्यस्तगाथायां वर्णादिद्वारं परित्यज्य असंमोहार्थमुत्क्रमेण जिनादीनां नामद्वारमुक्तं, अथ गाथाद्वयेन तीर्थकरवर्णानाह—

पउमाभवासुपुज्जा रत्ता ससिपुप्फदंत ससिगोरा । सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥ ३७६ ॥

वरकणगतविअगोरा सोलस तित्थंकरा मुणेयव्वा । एसो वण्णविभागो चउवीसाए जिणवराणं ॥ ३७७ ॥

वरतप्तकनकगौराः, शेषं सुगमं ॥ ३७६–३७७ ॥ अथ तीर्थकृतां प्रमाणमाह—

उसभो पंचधणुस्सय पासो नव सत्तरयणिओ वीरो । सेसट्ठ पंच अट्ठ य पण्णा दस पंच परिहीणा ॥१॥ (प्रक्षि०)

आद्यार्द्धं सुगमं, शेषा अजिताद्या अष्टौ पञ्चाशता पञ्चाशता धनुर्भिर्हीनाः, ततः पञ्च शीतलाद्या दशभिः दशभिर्धनुर्भिर्हीना, ततोऽष्टौ धर्म्माद्याः पञ्चभिः पञ्चभिस्तैर्हीनाः, परमियं गाथा हारिभद्रीयवृत्तौ व्याख्याता नास्ति ॥ १ ॥ अथ व्यक्तमाह—

वासुदेव-
तत्प्रति-
शत्रुनामानि
तीर्थकर-
वर्णप्रमा-
णानि च
भा० गा०
४१-४३
नि० गा०
३७६-३७७

पंचेव अद्धपंचम चत्तारऽद्धुट्ठ तह तिगं चेव । अड्ढाइज्जा दुण्णि अ दिवड्ढमेगं धणुसयं च ॥ ३७८ ॥
नउई असीइ सत्तरि सट्ठी पण्णास होइ नायव्वा । पणयाल चत्त पणतीस तीसा पणवीस वीसा य ॥३७९॥
पण्णरस दस धणूणि य, नव पासो सत्तरयणिओ वीरो । नामा पुव्वुत्ता खलु तित्थयराणं मुणेयव्वा ॥ ३८० ॥

तिस्रोऽपि सुगमाः ॥ ३७८–३८० ॥ तेषामेव गोत्राण्याह—

मुणिसुव्वओ अ अरिहा अरिट्ठनेमी अ गोयमसगुत्ता । सेसा तित्थयरा खलु कासवगुत्ता मुणेयव्वा ॥ ३८१ ॥

सुगमा ॥ ३८१ ॥ आयुष्काणि प्रागुक्तानि ज्ञेयानि, अथ जन्मपुराण्याह—

इक्खागभूमि उज्झा सावत्थि विणिअ कोसलपुरं च । कोसंबी वाणारसी चंदाणण तह य काकंदी ॥ ३८२ ॥
भद्दिलपुर सीहपुरं चंपा कंपिल्ल उज्झ रयणपुरं । तिण्णेव गयपुरंमी मिहिला तह चेव रायगिहं ॥ ३८३ ॥
मिहिला सोरिअनयरं वाणारसि तह य होइ कुंडपुरं । उसभाईण जिणाणं जम्मणभूमी जहासंखं ॥ ३८४ ॥

तिस्रोऽपि सुगमाः ॥ ३८२–३८४ ॥ एवमन्या अप्यग्रेतना बह्व्यः, अथ मातर(मातॄन्) आह—

मरुदेवि विजय सेणा सिद्धत्था मंगला सुसीमा य । पुहवी लक्खण सामा(रामा)ऽनंदा विण्हू जया रामा (सामा) ॥
सुजसा सुवया अइरा सिरी देवी पभावई । पउमावई अ वप्पा अ सिव वम्मा तिसला इअ ॥ ३८६ ॥

पितॄनाह—

नाभी जिअसत्तू अ, जियारी संवरे इअ । मेहे धरे पइट्ठे अ, महसेणे अ खत्तिए ॥ ३८७ ॥

जिनानां प्रमाणगोत्र-जन्मपुर-मातापितरः नि० गा० ३७८-३८७

सुग्गीवे दढरहे विण्हू वसुपूज्जे अ खत्तिए । कयवम्मा सीहसेणे अ भाणू विससेणे इअ ॥ ३८८ ॥
सूरे सुदंसणे कुंभे सुमित्तु विजए समुद्दविजए अ । राया अ अस्ससेणे सिद्धत्थेऽवि य खत्तिए ॥ ३८९ ॥
पर्यायो गृहस्थादिः स चोक्त एव, गतिमाह—
सव्वेऽवि गया मुक्खं जाइजराबंधणविमुक्का । तित्थयरा भगवंतो सासयसुक्खं निराबाहं ॥ ३९० ॥
एवं तीर्थकरानङ्गीकृत्य प्रतिद्वारगाथा व्याख्याता, अथ चक्रिणां वर्णप्रमाणद्वारद्वयमाह—
सव्वेऽवि एगवन्ना निम्मलकणगप्पभा मुणेयव्वा । छक्खंडभरहसामी तेसिं पमाणं अओ वुच्छं ॥ ३९१ ॥
पंचसय अद्धपंचम बायालीसा य अद्धधणुअं च । इगयाल धणुस्सद्धं च चउत्थे पंचमे चत्ता ॥ ३९२ ॥
पणतीसा तीसा पुण अट्ठावीसा य वीसइ धणूणि । पण्णरस बारसेव य अपच्छिमो सत्त य धणूणि ॥ ३९३ ॥
नामानि प्रागुक्तानि, अथ गोत्राण्याह—
कासवगुत्ता सव्वे चउदसरयणाहिवा समक्खाया । देविंदवंदिएहिं जिणेहिं जिअरागदोसेहिं ॥ ३९४ ॥
आयुर्द्वारमाह—
चउरासीई बावत्तरी अ पुव्वाण सयसहस्साइं । पंच य तिण्णि य एगं च सयसहस्सा उ वासाणं ॥ ३९५ ॥
पंचाणउइ सहस्सा चउरासीई अ अट्ठमे सट्ठी । तीसा य दस य तिन्नि अ अपच्छिमे सत्तवाससया ॥ ३९६ ॥
अथ पुराण्याह—

जिनानां पितृगतयः नि० गा० ३८८-३९०
चक्रिणां वर्णप्रमाण-गोत्रायूंषि नि० गा० ३९१-३९६

जम्मण विणीअ उज्झा सावत्थी पंच हत्थिणपुरम्मि । वाणारसि कंपिल्ले रायगिहे चेव कंपिल्ले ॥ ३९७ ॥
मातृदारमाह—
सुमंगला जसवई भद्दा सहदेवि अइर सिरि देवी । तारा जाला मेरा य वप्पगा तह य चूलणी अ ॥ ३९८ ॥
पितॄनाह—
उसभे सुमित्तविजए समुद्दविजए अ अस्ससेणे य । तह वीससेण सूरे सुदंसणे कत्तविरिए अ ॥ ३९९ ॥
पउमुत्तरे महाहरि विजए राया तहेव बंभे य । ओसप्पिणी इमीसे पिउनामा चक्कवट्टीणं ॥ ४०० ॥
पर्यायः केषाञ्चित्प्रथमानुयोगतोऽवसेयः, केषाञ्चित्प्रव्रज्याभावान्न विद्यत एव ॥ ३९९-४०० ॥ अथ गतिमाह—
अट्ठेव गया मोक्खं सुभुमो बंभो अ सत्तमिं पुढविं । मघवं सणंकुमारो सणंकुमारं गया कप्पं ॥ ४०१ ॥
एवं चक्रिणोऽप्यधिकृत्य गता प्रतिद्वारगाथा, अथ वासुदेवबलदेवानां वर्णप्रमाणद्वारद्वयमाह—
वण्णेण वासुदेवा सव्वे नीला बला य सुक्किलया । एएसिं देहमाणं वुच्छामि अहाणुपुव्वीए ॥ ४०२ ॥
पढमो धणूणऽसीई सत्तरि सट्ठी य पन्न पणयाला । अउणत्तीसं च धणू छव्वीस सोलसा दसेव ॥ ४०३ ॥
नामानि प्रागुक्तान्येव, गोत्राण्याह—
बलदेववासुदेवा अट्ठेव हवंति गोयमसगुत्ता । नारायणपउमा पुण कासवगुत्ता मुणेअव्वा ॥ ४०४ ॥
अथ वासुदेवानामायुराह—

चक्रिणां मातापितृ-गतिद्वाराणि नि० गा० ३९७-४०१
वासुदेवादीनां वर्ण-प्रमाण-गोत्राणि नि० गा० ४०२-४०४

चउरासीई बिसत्तरि सट्ठी तीसा य दस य लक्खाइं । पण्णट्ठि सहस्साइं छप्पण्णा बारसेगं च ॥ ४०५ ॥

बलदेवानामायुराह—

पंचासीई पन्नत्तरी अ पन्नट्ठि पंचवन्ना य । सत्तरस सयसहस्सा पंचमए आउअं होइ ॥ ४०६ ॥
पंचासीइ सहस्सा पण्णट्ठी तह य चेव पण्णरस । बारस सयाइं आउं बलदेवाणं जहासंखं ॥ ४०७ ॥

पुराण्याह—

पोअण बारवइतिगं अस्सपुरं तह य होइ चक्कपुरं । वाणारसि रायगिहं अपच्छिमो जाओ महुराए ॥ ४०८ ॥

मातृद्वारमाह, एताश्च यथाक्रमं—

मिगावई उमा चेव पुहवी सीआ य अम्मया । लच्छीमई सेसमई केगमई देवई इअ ॥ ४०९ ॥
भद्द सुभद्दा सुप्पभ सुदंसणा विजय वेजयंती अ । तह य जयंती अपराजिआ य तह रोहिणी चेव ॥ ४१० ॥

पितृनाह—

हवइ पयावइ बंभो रुद्दो सोमो सिवो महसिवो य । अग्गिसीहे अ दसरहे नवमे भणिए अ वसुदेवे ॥ ४११ ॥

एतेषां पर्यायवक्तव्यतामभिधित्सुराह—

परिआओ पवज्जाऽभावाओ नत्थि वासुदेवाणं । होइ बलाणं सो पुण पढमऽणुओगाओ नायव्वो ॥ ४१२ ॥
वीसभूई पवइए धणदत्त समुद्ददत्त सेवाले । पिअमित्त ललिअमित्ते पुणवसू गंगदत्ते अ ॥ १ ॥

एयाइं नामाइं पुव्वभवे आसि वासुदेवाणं । इत्तो बलदेवाणं जहक्कमं कित्तइस्सामि ॥ २ ॥
विस्सनंदी सुबुद्धी अ सागरदत्ते असोअ ललिए अ । वाराह धण्णसेणे अवराइअ रायललिए य ॥ ३ ॥
संभूअ सुभद्द सुदंसणे अ सिज्जंस कण्ह गंगे अ । सागरसमुद्दनामे दमसेणे अ अपच्छिमे ॥ ४ ॥
एए धम्मायरिआ कित्तीपुरिसाण वासुदेवाणं । पुव्वभवे आसीआ जत्थ निआणाइ कासी अ ॥ ५ ॥
महुरा य कणगवत्थू सावत्थी पोअणं च रायगिहं । कायंदी मिहिलावि य वाणारसि हत्थिणपुरं च ॥ ६ ॥
गावी जूए संगामे इत्थी पाराइए अ रंगंमि । भज्जाणुरागगुट्ठी परइड्ढी माउगा इअ ॥ ७ ॥
महसुक्का पाणय लंतगाउ सहसारओ अ माहिंदा । बंभा सोहम्म सणंकुमार नवमो महासुक्का ॥ ८ ॥
तिण्णेवणुत्तरेहिं तिण्णेव भवे तहा महासुक्का । अवसेसा बलदेवा अणंतरं बंभलोगचुआ ॥ ९ ॥ (प्रक्षि०)

एतद्गाथानवकमन्यकर्तृकमव्याख्यातं च, अथ गतिमाह—

एगो य सत्तमाए पंच य छट्ठीए पंचमी एगो । एगो य चउत्थीए कण्हो पुण तच्चपुढवीए ॥ ४१३ ॥

एकश्च सप्तम्यां, पञ्च षष्ठ्यां, पञ्चम्यामेकः, एकश्चतुर्थ्यां, कृष्णः पुनस्तृतीयपृथिव्यां यास्यति गतो वेति सर्वत्र क्रियाध्याहारः कार्यः ॥ ४१३ ॥ अथ बलदेवगतिमाह—

अट्ठंतकडा रामा एगो पुण बंभलोगकप्पम्मि । [1]उववज्जु तओ चइउं सिज्झिस्सइ भारहे वासे ॥ ४१४ ॥

[1] उववज्जु तत्थ भोए, भोत्तुं अयरोवमा दस उ ॥ १ ॥ तत्तो अ चइत्ताणं इहेव उस्सप्पिणीइ भरहंमि । भवसिद्धिआ अ भयवं सिज्झिस्सइ कण्हतित्थंमि ॥ २ ॥ (सार्धा पाठान्तररूपा)

अष्ट अन्तकृता रामाः, भवान्तं कृत्वा सिद्धिं गता इत्यर्थः। एकोऽन्यः पुनर्ब्रह्मलोककल्पे उत्पत्स्यते उत्पन्नो वेति क्रिया, 'तत्तो' ततश्च ब्रह्मलोकात् च्युत्वा सेत्स्यति–मोक्षं यास्यति भारते वर्षे ॥ ४१४ ॥

अनिआणकडा रामा सव्वेऽवि अ केसवा निआणकडा। उड्ढंगामी रामा केसव सव्वे अहोगामी ॥ ४१५ ॥

अनिदानकृता रामाः, सर्वेऽपि च केशवा निदानकृताः, ऊर्ध्वंगामिनो रामाः, केशवा अधोगामिनः, पूर्वापरनिपातः प्राकृतत्वात्, अन्यथा अकृतनिदाना रामा इति द्रष्टव्यं, केशवास्तु कृतनिदानाः ॥ ४१५ ॥ एवं 'जिणचक्कि०' इत्यादिद्वारगाथा व्याख्याता, अथ यश्चक्री केशवो वा यस्मिन् जिने जिनान्तरे वाऽऽसीत्स प्रतिपाद्यत इत्यनेन सम्बन्धेन जिनान्तराणि निदर्श्यन्ते–

उसभो वरवसभगई ततिअसमापच्छिमंमि कालंमि। उप्पण्णो पढमजिणो भरहपिआ भारहे वासे ॥ १ ॥
चतुरशीत्या पूर्वलक्षैरेकोननवत्या पक्षैश्च शेषैस्तृतीयारकस्य ॥ १ ॥
पण्णासा लक्खेहिं कोडीणं सागराण उसभाओ। उप्पण्णो अजिअजिणो ततिओ तीसाएँ लक्खेहिं ॥ २ ॥
पञ्चाशता सागरोपमकोटिलक्षैर्ऋषभादजित उत्पन्नः, तृतीयस्त्रिंशता सागरोपमकोटिलक्षैः ॥ २ ॥
जिणवसहसंभवाओ दसहि उ लक्खेहि अयरकोडीणं। अभिनंदणो उ भयवं एवइकालेण उप्पण्णो ॥ ३ ॥
सम्भवाद्दशभिः सागरकोटिलक्षैरभिनन्दनः ॥ ३ ॥
अभिणंदणाउ सुमती नवहि उ लक्खेहि अयरकोडीणं। उप्पण्णो सुहपुण्णो सुप्पभनामस्स वोच्छामि ॥४॥

अभिनन्दनतो नवभिः सागरकोटिलक्षैः सुमतिः ॥ ४ ॥

णउई य सहस्सेहिं कोडीणं सागराण पुण्णाणं । सुमइजिणाउ पउमो एवतिकालेण उप्पण्णो ॥ ५ ॥

सुमतेर्नवत्या सागरकोटिसहस्रैः पद्मप्रभः ॥ ५ ॥

पउमप्पहनामाओ नवहि सहस्सेहि अयरकोडीणं । कालेणेवइएणं सुपासनामो समुप्पण्णो ॥ ६ ॥

पद्मप्रभान्नव सागरकोटिसहस्रैः सुपार्श्वः ॥ ६ ॥

कोडीसएहि नवहि उ सुपासनामा जिणो समुप्पण्णो । चंदप्पभो पभाए पभासयंतो उ तेलोक्कं ॥ ७ ॥

सुपार्श्वान्नवभिः सागरकोटिशतैश्चन्द्रप्रभः ॥ ७ ॥

णउईए कोडीहिं ससीउ सुविहीजिणो समुप्पण्णो । सुविहिजिणाओ नवहि उ कोडीहिं सीअलो जाओ ॥ ८ ॥

चन्द्रप्रभान्नवत्या सागरकोटीभिः सुविधिः, सुविधेर्नवभिः कोटीभिः शीतलः ॥ ८ ॥

सीअलजिणाउ भयवं सिज्जंसो सागराण कोडीए । सागरसयऊणाए वरिसेहिं तहा इमेहिं तु ॥ ९ ॥

शीतलात्सागरकोट्या परं शतसागरन्यूनया इयद्भिश्च वर्षैरूनया ॥ ९ ॥

छव्वीसाए सहस्सेहिं चेव छावट्ठि सयसहस्सेहिं । एतेहिं ऊणिआ खलु कोडी मग्गिल्लिआ होइ ॥ १० ॥

षट्षष्ट्या वर्षलक्षैः षड्विंशत्या वर्षसहस्रैश्च ॥ १० ॥

चउपण्णा अयराणं सिज्जंसाओ जिणो उ वसुपुज्जो । वसुपुज्जाओ विमलो तीसहि अयरेहि उप्पण्णो ॥ ११ ॥

श्रेयांसाच्चतुःपञ्चाशता सागरैर्वासुपूज्यः, वासुपूज्यात्त्रिंशता सागरैर्विमलः ॥ ११ ॥

विमलजिणा उप्पण्णो नवहिं अयरेहिंणंतइजिणोऽवि । चउसागरनामेहिं अणंतईतो जिणो धम्मो ॥ १२॥

विमलान्नवभिः सागरैरनन्तः, अनन्ताच्चतुर्भिः सागरैर्धर्म्मः ॥ १२ ॥

धम्मजिणाओ संती तिहि उ तिचउभागपलिअऊणेहिं । अयरेहि समुप्पण्णो पलिअद्धेणं तु कुंथुजिणो ॥ १३ ॥

धर्म्मात् त्रिभिः सागरैः पल्योपमपादत्रयन्यूनैः शान्तिः, शान्तेः पल्योपमार्द्धेन कुन्थुः ॥ १३ ॥

पलिअचउभाएणं कोडिसहस्सूणएण वासाणं । कुंथूओ अरनामो कोडीसहस्सेण मल्लिजिणो ॥ १४ ॥

कुन्थोः पल्योपमचतुर्थभागेन वर्षकोटिसहस्रोनेनारः, अराद्वर्षकोटिसहस्रेण मल्लिः ॥ १४ ॥

मल्लिजिणाओ मुणिसुव्वओ य चउपण्णवासलक्खेहिं । सुव्वयनामाओ नमी लक्खेहिं छहि उ उप्पण्णो ॥१५॥

मल्लेश्चतुःपञ्चाशता वर्षलक्षैः सुव्रतः, सुव्रतात्षड्भिर्वर्षलक्षैर्नमिः ॥ १५ ॥

पंचहिं लक्खेहिं तओ अरिट्ठनेमी जिणो समुप्पण्णो । तेसीइसहस्सेहिं सएहि अद्धट्ठमेहिं च ॥ १६ ॥

नमेः पञ्चभिर्वर्षलक्षैर्नेमिः, नेमेर्वर्षाणां त्र्यशीत्या सहस्रैः सार्द्धाष्टमशतैश्च पार्श्वः ॥ १६ ॥

नेमीओ पासजिणो पासजिणाओ य होइ वीरजिणो । अड्ढाइज्जसएहिं गएहिं चरमो समुप्पण्णो ॥ १७ ॥

पार्श्वात् सार्द्धशतद्वयेन वीरः ॥ १७ ॥ अथ चक्रिणोऽधिकृत्य जिनान्तराण्याह—

उसभे भरहो अजिए सागरो मघवं सणंकुमारो अ । धम्मस्स य संतिस्स य जिणंतरे चक्कवट्टिदुगं ॥४१६॥

ऋषभतीर्थंकरे भरतश्चक्रवर्त्ती, अजिते तीर्थकरे सगरश्चक्री भविष्यति, एवं तीर्थकरोक्तानुवादः, सर्वत्र भविष्यत्कालानुरूपः क्रियाध्याहारः कार्यः, त्रिकालगोचरसूत्रप्रदर्शनार्थो वा भूतेनापि न दुष्यति, तथा चावोचत् 'मघवा सणंकुमारो सणंकुमारं गया कप्प'मित्यादि मघवान् सनत्कुमारश्च एतच्चक्रवर्त्तिद्वयं धर्मस्य च शान्तेश्चानयोरन्तरं जिनान्तरं तस्मिन् भविष्यत्यभवद्वा ॥ ४१६ ॥

संती कुंथू अ अरो अरहंता चेव चक्कवट्टी अ। अरमल्लीअंतरे उ हवइ सुभूमो य कोरव्वो ॥ ४१७ ॥

शान्तिः कुन्थुश्चार एते त्रयोऽप्यर्हन्तश्चैव चक्रवर्त्तिनश्च, अरमल्ल्यन्तरे तु भवति सुभूमश्च कौरव्यः, तुशब्दोऽन्तरविशेषणे, नान्तरमात्रे किन्तु पुरुषपुण्डरीकदत्ताख्यकेशवद्वयमध्ये ॥ ४१७ ॥

मुणिसुव्वए नमिंमि अ हुंति दुवे पउमनाभहरिसेणा। नमिनेमिसु जयनामो अरिट्ठपासंतरे बंभो ॥ ४१८ ॥

मुनिसुव्रते तीर्थकरे नमौ च भवतो द्वौ पद्मनाभहरिषेणौ, नमिश्च नेमिश्च नमिनेमी तयोर्नमिनेम्योः, अन्तरशब्दोऽत्रापि सम्बध्यते, जयनामाऽभवत्, अरिष्टनेमिपार्श्वान्तरे ब्रह्मदत्तः ॥ ४१८ ॥

इह चासम्मोहार्थं सर्वेषामेव चक्रवर्त्तिवासुदेवानां यो यस्मिन्कालेऽन्तरे वा चक्रवर्त्ती वासुदेवो वा भविष्यति बभूव वा तस्यानन्तरव्यावर्णितप्रमाणायुःसमन्वितस्य सुखपरिज्ञानार्थमयं प्रतिपादनोपायः—

बत्तीसं घरयाइं काउं तिरियायताहिं रेहाहिं। उड्ढाययाहिं काउं पंच घराइं तओ पढमे ॥ १ ॥ तिर्यगायतभिरूर्द्ध्वायताभिरनया गाथया यन्त्रकरचना कार्या ॥ १ ॥ पन्नरस जिण निरंतर सुन्नदुगं तिजिणसुन्नतियगं च। दो जिण सुन्न जिणिंदो

सुन्न जिणो सुन्न दोणि जिणा ॥ २ ॥ अनया प्रथमपङ्क्तौ जिननामानि ॥ २ ॥ बितियपंतिठवणा—दो चक्की सुन्न तेरस पण चक्की सुन्न चक्कि दो सुन्ना । चक्की सुन्न दु चक्की सुन्नं चक्की दु सुन्नं च ॥ ३ ॥ अनया द्वितीयपङ्क्तौ चक्रिनामानि ॥ ३ ॥ ततियपंतिठवणा—दस सुन्न पंच केसव पण सुन्नं केसि सुन्न केसी य । दो सुन्न केसवोऽवि य सुन्नदुगं केसव ति सुन्नं ॥ ४ ॥ अनया तृतीयपङ्क्तौ केशवनामानि ॥ ४ ॥ चतुर्थपङ्क्तौ त्रयाणामप्येषां तनुमानं, पञ्चमपङ्क्तौ चायुर्मानम्, स्थापना—

अथ वासुदेवो यो यत्तीर्थकरकालेऽन्तरे वाऽऽसीत्तदाह—

पंचऽरहंते वंदंति केसवा पंच आणुपुव्वीए । सिज्जंस तिविट्ठाई धम्म पुरिससीहपेरंता ॥ ४१९ ॥

पञ्चार्हतो वन्दन्ते केशवाः, वन्दन्त इति एतेषां सम्यक्त्वख्यापनार्थं, कियतोऽर्हन्तः? पञ्च, कथं? आनुपूर्व्या श्रेयांसादीन् त्रिपृष्ठादयः धर्मपर्यन्तान् पुरुषसिंहपर्यन्ताः, पाठान्तरं वा 'पंचऽरिहंते वंदिंसु' ॥ ४१९ ॥

अरमल्लिअंतरे दुण्णि केसवा पुरिसपुंडरिअदत्ता । मुणिसुव्वयनमिअंतरि नारायण कण्हु नेमिंमि ॥ ४२० ॥

अरमल्ल्योरन्तरे द्वौ केशवौ, कौ? पुरुषपुण्डरीकदत्तौ, मुनिसुव्रतनम्यन्तरे नारायणनाम वासुदेवः, कृष्णो नेमौ ॥ ४२० ॥

अथ चक्रिवासुदेवान्तराण्याह—

चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की । केसव चक्की केसव दु चक्की केसी अ चक्की अ ॥ ४२१ ॥

प्रथममुक्तलक्षणं चक्रिद्वयं, ततो हरिपञ्चकं, पुनः पञ्चकं चक्रिणां, ततः केशवः, पुनश्चक्री, पुनः केशवः, पुनश्चक्री, पुनः केशवः, ततो द्वौ चक्रिणौ, पुनः केशवः, ततश्चक्री ॥ ४२१ ॥

| | | | | |
|---|---|---|---|---|
| ऋषभः | भरतः | ० | धनूंषि ५०० | पूर्वलक्षाः ८४ |
| अजितः | सगरः | ० | ४५० | ७२ |
| संभवः | ० | ० | ४०० | ६० |
| अभिनन्दनः | ० | ० | ३५० | ५० |
| सुमतिः | ० | ० | ३०० | ४० |
| पद्मप्रभः | ० | ० | २५० | ३० |
| सुपार्श्वः | ० | ० | २०० | २० |
| चन्द्रप्रभः | ० | ० | १५० | १० |
| सुविधिः | ० | ० | १०० | २ |
| शीतलः | ० | ० | ९० | १ |
| श्रेयांसः | ० | त्रिपृष्ठः | ८० | वर्षलक्षाः ८४ |
| वासुपूज्यः | ० | द्विपृष्ठः | ७० | ७२ |
| विमलः | ० | स्वयम्भूः | ६० | ६० |
| अनन्तः | ० | पुरुषोत्तमः | ५० | ३० |
| धर्मः | ० | पुरुषसिंहः | ४५ | १० |
| ० | मघवान् | ० | ४२॥ | ५ |
| ० | सनत्कुमारः | ० | ४१॥ | ३ |
| शान्तिः | शान्तिः | ० | ४० | १ |
| कुन्थुः | कुन्थुः | ० | ३५ | वर्षसहस्राणि ९५ |
| अरः | अरः | ० | ३० | ८४ |
| ० | ० | पुरुषपुण्डरीकः | २९ | ६५ |
| ० | सुभूमः | ० | २८ | ६० |
| ० | ० | दत्तः | २६ | ५६ |
| मल्लिः | ० | ० | २५ | ५५ |
| सुव्रतः | पद्मः | ० | २० | ३० |
| ० | ० | नारायणः | १६ | १२ |
| नमिः | हरिषेणः | ० | १५ | १० |
| ० | जयः | ० | १२ | ३ |
| नेमिः | ० | कृष्णः | १० | १ |
| ० | ब्रह्मदत्तः | ० | ७ | वर्षशतानि ७ |
| पार्श्वः | ० | ० | ९ हस्ताः | १ |
| वीरः | ० | ० | ७ हस्ताः | ७२ वर्षाणि |

अथ यदुक्तं 'तित्थयरो को इहं भरहे'? त्ति, तद्व्याचिख्यासयाऽऽह मूलभाष्यकारः—

अह भणइ नरवरिंदो ताय! इमीसित्तिआइ परिसाए। अण्णोऽवि कोऽवि होही भरहे वासंमि तित्थयरो? ॥४४॥

अथ भणति नरवरेन्द्रः—तात! अस्या एतावत्याः पर्षदोऽन्योऽपि कश्चिद्भविष्यति तीर्थकरः अस्मिन् भारते वर्षे ॥ ४४ ॥

तत्थ मरीईनामा आइपरिव्वायगो उसभनत्ता। सज्झायझाणजुत्तो एगंते झायइ महप्पा ॥ ४२२ ॥

तत्र भगवतः प्रत्यासन्नभूभागे मरीचिनामा आदौ(आदि)परिव्राजकः प्रवर्त्तकत्वात् ऋषभनप्ता—पौत्रक इत्यर्थः, स्वाध्याय एव ध्यानं तेन युक्तः एकान्ते ध्यायति महात्मा ॥ ४२२ ॥

तं दाएइ जिणिंदो एव नरिंदेण पुच्छिओ संतो। धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥ ४२३ ॥

भरतपृष्टो भगवान् 'तं' मरीचिं दर्शयति जिनेन्द्रः, एवं नरवरेण पृष्टः सन् धर्मवरचक्रवर्त्ती अपश्चिमो वीरनामा भविष्यतीति ॥ ४२३ ॥ तथा—

आइगरु दसाराणं तिविट्ठू नामेण पोअणाहिवई। पिअमित्तचक्कवट्टी मूआइ विदेहवासंमि ॥ ४२४ ॥

आदिकरो दशाराणां त्रिपृष्ठनामा पोतना नाम नगरी तस्या अधिपतिः, तथा प्रियमित्रनामा चक्रवर्त्ती मूकायां नगर्यां विदेहवर्षे—महाविदेहे इति यावत् भविष्यति ॥ ४२४ ॥

तं वयणं सोऊणं राया अंचियतणूरुहसरीरो। अभिवंदिऊण पिअरं मरीइमभिवंदओ जाइ ॥ ४२५ ॥

तद्वचनं श्रुत्वा राजा अञ्चितानि तनूरुहाणि—रोमाणि शरीरे यस्य स तथा,-अभिवन्द्य पितरं तीर्थकरं मरीचिमभि-

वन्दिष्यति इत्यभिवन्दको याति, पाठान्तरं वा 'मरीइमभिवंदिउं'ति अभिवन्दनायेत्यर्थः ॥ ४२५ ॥

सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो । वंदइ अभित्थुणंतो इमाहि महुराहि वग्गूहिं ॥४२६॥

स भरतः विनयेन—करणभूतेन मरीचिसकाशमुपागतः सन् कृत्वा प्रदक्षिणं त्रिकृत्वः, तिस्रो वारा इत्यर्थः, वन्दतेऽभिष्टुवन्नेताभिर्मधुराभिर्वाग्भिः ॥ ४२६ ॥

लाहा हु ते सुलद्धा जंसि तुमं धम्मचक्कवट्टीणं । होहिसि दसचउदसमो अपच्छिमो वीरनामुत्ति ॥ ४२७ ॥

'लाभा' अभ्युदयप्राप्तिविशेषाः, हुरेवार्थः तस्य च व्यवहितः सम्बन्धः, ते तव सुलब्धा एव, यस्मात्त्वं धर्मचक्रवर्तिनां भविष्यसि दशचतुर्दशः, चतुर्विंशतितम इत्यर्थः, अपश्चिमो वीरनामेति ॥ ४२७ ॥ 'आइगरु०' ( ४२३ ) पूर्ववत्, भावितीर्थकरभक्त्यैव वन्दनायोद्यतो भरत आह—

णावि अ पारिवज्जं वंदामि अहं इमं च ते जम्मं । जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि ॥ ४२८ ॥

नापि च परिव्राजामिदं पारिव्राजं वन्दाम्यहं इदं च ते जन्म किन्तु यद्भविष्यसि तीर्थकरोऽपश्चिमस्तेन वन्दामि ॥ ४२८ ॥

एवण्हं थोऊणं काऊणं पयाहिणं च तिक्खुत्तो । आपुच्छिऊण पिअरं विणीअनयरिं अह पविट्ठो ॥ ४२९ ॥

एवं स्तुत्वा 'ण्ह'मिति निपातः पूरणार्थः, कृत्वा प्रदक्षिणां च त्रिकृत्वः, आपृच्छय पितरमृषभं विनीतनगरीमयोध्यां, अथ अनन्तरं प्रविष्टो भरतः ॥ ४२९ ॥ अत्रान्तरे—

तव्वयणं सोऊणं तिवइं आप्फोडिऊण तिक्खुत्तो । अब्भहिअजायहरिसो तत्थ मरीई इमं भणइ ॥ ४३० ॥

तस्य—भरतस्य वचनं तद्वचनं श्रुत्वा, तत्र स्थाने मरीचिरिदं वक्ष्यमाणलक्षणं भणतीति योगः, कथं?, त्रिपदीं दत्त्वा रङ्गमध्यगतमल्लवत्, तथा आस्फोटयित्वा त्रिकृत्वः—तिस्रो वाराः, किंविधः सन्?, अभ्यधिकजातहर्षः ॥ ४३० ॥

जइ वासुदेवु पढमो मूआइ विदेहि चक्कवट्टित्तं । चरमो तित्थराणं होउ अलं इत्तिअं मज्झ ॥ ४३१ ॥

यदि वासुदेवः प्रथमोऽहं, मुकायां विदेहे चक्रवर्त्तित्वं प्राप्स्यामि, तथा चरमस्तीर्थकराणां भविष्यामि, एवं तर्हि भवतु एतावन्मम, एतावतैव कृतार्थ इत्यर्थः, अलं पर्याप्तमन्येन, पाठान्तरं वा 'अहो मए एत्तिअं लद्धं'ति ॥ ४३१ ॥

अहयं च दसाराणं पिआ य मे चक्कवट्टिवंसस्स । अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ ॥ ४३२ ॥

अहमेव, च एवार्थः, दशाराणां प्रथमो भविष्यामीति शेषः, पिता च मे चक्रवर्त्तिवंशस्य प्रथमः, 'आर्यकः' पितामहः स तीर्थकराणां प्रथमः, यत एवमतोऽहो—विस्मये कुलमुत्तमं मम ॥ ४३२ ॥ एवं पृच्छाद्वारं गतं, अथ निर्वाणद्वारमाह—

अह भगवं भवमहणो पुव्वाणामणूणगं सयसहस्सं । अणुपुव्वि विहरिऊणं पत्तो अट्ठावयं सेलं ॥ ४३३ ॥

अथ भगवान् भवमथनः पूर्वाणामन्यूनं शतसहस्रमानुपूर्व्या विहृत्य प्राप्तोऽष्टापदं शैलं ॥ ४३३ ॥

अट्ठावयंमि सेले चउदसभत्तेण सो महरिसीणं । दसहि सहस्सेहि समं निव्वाणमणुत्तरं पत्तो ॥ ४३४ ॥

अष्टापदे शैले चतुर्दशभक्तेन सह महर्षीणां दशभिः सहस्रैः समं निर्वाणमनुत्तरं प्राप्तः ॥ ४३४ ॥

निव्वाणं चिइगागिई जिणस्स इक्खाग सेसयाणं च । सकहा थूभ जिणहरे जायग तेणाहिअग्गित्ति ॥ ४३५ ॥

[ 'निर्वाणमिति' भगवान् दशसहस्रपरिवारो निर्वाणं प्राप्तः ] 'चितिकाकृति'रिति देवास्तिस्रश्चिता वृत्तत्र्यस्रचतुर-

स्राकृतीः कृतवन्तः, एकां पूर्वेण तीर्थकृतः, अपरां दक्षिणेनेक्ष्वाकूणां, तृतीयामपरेण शेषाणां, ततोऽग्निकुमारा वदनैः खल्वग्निं प्रक्षिप्तवन्तः, तत एव निबन्धनाल्लोके 'अग्निमुखा वै देवाः' इति प्रसिद्धं, वायुकुमारास्तु वातं मुक्तवन्तः, मांसशोणिते च ध्यामिते सति मेघकुमाराः सुरभिणा क्षीरोदजलेन निर्वापितवन्तः, 'सकह'त्ति दंष्ट्रोच्यते, तत्र दक्षिणां दंष्ट्रां भगवतः शक्रो जग्राह, वामामीशानः, आधस्त्यदक्षिणां पुनश्चमरः, आधस्त्योत्तरां तु बलिः, शेषदेवाः शेषाङ्गानि, राजानो भस्म, शेषलोका भस्मना तिलकानि चक्रुः, 'स्तूपा जिनगृहं चे'ति भरतो भगवन्तमुद्दिश्य वर्द्धिक(वर्धकी)रत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान्, निजवर्णप्रमाणयुक्ताश्चतुर्विंशतिं तीर्थकरप्रतिमा जीवाभिगमोक्तपरिवारयुक्ताः, तथा नवनवति-भ्रातृप्रतिमा आत्मप्रतिमां च, स्तूपशतं च, मा कश्चिदाक्रमणं करिष्यतीति, तत्रैकं भगवतोऽन्यानि भ्रातॄणां, लोहमयान् यन्त्रपुरुषांस्तद्द्वारपालांश्चकार, दण्डरत्नेनाष्टापदं सर्वतश्छिन्नवान्, योजनमानान्यष्टौ पदानि कृतवान्, सगरसुतैस्तु वंशानुरागाद्यथा परिखां कृत्वा गङ्गा अवतारिता तथा ग्रन्थान्तराद् ज्ञेयं । ज्वलन्त्यां भगवच्चितायां माहनैर्देवान्ते मुहुर्मुहुरग्निं याचमानैरभिद्रुताः सन्तस्तान् याचकानित्याहुः—अहो ! याचकाः अहो ! याचकाः इति, ततो याचका रूढाः, तदग्निम-विध्यापितं दुरितोपशान्तिकारित्वात्स्वगृहे कुण्डेषु धृतवन्तः, तेन कारणेन ते आहिताग्नयो जाताः । चितात्रयाग्निग्रहणादग्ने-स्त्रिसङ्ख्यत्वं च, तेषां चाग्नीनां परस्परतः कुण्डसंक्रान्तावयं विधिः—भगवत्सम्बन्धिभूताग्निः सर्वकुण्डेषु सञ्चरति, इक्ष्वाकुकुण्डाग्निस्तु शेषकुण्डाग्नौ च सञ्चरति, न भगवत्कुण्डाग्नौ, शेषानगारकुण्डाग्निस्तु नान्यत्र सङ्क्रामति ॥ ४३५ ॥ अथाभिहितद्वार-गाथाया द्वारद्वयं मूलभाष्यकार आह—

थूभसय भाउगाणं चउवीसं चेव जिणहरे कासी। सव्वजिणाणं पडिमा वण्णपमाणेहिं निअएहिं ॥ ४५ ॥ ( भाष्यम् )

स्तूपशतं भ्रातॄणां भरतः कारितवान्, तत्रैकं भगवत इति ज्ञेयं, चतुर्विंशतिं चैव जिनगृहे कृतवान्, का इत्याह-सर्वजिनानां प्रतिमाः, वर्णप्रमाणैर्निजैरात्मीयैः, चकाराद्भ्रातॄणामात्मनश्च प्रतिमाशतं ॥ ४५ ॥ अथ भरतवक्तव्यतानिवद्धां सङ्ग्रहगाथामाह-

आयंसघरपवेसो भरहे पडणं च अंगुलीअस्स । सेसाणं उम्मुअणं संवेगो नाण दिक्खा य ॥ ४३६ ॥

आदर्शकगृहे प्रवेशो भरतस्याभूत्, प्राकृतत्वात् षष्ठ्यर्थे सप्तमी, पतनं चाङ्गुलीयस्य बभूव, शेषाणां कटकादीनामुन्मोचनमनुतिष्ठितं, ततः संवेगो जातः, तदुत्तरकालं ज्ञानमुत्पन्नं, तदा च शक्रः समागतो रजोहरणाद्युपकरणमुपनीतं, दशभी राजसहस्रैः समं प्रव्रजितः । शेषा नव चक्रिणस्तु सहस्रपरिवारा निष्क्रान्ताः । भगवान् भरतः पूर्वलक्षं केवलिपर्यायं पालयित्वा निर्वृतः । शक्रेणादित्ययशा राज्ये स्थापितः, एवमष्टौ पुरुषयुगानि ॥ ४३६ ॥

उक्तमानुषङ्गिकं, अथ प्रकृतां मरीचिवक्तव्यतामाह-

पुच्छंताणं कहेइ उवट्ठिए देइ साहुणो सीसे । गेलन्नि अपडिअरणं कविला इत्थंपि इहयंपि ॥ ४३७ ॥

मरीचिर्भगवति निर्वृते साधुभिः सह विहरन् पृच्छतां लोकानां कथयति धर्मं जिनप्रणीतमेव, धर्माक्षिप्तांश्च प्राणिन उपस्थितान् ददाति साधुभ्यः शिष्यान्, अन्यदा स ग्लानः संवृत्तः, साधवोऽप्यसंयतत्वान्न प्रतिजाग्रति, स चिन्तयति-निष्ठितार्थाः खल्वेते, नाऽसंयतयः (तस्य) कुर्वन्ति, नापि ममैतान् कारयितुं युज्यते, तस्मात्कञ्चन प्रतिजागरकं दीक्षयामीति । अपगतरोगस्य च कपिलो नाम राजपुत्रो धर्मशुश्रूषया तस्यान्तिकं समागतः, कथिते साधुधर्मे स आह-यद्ययं मार्गः किमिति

भवतैतदङ्गीकृतं, मरीचिराह—पापोऽहं, 'लोइंदिए' त्यादिविभाषा, कपिलोऽपि कर्म्मोदयात्साधुधर्म्मानभिमुखः खल्वाह—किं तव दर्शने नास्त्येव धर्म्म इति, मरीचिरपि प्रचुरकर्म्मा खल्वयं न तीर्थकरोक्तं प्रतिपद्यते, वरं मे सहायः संवृत्त इति सञ्चिन्त्याह—'कविला इत्थंपि'त्ति अपिशब्दस्यैवकारार्थत्वान्निरुपचरितः खल्वत्रैव साधुमार्गे, 'इहइंपि'त्ति स्वल्पस्त्वत्रापि विद्यते ॥ ४३७ ॥ स ह्येवमाकर्ण्य तत्सकाश एव प्रव्रजितः, मरीचिनाप्यनेन दुर्वचनेन संसारोऽभिनिर्वर्त्तितः, त्रिपदीकाले च नीचैर्गोत्रं कर्म्म प्रबद्धं, अमुमेवार्थं प्रतिपादयन्नाह—

दुब्भासिएण इक्केण मरीई दुक्खसायरं पत्तो। भमिओ कोडाकोडिं सागरसरिनामधेज्जाणं ॥ ४३८ ॥

दुर्भाषितेन एकेनोक्तलक्षणेन मरीचिर्दुःखसागरं प्राप्तः, भ्रान्तः कोटीनां कोटिं सागरसदृशनामधेयानां सागरोपमाणामित्यर्थः ॥ ४३८ ॥

तम्मूलं संसारो नीआगोत्तं च कासि तिवइंमि। अपडिक्कंतो बंभे कविलो अंतद्धिओ कहए ॥ ४३९ ॥

'तन्मूलं' दुर्भाषितमूलं संसारः सञ्जातः, स एव नीचैर्गोत्रं कृतवान् त्रिपदीकाले, चतुरशीति पूर्वलक्षाणि सर्वायुष्कमनुपाल्य दुर्भाषिताद्दुर्वाचाप्रतिक्रान्तो ब्रह्मलोके दशसागरोपमस्थितिर्देवः सञ्जातः। कपिलोऽपि ग्रन्थार्थपरिज्ञानशून्य एव तद्दर्शितक्रियारतो विजहार, आसुरिप्रमुखान् शिष्यांश्चक्रे, तेषां स्वमाचारमात्रं दिदेश, शिष्यप्रवचनानुरागतत्परो मृत्वा ब्रह्मलोके उत्पन्नः, अवधिना पूर्वभवं विज्ञाय चिन्तयामास—मम शिष्यो न किञ्चिद्वेत्ति, तत्तेषामु( तत्तस्यो )पदिशामि स्वमततत्त्वं, तस्मै आकाशस्थपञ्चवर्णमण्डलकस्थस्तत्त्वं जगाद, आह च—कपिलोऽन्तर्द्धितः कथितवान्, किं?, अव्यक्ताद् व्यक्तं प्रभवति, ततः

षष्टितन्त्रं जातं, तथा चाहुस्तन्मतानुसारिणः–'प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः, तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानी'त्यादि ॥ ४३९ ॥ अथ प्रकृतं–

इक्खागेसु मरीई चउरासीई अ बंभलोगंमि। कोसिउ कुल्लागंमी( गेसुं ) असीइमाउं च संसारे ॥ ४४० ॥

इक्ष्वाकुषु मरीचिरासीत्, चतुरशीतिं च पूर्वलक्षाण्यायुः पालयित्वा ब्रह्मलोके देवः संवृत्तः, ततश्चायुःक्षयाच्च्युत्वा कोल्लाकसन्निवेशे कौशिको नाम ब्राह्मणो बभूव, तत्राप्यशीतिपूर्वलक्षाण्यायुष्कमनुपाल्य संसारे कियन्तं कालं पर्यटितः ॥४४०॥

थूणाइ पूसमित्तो आउं बावत्तरिं च सोहम्मे। चेइअ अग्गिज्जोओ चोवट्ठीसाणकप्पंमि ॥ ४४१ ॥

स्थूणायां नगर्यां पुष्यमित्रो नाम ब्राह्मणः सञ्जातः, तस्यायुर्द्वासप्ततिः पूर्वलक्षाण्यासीत्, परिव्राजकदर्शने च प्रव्रज्यां गृहीत्वा तां पालयित्वा कियन्तमपि कालं स्थित्वा सौधर्मेऽजघन्योत्कृष्टस्थितिः समुत्पन्नः, ततश्च्युत्वा चैत्यसन्निवेशेऽग्निद्योतो ब्राह्मणः सञ्जातः, तत्र चतुःषष्टिपूर्वलक्षाण्यायुष्कमासीत्, परिव्राड् जातो मृत्वा चेशानेऽजघन्योत्कृष्टस्थितिर्देवोऽभूत् ॥ ४४१ ॥

मंदिरे अग्गिभूई छप्पण्णा उ सणंकुमारंमि। सेअवि भारद्दाओ चोआलीसं च माहिंदे ॥ ४४२ ॥

ईशानाच्च्युतो मन्दिरसन्निवेशेऽग्निभूतिर्ब्राह्मणो बभूव, तत्र षट्पञ्चाशत्पूर्वलक्षाण्यायुः, मृत्वा सनत्कुमारे मध्यमस्थिति-र्देवः, ततश्च्युतः श्वेतव्यां नगर्यां भारद्वाजो नाम ब्राह्मण उत्पन्नः, तत्र चतुश्चत्वारिंशत्पूर्वलक्षाण्यायुः परिव्राजकश्चाभवत्, मृत्वा च माहेन्द्रेऽजघन्योत्कृष्टायुर्देवः ॥ ४४२ ॥

संसरिअ थावरो रायगिहे चउतीस बंभलोगंमि। छस्सुवि पारिवज्जं भमिओ तत्तो अ संसारे ॥ ४४३ ॥

ततश्च्युतः संसृत्य कियन्तमपि कालं संसारे स्थावरो नाम ब्राह्मणो राजगृहे समुत्पन्नः, तत्र चतुस्त्रिंशत्पूर्वलक्षाण्यायुः परिव्राजकश्चासीत्, मृत्वा ब्रह्मलोके मध्यमस्थितिर्देवः, एवं षट्स्वपि वारासु परिव्राजकत्वमधिकृत्य दिवं गतः, ततश्च्युत्वा प्रभूतं कालं संसारे भ्रान्तः ॥ ४४३ ॥

रायगिह विस्सनंदी विसाहभूई अ तस्स जुवराया। जुवरन्नो विस्सभूई विसाहनंदी अ इअरस्स ॥ ४४४ ॥

राजगृहे नगरे विश्वनन्दी राजाऽभूत्, विशाखभूतिश्च तस्य युवराजः, तत्र युवराजस्य धारिणीदेव्या विश्वभूतिनाम मरीचिजीवः पुत्रो बभूव, विशाखनन्दिश्च इतरस्येति राज्ञः प्रियङ्गुराज्ञीपुत्रः, स च विश्वभूतिर्मरीचेर्जीवोऽन्यदा यौवने सान्तःपुरः पुष्पकरण्डके उद्याने रेमे, विशाखनन्दिं वनाद्बहिर्दृष्ट्वा चेट्या प्रियङ्गुराज्यै कथितं, तया कुपितया विश्वनन्दिने राज्ञे कथितं, स च कूटेन यात्राभेरीताडनं चकार, भक्त्या विश्वभूतिरुद्यानाद्गतः सर्वान् राज्ञो वशिनः कृत्वाऽऽगतः, वने प्रवेशो न लेभे, विशाखनन्द्याश्रितत्वात्, कूटं ज्ञातं, तत्र कपित्थफलपातनं कृतं, भो द्वारपालाः! एवं मस्तकानि युष्माकं पातयामि परं मे भ्राता, ततश्चिन्तितवान्–भोगा अपमानमूलं, अलं मे भोगैरिति ॥ ४४४ ॥ उक्तार्थमाह—

रायगिह विस्सभूई विसाहभूइसुओ खत्तिए कोडी। वाससहस्सं दिक्खा संभूअजइस्स पासंमि ॥ ४४५ ॥

राजगृहे नगरे विश्वभूतिनामा विशाखभूतिसुतः क्षत्रियोऽभवत्, तत्र च वर्षकोटी आयुरासीत् तस्मिंश्च भवे वर्षसहस्रं दीक्षा कृता सम्भूतयतेः पार्श्वे, एकदा विहरन्मथुरायां मासक्षपणपारणार्थं प्रविष्टः, तत्रोद्वाहायागतेन विशाखनन्दिना दृष्टः ॥ ४४५ ॥

गोत्तासिउ महुराए सनिआणो मासिएण भत्तेणं। महसुक्के उववण्णो तओ चुओ पोअणपुरंमि ॥ ४४६ ॥

साधुः गोत्रासितो गवा अवघृष्य पातितः, विशाखनन्दिना च हसितः—क गतं ते बलं कपित्थपातनमिति, तेन कुपितेन शृङ्गे धृत्वा भ्रामिता गौः निदानं च चकार, यद्येतत्तपसः फलमस्ति तदाऽग्रेतनभवेऽपरिमितबलो भवामि, मृत्वा च सनिदानोऽनालोचिताप्रतिक्रान्तो मासिकेन भक्तेन महाशुक्रे कल्पे उत्पन्न उत्कृष्टायुर्देवः, ततश्च्युतः पोतनपुरे नगरे ॥ ४४६ ॥

पुत्तो पयावइस्सा मिआवईदेविकुच्छिसंभूओ। नामेण तिविठ्ठुत्ती आइं आसी दसाराणं ॥ ४४७ ॥

पुत्रः प्रजापते राज्ञः मृगावतीदेवीकुक्षिसम्भूतः नाम्ना त्रिपृष्ठः, आदिः प्रथम आसीद्दशाराणां ॥ ४४७ ॥

चुलसीईमप्पइट्ठे सीहो नरएसु तिरियमणुएसु। पिअमित्त चक्कवट्टी मूआइ विदेहि चुलसीई ॥ ४४८ ॥

वासुदेवभवे चतुरशीतित्रपल्लक्षाण्यायुरनुभूय सप्तमपृथ्व्यामप्रतिष्ठाने नरकावासे त्रयस्त्रिंशत्सागरायुर्नारकोऽभूत् तत उद्धृत्य सिंहो बभूव, मृत्वा च पुनर्नरके उत्पन्नः, पुनः कतिचिद्भवास्तिर्यग्मनुष्येषु उत्पद्य अपरविदेहे मूकायां राजधान्यां धनञ्जयनृपतेर्धारिणीदेव्याः प्रियमित्राभिधानश्चक्री समुत्पन्नः, चतुरशीतिपूर्वलक्षाण्यायुः ॥ ४४८ ॥

पुत्तो धणंजयस्सा पुट्टिल परिआउ कोडि सव्वट्ठे। णंदण छत्तग्गाए पणवीसाउं सयसहस्सा ॥ ४४९ ॥

धनञ्जयस्य पुत्रश्चक्रिभोगान् भुक्त्वा कथञ्चित्सञ्जातसंवेगः पोट्टिलाचार्यान्तिके प्रव्रजितः, प्रव्रज्यापर्यायो वर्षकोटिर्बभूव, मृत्वा महाशुक्रे कल्पे सर्वार्थे विमाने सप्तदशसागरायुर्देवोऽभवत्, ततश्च्युत्वा छत्राग्रायां नगर्यां जितशत्रुनृपतेर्भद्रादेव्या नन्दनो नाम कुमार उत्पन्नः, तत्र पञ्चविंशतिवर्षलक्षाण्यायुरासीत् ॥ ४४९ ॥ तत्र च बाल एव राज्यं चकार, चतुर्विंशतिवर्षलक्षाणि राज्यं कृत्वा ततः—

पव्वज्ज पुट्टिले सयसहस्स सव्वत्थ मासभत्तेणं । पुप्फुत्तरि उववण्णो तओ चुओ माहणकुलंमि ॥ ४५० ॥

राज्यं विहाय प्रव्रज्यां कृतवान्, पोट्टिलाचार्यसमीपे वर्षलक्षं यावत्, कथं? सर्वत्र मासभक्तेन–मासोपवासेन पारणं, अस्मिन् भवे विंशत्या स्थानकैस्तीर्थकरनामकर्म निकाचयित्वा मासिकया संलेखनया मृत्वा प्राणतकल्पे पुष्पोत्तरावतंसके विंशतिसागरायुर्देवः समुत्पन्नः, ततश्च्युतो ब्राह्मणकुले उत्पन्नः ॥ ४५० ॥

अरिहंतसिद्धपवयण० ॥४५१॥ दंसण० ॥४५२॥ अप्पुव्व० ॥४५३॥ पुरिमेण० ॥४५४॥ तं च कहं ॥४५५॥ निअमा० ॥४५६

एताः षडपि ऋषभदेवाधिकारे व्याख्याताः ॥

माहणकुंडग्गामे कोडालसगुत्तमाहणो अत्थि । तस्स घरे उववण्णो देवाणंदाइ कुच्छिंसि ॥ ४५७ ॥

ब्राह्मणकुण्डग्रामे कोडालसगोत्रो ब्राह्मणः ऋषभदत्ताख्योऽस्ति, तस्य गृहे उत्पन्नः देवानन्दायाः कुक्षौ ॥ ४५७ ॥

वर्द्धमानस्वामिवक्तव्यतानिबद्धां द्वारगाथामाह–

सुमिणंमवहारऽभिग्गह जम्मणमभिसेअ वुड्ढि सरणं च । भेसण विवाह वंचे दाणे संबोहे निक्खमणे ॥४५८॥

महास्वप्ना वक्तव्या यांस्तीर्थकरजनन्यः पश्यन्ति, यथा देवानन्दया प्रविशन्तो निष्क्रामन्तश्च दृष्टास्त्रिशलया च प्रविशन्तः, अपहारो वक्तव्यो, यथा भगवानपहृतः, अभिग्रहो यथा भगवता गर्भस्थेनैव गृहीतः, जन्मविधिर्वक्तव्यः, अभिषेको यथा विबुधाः कुर्वन्ति, वृद्धिर्यथा भगवान् वृद्धिं जगाम, स्मरमिति जातिस्मरणं, 'भेसण'त्ति यथा देवेन भेषितः, विवाहविधिः, अपत्यं पुत्रादि, दानं निष्क्रमणकालसत्कं, सम्बोधनविधिर्यथा लौकान्तिकाः सम्बोधयन्ति, निष्क्रमणे च यो विधिरसौ

वक्तव्य इति समुदायार्थः ॥ ४५८ ॥ अवयवार्थं प्रतिद्वारं वक्ष्यति भाष्यकार एव, तत्र स्वप्नद्वारार्थमभिधित्सुराह–

गय[1] वसह[2] सीह[3] अभिसेअ[4] दाम[5] ससि[6] दिणयरं[7] झयं[8] कुंभं[9]। पउमसर[10] सागर[11] विमाणभवण[12] रयणुच्चय[13] सिहिं[14] च॥४६॥भा०

गजं १ वृषभं २ सिंहं ३ अभिषेकं ४ दाम ५ शशिनं ६ दिनकरं ७ ध्वजं ८ कुम्भं ९ पद्मसरः १० सागरं ११ विमानं (नभवनं) १२ रत्नोच्चयं १३ शिखिनं १४, अभिषेकः–श्रियो गृह्यते, दाम–पुष्पदाम रत्नविचित्रं, विमानं [ च ] तद्भवनं च [ विमानभवनं– ] वैमानिकदेवनिवास इत्यर्थः, अथवा वैमानिकदेवेभ्यश्च्युत्वा भगवति कुक्षाववतीर्णे विमानं पश्यन्ति अधोलोकात्तु भवनं न तूभयं ॥ ४६ ॥

एए चउदस सुमिणे पासइ सा माहणी सुहपसुत्ता। जं रयणिं उववण्णो कुच्छिंसि महायसो वीरो ॥ ४७ ॥ भा०

एतांश्चतुर्दशस्वप्नान् पश्यति सा ब्राह्मणी सुखप्रसुप्ता यस्यां रजन्यामुत्पन्नः कुक्षौ महायशा वीरः, पाठान्तरं 'पेच्छिआ माहणी अ' त्ति ॥ ४७ ॥

अह दिवसे वासीई वसइ तहि माहणीइ कुच्छिंसि। चिंतइ सोहम्मवई साहरिउं जे जिणं कालो ॥ ४८ ॥ (भा०)

अथ दिवसान् द्व्यशीतिं वसति तस्या ब्राह्मण्याः कुक्षाविति। अथ एतावत्सु दिवसेष्वतिक्रान्तेषु चिन्तयति सौधर्मपतिः संहर्तुं, 'जे' इति निपातः पूरणार्थः, जिनं कालो वर्त्तते ॥ ४८ ॥

अरहंत चक्कवट्टी बलदेवा चेव वासुदेवा य। एए उत्तमपुरिसा न हु तुच्छकुलेसु जायंति ॥ ४९ ॥ (भा०)

सुगमा, नवरं तुच्छकुलेष्वसारकुलेषु ॥ ४९ ॥

उग्गकुलभोगखत्तिअकुलेसु इक्खागनायकोरव्वें। हरिवंसे अ विसाले आयंति तहिं पुरिससीहा ॥५०॥ (भा०)

उग्रकुलभोगक्षत्रियकुलेषु इक्ष्वाकुज्ञातकौरव्येषु हरिवंशे च विशाले आयान्ति—उत्पद्यन्ते इत्यर्थः, तत्रोग्रकुलादौ पुरुषसिंहास्तीर्थकरादयः ॥ ५० ॥ यस्मादेवं तस्मात्तीर्थकृद्भक्तिप्रेरितः शक्रो हरिणेगमेषिमुवाच—एष भरतक्षेत्रे चरमतीर्थकृत् प्रागुपात्तशेषकर्मपरिणतिवशात्तुच्छकुले जातस्तदयमितः संहृत्य क्षत्रिये स्थाप्यतामिति, स हि तदादेशात्तथैव चक्रे, भाष्यकारस्त्वमुमेवार्थमथ भणतीत्यादिना प्रतिपादयति—

अह भणइ णेगमेसिं देविंदो एस इत्थ तित्थयरो। लोगुत्तमो महप्पा उववण्णो माहणकुलंमि ॥ ५१ ॥ (भा०)

अथ—अनन्तरं भणति 'णेगमेसिं'ति प्राकृतशैल्या हरिणेगमेषिं देवेन्द्रः एष तीर्थकरः अत्र ब्राह्मणकुले लोकोत्तमो महात्मा उत्पन्नः ॥ ५१ ॥ इदं चासाधु ततश्चेदं कुरु—

खत्तिअकुंडग्गामे सिद्धत्थो नाम खत्तिओ अत्थि। सिद्धत्थभारिआए साहर तिसलाइ कुच्छिंसि ॥ ५२ ॥ (भा०)

क्षत्रियकुण्डग्रामे सिद्धार्थो नाम क्षत्रियोऽस्ति, तत्र सिद्धार्थभार्यायाः संहर त्रिशलायाः कुक्षौ ॥ ५२ ॥

बाढंति भाणिऊणं वासारत्तस्स पंचमे पक्खे। साहरइ पुव्वरत्ते हत्थुत्तर तेरसी दिवसे ॥ ५३ ॥ (भा०)
गयगाहा ॥ ५४ ॥ (भाष्यम्) ॥ एए चोद्दस सुमिणे पासइ सा माहणी पडिनियत्ते। जं रयणी अवहरिंओ कुच्छीओ महायसो वीरो ॥ ५५ ॥ (भाष्यम्)

स हरिनैगमेषिः बाढमित्यभिधायात्यर्थं करोम्यादेशं शिरसि स्वाम्यादेशं इति, वर्षारात्रस्य पञ्चमे पक्षे मासद्वयेऽतिक्रान्ते

आश्विनबहुलत्रयोदश्यां संहरति, पूर्वरात्रे–आद्ययामद्वयान्ते इत्यर्थः, हस्तोत्तरायां त्रयोदशीदिने ॥ ५३ ॥ अनयोर्व्याख्या प्राग्वत्, नवरं पश्यति सा ब्राह्मणी प्रतिनिवृत्तान् यस्यां रजन्यामपहृतः कुक्षीत इति ॥ ५४-५५ ॥

गयगाहा ॥ ५६ ॥ ( भाष्यम् )॥ एए चोदस सुमिणे पासइ सा तिसलया सुहपसुत्ता । जं रयणिं साहरिओ कुच्छिंसि महायसो वीरो ॥ ५७ ॥ ( भा० )

इदं गाथाद्वयं त्रिशलामधिकृत्य पूर्ववद्वाच्यं ॥ ५६–५७ ॥ गतमपसंहारद्वारं, अथाभिग्रहद्वारमाह—

तिहि नाणेहि समग्गो देवी तिसलाइ सो अ कुच्छिंसि । अह वसइ सण्णिगब्भो छम्मासे अद्धमासं च ॥५८॥ ( भा० )

'अथ' अपसंहारानन्तरं वसति, संज्ञी चासौ गर्भश्च संज्ञिगर्भः, क ?–देव्यास्त्रिशलायाः कुक्षौ, ननु सर्वो गर्भः संज्ञ्येव भवतीति विशेषणवैफल्यं, न, दृष्टिवादोपदेशेन विशेषणत्वात्, स च ज्ञानद्वयवानपि भवत्यत आह–त्रिभिर्ज्ञानैः–मतिश्रुतावधिभिः समग्रः, कियत्कालं ?–षण्मासानर्द्धमासं च ॥ ५८ ॥

अह सत्तमंमि मासे गब्भत्थो चेवऽभिग्गहं गिण्हे । नाहं समणो होहं अम्मापिअरंमि जीवंते ॥ ५९ ॥ ( भा० )

अथ सप्तमे मासे गर्भादारभ्य मातापित्रोर्जीवतोरिति ॥ ५९ ॥

दोण्हं वरमहिलाणं गब्भे वसिऊण गब्भसुकुमालो । नवमासे पडिपुण्णे सत्त य दिवसे समइरेगे ॥ ६० ॥ (भा०)

द्वयोर्वरमहिलयोर्गर्भे उषित्वा गर्भसुकुमारः प्रायोऽप्राप्तदुःख इत्यर्थः, कियन्तं कालं ? नवमासान्प्रतिपूर्णान् सप्तदिवसान् सातिरेकान् समधिकानित्यर्थः ॥ जन्मद्वारमाह—

अह चित्तसुद्धपक्खस्स तेरसीपुव्वरत्तकालंमि । हत्थुत्तराहिं जाओ कुण्डग्गामे महावीरो ॥ ६१ ॥ ( भा० )

'अथ' अनन्तरं चैत्रशुद्धपक्षस्य त्रयोदश्यां पूर्वरात्रकाले आद्ययामद्वयान्ते इत्यर्थः, हस्तोत्तरायां जातः, हस्त उत्तरो यासां ता हस्तोत्तराः, उत्तराफाल्गुन्य इत्यर्थः, कुण्डग्रामे महावीरः ॥ ६१ ॥ दिक्कुमार्याद्यागमनं पूर्ववत्, किञ्चिचाह—

आभरणरयणवासं वुट्ठं तित्थंकरंमि जायंमि । सक्को य देवराया उवागओ आगया निहओ ॥ ६२ ॥ ( भा० )

आभरणानि–कटककेयूरादीनि रत्नानि–इन्द्रनीलादीनि तद्वर्षं–वृष्टिं तीर्थकरे जाते सति, शक्रश्च देवराज उपागतस्तत्रैव, तथाऽऽगताः पद्मादयो निधयः ॥ ६२ ॥

तुट्ठाओ देवीओ देवा आणंदिआ सपरिसागा । भयवंमि वद्धमाणे तेलुक्कसुहावहे जाए ॥ ६३ ॥ ( भा० )

तुष्टा देव्यः देवा आनन्दिताः सपर्षदः, भगवति वर्द्धमाने त्रैलोक्यसुखावहे जाते सति ॥ ६३ ॥ अथाभिषेकद्वारमाह—

भवणवइवाणमंतरजोइसवासी विमाणवासी अ । सव्विड्ढीइ सपरिसा चउव्विहा आगया देवा ॥ ६४ ॥ ( भा० )

भवनपतयश्च व्यन्तराश्च ज्योतिर्वासिनश्च ते, तथा विमानवासिनश्च सर्वर्द्ध्या सपर्षदश्चतुर्विधा आगता देवाः ॥ ६४ ॥

देवेहिं संपरिवुडो देविंदो गिण्हिऊण तित्थयरं । नेऊण मंदरगिरिं अभिसेअं तत्थ कासीअ ॥ ६५ ॥ ( भा० )

देवैः संपरिवृतः देवेन्द्रो गृहीत्वा तीर्थकरं नीत्वा मन्दरगिरिमभिषेकं तत्र कृतवान् ॥ ६५ ॥

काऊण य अभिसेअं देविंदो देवदाणवेहि समं । जणणीइ समप्पित्ता जम्मणमहिमं च कासीअ ॥ ६६ ॥

कृत्वा चाभिषेकं देवेन्द्रो देवदानवैः सार्द्धं, देवग्रहणात् ज्योतिष्कवैमानिकग्रहणं, दानवग्रहणात् च व्यन्तरभवनपतीनां,

जनन्याः समर्प्य जन्ममहिमां च कृतवान् स्वर्गे नन्दीश्वरे च ॥ ६६ ॥

खोमं कुंडलजुअलं सिरिदामं चेव देइ सक्को से । मणिकणगरयणवासं उवच्छुभे जंभगा देवा ॥ ६७ ॥ (भा०)

क्षौमं-देववस्त्रं कुण्डलयुग्मं-कर्णाभरणं श्रीदाम-अनेकरत्नखचितं दर्शनसुभगं भवति, तच्च ददाति शक्रः, 'से' तस्य भगवतः, जृम्भका व्यन्तरा देवाः, शेषं सुगमं ॥ ६७ ॥

वेसमणवयणसंचोइआ उ ते तिरिअजंभगा देवा । कोडिग्गसो हिरण्णं रयणाणि अ तत्थ उवणिंति ॥ ६८ ॥

वैश्रमणवचनसंचोदितास्तु ते तिर्यग्जृम्भका देवाः, तिर्यगिति तिर्यग्लोकजृम्भकाः, कोट्यग्रशः-कोटीपरिमाणतः, हिरण्यमघटितरूपं रत्नानि चेन्द्रनीलादीनि तत्रोपनयन्ति ॥ ६८ ॥ अथ वृद्धिद्वारमाह—

अह वड्ढइ सो भयवं दिअलोअचुओ अणोवमसिरीओ । दासीदासपरिवुडो परिकिण्णो पीढमद्देहिं ॥ ६९ ॥ (भा०)

अथ वर्द्धते स भगवान् देवलोकच्युतोऽनुपमश्रीकः दासीदासपरिवृतः, परिकीर्णः पीठमर्दैर्महानृपतिभिः परिवृत इत्यर्थः ॥ ६९ ॥

असिअसिरओ सुनयणो० ॥ ७० ॥ जातिस्मरणद्वारमाह—जाईसरो अ भयवं० ॥ ७१ ॥ (भा०)

व्याख्या पूर्ववत् ॥ ७०—७१ ॥ भेपणद्वारमाह—

अह ऊणट्ठवासस्स भगवओ सुरवराण मज्झंमि । संतगुणुक्कि (णकि) त्तणयं करेइ सक्को सुहम्माए ॥७२॥ (भा०)

'अथ' अनन्तरं न्यूनाष्टवर्षस्य भगवतः सतः सुरवराणां मध्ये सन्तश्च ते गुणाश्च तेषां कीर्त्तनं करोति शक्रः सुधर्म्मायां सभायां व्यवस्थितः ॥ ७२ ॥ किम्भूतमित्याह—

बालो अबालभावो अबालपरक्कमो महावीरो । न हु सक्कइ भेसेउं अमरेहिं सइंदएहिंपि ॥७३॥ (भा०)

अबालभावोऽबालस्वरूपः अबालपराक्रमोऽबालचेष्टः महावीरो न शक्यते भेषयितुममरैर्देवैः सेन्द्रैरपि ॥ ७३ ॥

तं वयणं सोऊणं अह एगु सूरो असद्दहंतो उ । एइ जिणसण्णिगासं तुरिअं सो भेसणट्ठाए ॥ ७४ ॥ (भा०)

तद्वचः श्रुत्वा अथैकः सुरोऽश्रद्दधानस्तु एति–आगच्छति जिनसकाशं त्वरितमसौ भेषणार्थं ॥७४॥ स चागत्यैवं चक्रे—

सप्पं च तरुवरंमी काउं तिंदूसएण डिंभं च । पिट्ठी मुट्ठीइ हओ वंदिअ वीरं पडिनियत्तो ॥ ७५ ॥ (भा०)

सर्पं च तरुवरे कृत्वा तिंदूसकेन–क्रीडाविशेषेण हेतुभूतेन डिम्भं च बालरूपं, कृत्वेत्यनुवर्त्तते, स्वामिनं स्कन्धे आरोप्य ववृधे पिशाचरूपेण, स्वामिना चाभीतेन पृष्ठौ मुष्टिना हतः, वन्दित्वा वीरं प्रतिनिवृत्तः ॥ ७५ ॥

अह तं अम्मापिअरो जाणित्ता अहिअअट्ठवासं तु । कयकोउअलंकारं लेहायरिअस्स उवणिंति ॥ ७६ ॥ (भा०)

'अथ' अनन्तरं भगवन्तं मातापितरौ ज्ञात्वाऽधिकाष्टवर्षं तु कृतानि रक्षादीनि कौतुकानि केयूरादयोऽलङ्काराश्च यस्य स तथा तं, लेखाचार्यायोपनयतः पाठान्तरं वा 'उवणिंसु' त्ति तदा उपनीतवन्तः ॥ ७६ ॥ अत्रान्तरे देवराजस्यासनं चकम्पे, अवधिना च ज्ञात्वेदं प्रयोजनमहो ! अपत्यस्नेहविलसितं भगवन्मातापित्रोः, येन भगवन्तमपि लेखाचार्यायोपनेतुमभ्युद्यताविति सम्प्रधार्यागत्य चोपाध्यायपरिकल्पिते बृहदासने भगवन्तं निवेश्य शब्दलक्षणं पृष्टवान्, अमुमेवार्थमाह भाष्यकारः—

सक्को अ तस्समक्खं भगवंतं आसणे निवेसित्ता । सद्दस्स लक्खणं पुच्छे वागरणं अवयवा इंदं ॥ ७७ ॥ (भा०)

शक्रश्च तत्समक्षं-लेखाचार्यसमक्षं भगवन्तं-तीर्थकरमासने निवेश्य शब्दस्य लक्षणं पृच्छति, पाठान्तरं वा 'पुच्छिंसु सद्-

मेपाणार्थं देवागमः लेखशाला-मोचनं च भा. गा. ७३-७७

लक्खणं'ति पृष्टवान् शब्दलक्षणं, भगवता च व्याकरणमभ्यधायि, व्याक्रियन्ते लौकिकसामयिकाः शब्दा अनेनेति व्याकरणं—शब्दशास्त्रं, तदवयवाः केचनोपाध्यायेन गृहीताः, ततश्चैन्द्रव्याकरणं सञ्जातं ॥ ७७ ॥ अथ विवाहद्वारमाह—

**उम्मुक्कबालभावो कमेण अह जोव्वणं अणुप्पत्तो। भोगसमत्थं णाउं अम्मापिअरो उ वीरस्स॥७८॥ (भा०)**

एवमुन्मुक्तो बालभावो येन स तथा, 'क्रमेण' उक्तप्रकारेण 'अथ' अनन्तरं यौवनमनुप्राप्तः, अत्रान्तरे भोगसमर्थं ज्ञात्वा भगवन्तं मातापितरौ तु वीरस्य ॥ ७८ ॥ किम् ?—

**तिहिरिक्खंमि पसत्थे महन्तसामन्तकुलपसूआए। कारंति पाणिगहणं जसोअवररायकण्णाए ॥ ७९ ॥ (भा०)**

द्वन्द्वैकवद्भावे तिथिऋक्षे प्रशस्ते महच्च तत्सामन्तकुलं च तस्मिन् प्रसूता तया, कारयतो मातापितरौ पाणेर्ग्रहणं, कया ? यशोदा चासौ वरराजकन्यका च तया, तत्र महत्सामन्तकुलप्रसूतयेत्यनेनान्वयमहत्त्वमाह, वरराजकन्ययेत्यनेन तु तत्कालराज्यसम्प्रयुक्ततामाह ॥ ७९ ॥ अथापत्यद्वारमाह—

**पंचविहे माणुस्से भोगे भुंजित्तु सह जसोआए। तेअसिरिंव सुरूवं जणेइ पिअदंसणं धूअं ॥ ८० ॥ (भा०)**

पञ्चविधान् शब्दादीन् मानुष्यान् नृसत्कान् भोगान् भुक्त्वा, ततः यशोदायाः तेजसः श्रीस्तेजश्रीः तां तेजःश्रियमिव सुरूपां, अथवा तस्याः श्रियमिवेति, पाठान्तरं, जनयति प्रियदर्शनां दुहितरं 'जणिंसु'वा पाठः, जनितवान् ॥ ८० ॥ गतमपत्यद्वारं, अत्रान्तरे भगवतः पितरौ कालगतौ, प्रभुरपि तीर्णप्रतिज्ञः, प्रव्रज्याग्रहणाहितमतिः नन्दिवर्द्धनपुरस्सरं स्वजनं पप्रच्छ, स पुनराह—भगवन् ! क्षारं क्षते मा क्षिप, कियन्तमपि कालं तिष्ठ, भगवानाह—कियन्तं ?, स्वजन आह—वर्षद्वयं,

भगवानाह–भोजनादौ मम व्यापारो न वोढव्यः इति, प्रतिपन्ने भगवान् समधिकं वर्षद्वयं प्रासुकैषणीयाहारः शीतोदकमप्यपिबंस्तस्थौ। अत्रान्तरे एव महादानं दत्तवान्, लोकान्तिकैश्च प्रतिबोधितः, पुनः पूर्णावधिः प्रव्रजित इति अमुमेवार्थं संक्षेपतः प्रतिपादयन्नाह—

हत्थुत्तरजोएणं कुंडग्गामंमि खत्तिओ जच्चो। वज्जरिसहसंघयणो भविअजणविबोहओ वीरो ॥ ४५९ ॥
सो देवपरिग्गहिओ तीसं वासाइ वसइ गिहवासे। अम्मापिईहिं भयवं देवत्तगएहिं पव्वइओ ॥ ४६० ॥

'हस्तोत्तरायोगेन' उत्तराफाल्गुनीयोगेन, 'जात्यः' उत्कृष्टः, वीरः, किं? मातापितृभ्यां भगवान् देवत्वगताभ्यां प्रव्रजित इति योगः ॥ ४५९–४६० ॥ अमुमेवार्थं भाष्यकृदाह 'संवच्छरेणे'त्यादि—

संवच्छरेण० ॥ ८१ ॥ एगा हिरण्ण० ॥ ८२ ॥ सिंघाडय० ॥ ८३ ॥ वरवरिआ० ॥८४॥ तिण्णेव य० ॥८५॥ (भा०)
सारस्सयमाइच्चा० ॥ ८६ ॥ एए देवनिकाया० ॥ ८७ ॥ (भा०)
एवं अभित्थुव्वंतो बुद्धो बुद्धारविंदसरिसमुहो। लोगंतिगदेवेहिं कुंडग्गामे महावीरो ॥ ८८ ॥ (भा०)

आह–ऋषभाधिकारे सम्बोधनोत्तरकालं परित्यागद्वारमुक्तं, अत्र तु कस्माद्विपर्ययः? उच्यते, न सर्वार्हतामयं नियमो यदुत सम्बोधनोत्तरकालभाविनी महादानप्रवृत्तिः, नियमेऽपीह दानद्वारस्य बहुवक्तव्यत्वात्सम्बोधनद्वारात्प्रागुपन्यासोऽविरुद्ध एव, निष्क्रमणद्वारमाह—

मणपरिणामो अ कओ अभिनिक्खमणंमि जिणवरिंदेण। देवेहिं य देवीहिं य समंतओ उच्छयं गयणं ॥८९॥(भा०)

'उच्छयं' व्याप्तं ॥ ८९ ॥

भवणवइवाणमंतरजोइसवासी विमाणवासी अ। धरणियले गयणयले विज्जुज्जोओ कओ खिप्पं ॥ ९० ॥ (भा०)

ज्योतिर्वासिनश्च, ज्योतिःशब्देनेह तदालया एवोच्यन्ते, विद्युद्वुद्युोतः ॥ ९० ॥

जाव य कुंडग्गामो जाव य देवाण भवणआवासा। देवेहिं य देवीहिं य अविरहिअं संचरंतेहिं ॥ ९१ ॥ (भा०)

गगनतलं धरणितलं च देवैर्देवीभिरविरहितं व्याप्तं सञ्चरद्भिः ॥ ९१ ॥

चंदप्पभा य सीआ उवणीआ जम्ममरणमुक्कस्स। आसत्तमल्लदामा जलयथलयदिव्वकुसुमेहिं ॥ ९२ ॥ (भा०)

आसक्तानि माल्यदामानि यस्यां सा तथा, तथा जलस्थलजदिव्यकुसुमैश्चार्चितेति वाक्यशेषः ॥ ९२ ॥ शिविकाप्रमाणमाह—

पंचासइआयामा धणूणि वित्थिण्ण पण्णवीसं तु। छत्तीसं उव्विद्धा सीया चंदप्पभा भणिआ ॥ ९३ ॥ (भा०)

पञ्चाशद्धनूंष्यायामो यस्याः सा पञ्चाशदायामा ॥ ९३ ॥

सीआइ मज्झयारे दिव्वं मणिकणगरयणचिंचइअं। सीहासणं महरिहं सपायवीढं जिणवरस्स ॥ ९४ ॥ (भा०)

मणयः—चन्द्रकान्ताद्याः कनकं-देवकाञ्चनं रत्नानि-मरकतादीनि तैः 'चिंचइअं'ति देश्या खचितमित्युच्यते, जिनस्य, कृतमिति वाक्यशेषः ॥ ९४ ॥

आलइअमालमउडो भासुरबोंदी पलंबवणमालो। सेययवत्थनियत्थो जस्स य मोल्लं सयसहस्सं ॥ ९५ ॥ (भा०)

छट्ठेणं भत्तेणं अज्झवसाणेण सोहणेण जिणो। लेसाहिं विसुज्झंतो आरुहई उत्तमं सीअं ॥ ९६ ॥ (भा०)

चतुर्विध-
देवागमः
शिविका-
प्रमाणं च
भा. गा.
९०-९६

'आलइअं' आविद्धमुच्यते, मालाअनेकसुरकुसुमग्रथिता, आविद्धौ मालामुकुटौ यस्य स तथा, निवसितश्वेतवस्त्रः, यस्य च मूल्यं शतसहस्रं दीनाराणां, एवम्भूतः स्वामी मार्गशीर्षबहुलदशम्यां हस्तोत्तरायोगेन ॥ ९५-९६ ॥

सीहासणे निसण्णो सक्कीसाणा य दोहि पासेहिं। वीअंति चामरेहिं मणिकणगविचित्तदंडेहिं ॥९७॥ (भा०)

पुव्विं उक्खित्ता माणुसेहिं सा हट्ठरोमकूवेहिं। पच्छा वहंति सीअं असुरिंदसुरिंदनागिंदा ॥ ९८ ॥ (भा०)

उत्क्षिप्ता-उत्पाटिता मानुषैः सा शिबिका, हृष्टानि रोमकूपानि येषां तैः ॥ ९८ ॥ असुरादिस्वरूपं वर्णयति-

चलचवलभूसणधरा सच्छंदविउव्विआभरणधारी। देविंददाणविंदा वहंति सीअं जिणिंदस्स ॥ ९९ ॥ (भा०)

चला गमनक्रियायोगात्, हारादिचपलभूषणधराश्च, स्वच्छन्दविकुर्वितान्याऽऽभरणानि-कुण्डलादीनि धारयितुं शीलं येषां ते तथा ॥ ९९ ॥ अत्रान्तरे-

कुसुमाणि पंचवण्णाणि मुयंता दुंदुही य ताडंता। देवगणा य पहट्ठा समंतओ उच्छयं गयणं॥ १०० ॥ (भा०)

देवगणाः प्रहृष्टाः, भगवन्तमेव स्तुवन्तीति क्रियाध्याहारः, एवं स्तुवद्भिर्देवैः समन्ततो व्याप्तं गगनं ॥ १०० ॥

वणसंडोव्व कुसुमिओ पउमसरो वा जहा सरयकाले। सोहइ कुसुमभरेणं इय गगणयलं सुरगणेहिं॥१०१॥ (भा०)

सिद्धत्थवणं च (व) जहा असणवणं सणवणं असोगवणं। चूअवणं व कुसुमिअं इअ गयणयलं सुरगणेहिं ॥१०२॥

अयसिवणं व कुसुमिअं कणिआरवणं व चंपयवणं वा तिलयवणं व कुसुमिअं इअ गयणतलं सुरगणेहिं॥१०३॥(भा०)

वरपडहभेरिझल्लरिदुंदुहिसंखसहिएहिं तूरेहिं। धरणियले गयणयले तूरनिनाओ परमरम्मो ॥ १०४ ॥ (भा०)

एवं सदेवमणुआसुराए परिसाए परिवुडो भयवं। अभिथुव्वंतो गिराहिं संपत्तो नायसंडवणं ॥ १०५ ॥ (भा०)
उज्जाणं संपत्तो ओरुभइ उत्तमाउ सीआओ । सयमेव कुणइ लोअं सक्को से पडिच्छए केसे ॥ १०६ ॥ (भा०)
जिणवरमणुण्णवित्ता अंजणघणरुयगविमलसंकासा। केसा खणेण नीआ खीरसरिसनामयं उदहिं॥ १०७॥ (भा०)

अञ्जनं प्रसिद्धं, घनो–मेघो रुचकः–कृष्णमणिविशेषस्तद्वद्विमलः संकाशः–छायाविशेषो येषां ते तथा ॥ १०१-१०७ ॥

दिव्वो मणूसघोसो तूरनिनाओ अ सक्कवयणेणं। खिप्पामेव निलुक्को जाहे पडिवज्जइ चरित्तं ॥ १०८ ॥ (भा०)

'दिव्यः' देवसमुत्थो मनुष्यघोषश्च, तथा तूर्यनिनादश्च, क्षिप्रमेव, 'निलुक्को' देश्या विरतो, यदा यस्मिन् काले प्रतिपद्यते चारित्रं ॥ १०८ ॥ स यथा चारित्रं प्रतिपद्यते तथाऽऽह–

काऊण नमोकारं सिद्धाणमभिग्गहं तु सो गिण्हे। सव्वं मे अकरणिज्जं पावंति चरित्तमारूढो ॥ १०९ ॥ (भा०)

स च भदन्तशब्दरहितं सामायिकमुच्चारयति ॥ १०९ ॥ चारित्रप्रतिपत्तिकाले च भगवतो निर्भूषणस्य सत इन्द्रो देवदूष्यवस्त्रमुपनीतवान्। अत्रान्तरे तत्रागतस्य प्रार्थयतो द्विजस्यार्द्धं तस्य दत्तं स्वामिना, भगवतश्चारित्रप्रतिपत्तिसमनन्तरमेव मनःपर्यायज्ञानमुदपादि, सर्वार्हतां चायं क्रमो, यत आह–

तिहिं नाणेहिं समग्गा तित्थयरा जाव हुंति गिहवासे। पडिवण्णंमि चरित्ते चउनाणी जाव छउमत्था ॥ ११० ॥ (भा०)

यावद्गृहवासे वसन्तीति वाक्यशेषः ॥ ११० ॥

बहिआ य णायसंडे आपुच्छित्ताण नायए सव्वे। दिवसे मुहुत्तसेसे कमारगामं समणुपत्तो ॥ १११ ॥ (भा०)

बहिर्द्धा च कुण्डपुरात् ज्ञातखण्डे उद्याने, आपृच्छ्य 'ज्ञातकान्' स्वजनान् 'सर्वान्' यथासन्निहितान्, तस्मान्निर्गतः कर्म्मारग्रामगमनायेति वाक्यशेषः, तत्र च पथद्वयं–एको जलेनापरः प(स्थ)ल्या, तत्र स्वामी पा(स्थ)ल्या गच्छन् दिवसे मुहूर्त्तशेषे कर्मारग्राममनुप्राप्तः, तत्र प्रतिमया स्थितः ॥ १११ ॥

**गोवनिमित्तं सक्कस्स आगमो वागरेइ देविंदो । कोल्लागबहुल छट्ठस्स पारणे पयस वसुहारा ॥ ४६१ ॥**

कायोत्सर्गस्थं स्वामिनं पप्रच्छ गोपो बलीवर्दान्, स्वामी न ब्रूते, अन्यत्र सोऽन्वेषयितुं लग्नो, रात्रिशेषे ते स्वयमेवागत्य स्वामिपार्श्वे तस्थुः, तावत्सोऽप्यागात्, दृष्ट्वा ताडनायोद्यतगोपनिमित्तं प्रयुक्तावधेः शक्रस्यागमोऽभवत्, विनिवार्य गोपं स्वामिनमभिवन्द्य व्याकरोति–अभिधत्ते देवेन्द्रः यथा–भगवन्नहं द्वादशवर्षाणि वैयावृत्त्यं करोमीत्यादि, सिद्धार्थं वा तत्कालप्राप्तं व्याकृतवान् देवेन्द्रः–भगवांस्त्वया न मोक्तव्य इत्यादि, गते शक्रे भगवतोऽपि कोल्लाकसन्निवेशे बहुलो द्विजः षष्ठस्य पारणके पायसमुपनीतवान्, तद्गृहे वसुधारा निपतिता इति द्वितीयवरवरिकाचूर्णिः ॥ ४६१ ॥

**दूइज्जंतग पिउणो वयंस तिव्वा अभिग्गहा पंच । अचियत्तुग्गहि न वसणं णिच्च वोसट्ठ मोणेणं ॥ ४६२ ॥**

**पाणीपत्तं गिहिवंदणं च तओ वद्धमाण वेगवई । धणदेव सूलपाणिंदसम्म वासऽट्ठिअग्गामे ॥ ४६३ ॥**

विहरतो मोरागसन्निवेशं प्राप्तस्य स्वामिनस्तन्निवासी दूइज्जंतगाभिधानपाषंडस्थो दूइज्जन्तग एवोच्यते, पितुः सिद्धार्थस्य वयस्यः, सोऽभिवाद्य स्वामिनं वसतिं दत्तवानिति वाक्यशेषः, विहृत्य चान्यत्र वर्षाकालगमनाय पुनस्तत्रैवागतेन विदितकुलपत्यभिप्रायेण तीव्रा अभिग्रहाः पञ्च गृहीताः, ते चामी–'अचिअत्तं' देशीवचनं अप्रीत्यभिधायकं, ततश्च तत्स्वामिनो-

कर्मारग्रामे कायोत्सर्गः गोपोपद्रवः पारणं अभिग्रह-पञ्चकं च नि. गा. ४६१-४६३

ऽप्रीतिर्यस्मिन्नवग्रहे स अप्रीत्यवग्रहस्तस्मिन्न वसनं १, नित्यं व्युत्सृष्टकायेन सता २, मौनेन विहर्त्तव्यं ३ ॥ ४६२ ॥ पाणिपात्रभोजिना भवितव्यं, यतः स्वामी सवस्त्रधर्म्मख्यापनार्थं शक्रन्यस्तवस्त्रं यथा प्रतीच्छति तथा सपात्रधर्म्मख्यापनार्थमाद्यपारणकं पात्र एव करोति, तत ऊर्द्धं पाणिभोजी, गृहस्थस्य वन्दनं च अभ्युत्थानं च न कर्त्तव्यं, एतानभिग्रहान् गृहीत्वा तस्मान्निर्गत्य 'वासऽट्ठिअग्गामे' त्ति वर्षाकालमस्थिकग्रामे स्थितः, स च पूर्वं वर्द्धमानाख्यः खल्वासीत्पश्चादस्थिकग्रामसंज्ञामित्थं प्राप्तः, तत्र वेगवती नदी, तां धनदेवाख्यः सार्थवाहः प्रधानगवा अनेकशकटसंयुक्त उत्तीर्ण्णः, तस्य च गोरनेकशकटसमुत्तारणतो हृदयच्छेदोऽभूत्, सार्थवाहस्तत्पालनद्रव्यं जनानां दत्त्वा तं तत्रैव परित्यज्य गतः, स वर्द्धमाननिवासिलोकाऽप्रतिजागरितो मृत्वा तत्रैव शूलपाणिनामा यक्षोऽभूत्, दृष्टभयलोककारितनिक्षिप्तमृतास्थितलायतने स प्रतिष्ठितः इन्द्रशर्मनामा प्रतिजागरकः कृतः, पथिकैरस्थ्युपलक्षितत्वादस्थिकनाम चक्रे ॥ ४६३ ॥

रोद्दा य सत्त वेयण थुइ दस सुमिणुप्पलऽद्धमासे य । मोराए सक्कारं सक्को अच्छंदए कुविओ ॥ ४६४ ॥

रौद्राश्च सप्त वेदना यक्षेण कृताः, स्तुतिश्च तेनैव कृता, दश स्वप्नाः स्वामिना दृष्टाः, उत्पलोऽष्टाङ्गमहानिमित्तज्ञः फलं जगाद, अर्द्धमासं अर्द्धमासं च क्षपणमकार्षीत्, मोरायां लोकः सत्कारं चकार, शक्रोऽच्छन्दके तीर्थकरहीलनात् परिकुपितः ॥ ४६४ ॥

भीमऽट्टहास हत्थी पिसाय नागे य वेयणा सत्त । सिरकण्णनासदन्ते नहऽच्छी पिट्ठी य सत्तमिआ ॥ ११२ ॥ (भा०)
तालपिसायं दो कोइलाउ य दामदुगमेव गोवग्गं । सर सागर सूरं ते मंदर सुविणुप्पले चेव ॥ ११३ ॥

मोहे य झाणे पवयेण धंम्मे संघे य देवलोए य । संसारं णार्ण जसे धम्मं परिसाए मज्झंमि ॥ ११४ ॥

एतास्तु मूलभाष्यगाथाः, भीमाट्टहासः हस्ती पिशाचः नागश्च, एतैः प्रभुमुपाद्रवत्, ततो वेदनाः सप्त शिरःकर्ण्ण-नासादन्तनखाक्षि पृष्ठौ च सप्तमी, एतद्व्यन्तरेण कृता ॥ ११२ ॥ तालपिशाचं द्वौ कोकिलौ च दामद्वयमेव गोवर्गं सरः सागरं सूर्यं अन्त्रान् मन्दरं एतान् स्वप्नान् दृष्टवान् स्वामी, उत्पलश्चैव फलं कथितवान्, तच्चेदं–मोहं च ध्यानं प्रवचनं धर्मः संघश्च 'देवलोकश्च' देवजनश्चेत्यर्थः संसारं ज्ञानं यशोधर्मं परिषदो मध्ये, मोहं च निराकरिष्यतीत्यादिक्रियायोगः स्वयं कार्यः, श्वेतकोकिलः शुक्लध्यानं, विचित्रकोकिलो द्वादशाङ्गप्रवचनं, दामद्विकं यतिश्रावकसम्बन्धिधर्मः, एवं शेषयोजनापि कार्या ॥११३॥११४॥ भा. गा. ११४

मोरागसण्णिवेसे बाहिं सिद्धत्थ तीतमाईणि । साहइ जणस्स अच्छंद पओसो छेअणे सक्को ॥ १ ॥ नि. गा. ४६५

मोराकसन्निवेशे बहिः प्रतिमास्थिते वीरे सत्कारार्थं सिद्धार्थः जनानामतीतादीनि कथयति, स्वामिमहिमां दृष्ट्वाऽच्छन्दस्य प्रद्वेषः, तृणच्छेदपृच्छायां सिद्धार्थेन न छेत्स्यते इत्युक्ते छेदनोद्यते तस्मिन् शक्रो वज्रेणाङ्गुलीस्तस्य चिच्छेद, इयं सर्वपुस्तकेषु नास्ति सोपयोगिनी च ॥

तण छेयंगुलि कम्मार वीरघोस महिसिंदु दसपलिअं । विइइंदसम्म ऊरण बयरीए दाहिणुकुरुडे ॥ ४६५ ॥

अच्छन्दकस्तृणं जग्राह, छेदोऽङ्गुलीनां कृत इन्द्रेण, तस्मिन् रुष्टः सिद्धार्थ ऊचे जनान्–चोरोऽयं यतः कर्मकरो वीरघोषस्तत्सम्बन्धि अनेन दशपलिकं वट्टं गृहीत्वा महिषेन्दुवृक्षः–खर्जुरीवृक्षस्तदधः स्थापितं एकं तावदिदं, द्वितीयमिन्द्रशर्मण ऊरणकोऽनेन भक्षितः, तदस्थीनि चाद्यापि तिष्ठन्त्येव बदर्या अधो दक्षिणोत्कुरुटे ॥ ४६५ ॥

तइअमवच्चं भज्जा कहिही नाहं तओ पिउवयंसो। दाहिणवायालसुवण्णवालुगाकंटए वत्थं ॥ ४६६ ॥

तृतीयं पुनरवाच्यं, अलं कथनेन, निर्बन्धे उक्तं यथा—व्रजत, भार्या अस्य कथयिष्यति, नाहं कथयिष्यामि, तैः पृष्टा, सा उवाच—भगिनीपतिरयं, लज्जितः, स्वामिनं प्राह—यूयमन्यत्रापि यास्यथ अहं क्व यामि?, अप्रीत्यवग्रहं ज्ञात्वा ततः स्वामिनो गच्छतः पितुर्वयस्यः शेषं वस्त्रं दक्षिणवाचालोत्तरवाचालग्रामयोरन्तरे स्वर्णवालुकानद्यां कण्टके लग्नं जग्राह ॥ ४६६ ॥

उत्तरवाचालंतरवणसंडे चंडकोसिओ सप्पो। न डहे चिंता सरणं जोइस कोवाऽहि जाओऽहं ॥ ४६७ ॥

तत उत्तरवाचालग्रामान्तरवनखण्डे चण्डकौशिकः सर्पो न ददाह स्वामिनं अनुकम्पया तत्रागतं, चिन्तास्मरणं ज्योतिष्कः क्रोधाज्जातोऽहिरहं क्षपकः ॥ ४६७ ॥

उत्तरवायाला नागसेण खीरेण भोयणं दिव्वा। सेयवियाए पएसी पंचरहे निज्जरायाणो ॥ ४६८ ॥

तत उत्तरवाचालायां गतं स्वामिनं नागसेनः क्षीरेण प्रतिलाभितवान्, भोजनं जातं स्वामिनः, दिव्यानि प्रादुर्भूतानि, ततः श्वेताम्व्यां प्राप स्वामी, तत्र प्रदेशी राजा स्वामिनो महिमां कृतवान्, ततः स्वामिनं सुरभिपुरं यातमन्तरा गच्छतः पञ्चरथैर्नैयका गोत्रतो राजानो वन्दितवन्तः ॥ ४६८ ॥

सुरहिपुर सिद्धजत्तो गंगा कोसिअ विऊ य खेमिलओ। नाग सुदाढे सीहे कंबलसबला य जिणमहिमा ॥ ४६९ ॥
महुराए जिणदासो आहीर विवाह गोण उववासे। भंडीर मित्त अवच्चे भत्ते णागोहि आगमणं ॥ ४७० ॥
वीरवरस्स भगवओ नावारूढस्स कासि उवसग्गं। मिच्छादिट्ठि परद्धं कंबलसबला समुत्तारे ॥ ४७१ ॥

ततः स्वामी सुरभिपुरं गतः, तत्र गङ्गा नदी सिद्धयात्रो नाविकस्तदा लोके नावमारोहति कौशिकवासितं श्रुत्वा विद्वान् खेमिल उवाच–मारणान्तं विघ्नं प्राप्यं परमेतन्मुनिप्रभावान्मोक्षामहे, नागकुमारः सुदंष्ट्रः स्वामिनं नावारूढं दृष्ट्वा प्रद्विष्टः, स च सिंहो विदारितस्त्रिपृष्ठभवे, कम्बलशम्बलौ चागत्य सुदंष्ट्रं तिरस्कृत्य चक्रतुर्जिनमहिमां ॥ ४६९ ॥ तयोरुत्पत्तिरेवं– मथुरायां जिनदासः श्राद्धः, आभीरविवाहोऽजनि, तत्र जिनदासेनोपकृते आभीरैः लष्टौ द्वौ गवावानीय तद्गृहे बद्धौ, अष्टम्यादिषु ताभ्यां श्रेष्ठिवदुपवासः क्रियते, भण्डीरो यक्षस्तद्यात्रायां मित्रस्ताववाहयत्, श्रेष्ठी तौ व्यथितावपत्य इव दृष्ट्वा दुःखितः, भक्तं पानीयं चानिच्छन्तौ गृहीताऽनशनौ नागौ जातौ, अवधेर्ज्ञात्वाऽऽगमनं तयोः ॥ ४७० ॥ कृतत्रानुपसर्गं मिथ्यादृष्टिः, 'परद्धं' विक्षिप्तं भगवन्तं कम्बलशम्बलौ समुत्तारितवन्तौ ॥ ४७१ ॥

थूणाए बहिं पूसो लक्खणमब्भंतरं च देविंदो । रायगिहि तंतुसाला मासक्खमणं च गोसालो ॥ ४७२ ॥

ततो नदीपुलिनप्रतिबिम्बितस्वामिसल्लक्षणपदानुसारेण व्रजन् स्थूणायां बहिः प्रतिमास्थं भगवन्तं पुष्पः सामुद्रिकवेदी दृष्ट्वा लक्षणशास्त्रं निनिन्द, इतश्चावधिना ज्ञात्वा देवेन्द्र आगत्य उवाच–पुष्प ! लक्षणं न जानासि, अपरिमितलक्षणोऽयं धर्मचक्रवर्त्ती, ततो लक्षणमभ्यन्तरं च गोक्षीरगौरं रुधिरं प्रशस्तमित्यादि कथितवान्, ततः स्वामी राजगृहे नालन्दायां तन्त्वाक-(तन्तुवाय) शालैकदेशेऽनुज्ञाप्याऽऽद्यमासक्षपणमुपसम्पद्य तस्थौ, तत्र गोशाल आगात् ॥ ४७२ ॥ तस्यैवमुत्पत्तिः–

मंखलि मंख सुभद्दा सरवण गोबहुलमेव गोसालो । विजयाणंदसुणंदे भोअण खज्जे अ कामगुणे ॥ ४७३ ॥

मङ्खलिनामा मङ्खस्तस्य सुभद्रा भार्या शरवणविषये गोबहुलद्विजस्य गोशालायां प्रसूतेति गोशालः, स्वामिनं पारणके



॥ २७७ ॥

विजयो विपुलभोजनविधिना प्रतिलाभितवान्, तत्र पञ्च दिव्यानि दृष्ट्वा गोशालः तव शिष्योऽस्मीति स्वामिनमाह, द्वितीय-पारणके आनन्दः खाद्यकविधिना पक्वान्नेन, तृतीये सुनन्दः सर्वकामगुणितेन परमान्नादिना प्रतिलाभितवान् ॥ ४७३ ॥

कुल्लाग बहुल पायस दिव्वा गोसाल दट्ठु पव्वज्जा । बाहिं सुवण्णखलए पायसथाली नियइगहणं ॥ ४७४ ॥

ततः स्वामी चतुर्मासक्षपणपारणके कोल्लाकसन्निवेशे गतः, तत्र बहुलद्विजः पायसं दत्तवान् स्वामिनः (ने), दिव्यानि, गोशालस्तन्त्वाक(न्तुवाय)शालायां स्वामिनमदृष्ट्वा राजगृहेऽन्तो बहिश्च गवेषयन् स्वोपकरणं द्विजेभ्यो दत्त्वा समुखं शिरो मुण्डयित्वा कोल्लाके भगवन्तं दृष्ट्वा त्वत्प्रव्रज्याऽस्तु ममेत्युक्तवान् । स्वामी सगोशालः सुवर्णखलग्रामं याति, तस्माद्बहिर्गोपैः पायसं महास्थाल्यां पच्यमानं दृष्ट्वा गोशालः स्वामिनमाह—आगम्यतां भुज्यतेऽत्र, सिद्धार्थेन तद्भङ्गकथने गोपैः प्रयत्नरक्षितापि पायसस्थाली भग्ना, नियतेर्ग्रहणं, यद्भाव्यं तद्भवत्येवेति गोशालेन मतम् ॥ ४७४ ॥

बंभणगामे नंदोवनंद उवणंद तेय पच्छद्धे । चंपा दुमासखमणे वासावासं मुणी खमइ ॥ ४७५ ॥

ततो ब्राह्मणग्रामे स्वामी जगाम, तत्र नन्दोपनन्दौ भ्रातरौ, ग्रामस्य द्वौ पाटकौ, एको नन्दस्यान्य उपनन्दस्य, स्वामी नन्दपाटके प्रविष्टः प्रतिलाभितश्च नन्देन, गोशाल उपनन्दगृहे पर्युषिताऽन्नदानाद्रुष्टो मे धर्माचार्यस्य यद्यस्ति तपस्तेजस्तदास्य गृहं दह्यतामिति शापमदात् । ततो ग्रामस्य प्रत्यर्द्धे ( ततो यथासन्निहितैर्वानमन्तरैः ) तद्गृहं दग्धं, ततः स्वामी चम्पां गतः, तत्र द्विमासक्षपणेन वर्षावासं मुनिः क्षपयति ॥ ४७५ ॥

कालाए सुण्णगारे सीहो विज्जुमई गोट्ठिदासी य । खंदो दंतिलियाए पत्तालग सुण्णगारंमि ॥ ४७६ ॥

चरमद्विमासपारणकं चम्पाया वहिः कृत्वा कालायां सन्निवेशे स्वामी गतः, शून्यगृहे स्वामी प्रतिमां स्थितः, गोशालेन तत्रैव शून्यागारे सिंहो ग्रामणीपुत्रो विद्युन्मतीगोष्ठीदास्या समं क्रीडन् हसितः, तेन कुट्टितः, स्वामिनमाह–अहमेकाक्येव कुट्टितो यूयं किं न वारयत, सिद्धार्थः प्राह–मैवं कुर्याः, ततः स्वामी पात्रालके गतः, शून्यागारे तस्थौ, तत्र स्कन्दः स्वदास्या दन्तिलिकया समं तत्राऽऽगात्तथैव च जातं ॥ ४७६ ॥

मुणिचंद कुमाराए कूवणय चंपरमणिज्जउज्जाणे । चोराय चारि अगडे सोमजयंती उवसमेइ ॥ ४७७ ॥

ततः स्वामी कुमारकं सन्निवेशं गतः, चम्परमणीये उद्याने प्रतिमया स्थितः, इतश्च मुनिचन्द्रः श्रीपार्श्वशिष्यो वहुशिष्य-युतस्तत्रैव कूपनककुम्भकारशालायां तस्थौ, तत्साधून् दृष्ट्वा गोशालः प्राह–के यूयं ?, तैरुक्तं निर्ग्रन्थाः, ततः पुनराह–क यूयं ? क्व ममाचार्यः ?, तैरूचे–यादृशस्त्वं तादृशस्ते धर्माचार्योऽपि भविष्यति, ततो रुष्टेनोक्तं–मे धर्माचार्यतपसा दह्यतां युष्मदाश्रयः, तैरुक्तं नैतद् भयमस्माकं, ततो स्वामिनः सर्वमुक्तं, सिद्धार्थेनोचे–नैते साधवो दह्यन्ते, रात्रौ जिनकल्पतुलनां कुर्वाणः प्रतिमास्थो मुनिचन्द्रो मत्तेन कुम्भकारेण तेन व्यापादितश्चौरभ्रान्त्या, अवधिज्ञानमुत्पन्नं स्वर्गतः, महिमार्थमायातसुरोद्योतं दृष्ट्वा उपाश्रयो दह्यतेऽमीषामित्युवाच स्वामिनं, गोशालः सिद्धार्थेन यथावत्कथने तत्र गत्वा तच्छिष्यान्निर्भर्त्स्याऽऽयातः, ततः स्वामी चौरायां गतः, तत्र चारिकौ हेरिकाविति कृत्वा आरक्षिका अगडे प्रक्षिपन्त्युत्तारयन्ति च, तत्र प्रथममेव गोशालः क्षिप्तः, स्वामी तु नाद्यापि तावता तत्र सोमाजयन्तीनाम्न्यौ उत्पलभगिन्यौ संयमाऽक्षमतया प्रव्राजिकीभूते ज्ञात्वा तमुपसर्गमुपशामयतः ॥४७७॥

पिट्ठीचंपा वासं तत्थ चउम्मासिएण खमणेणं । कयंगल देउलवरिसे दरिद्दथेरा य गोसालो ॥ ४७८ ॥

ततः स्वामी पृष्ठचम्पां गतः, तत्र वर्षाश्चतुर्मासक्षपणेनाऽतिवाह्य बहिः पारयित्वा कयङ्गलसन्निवेशं गतः, तत्र दरिद्र-स्थविरा नाम पाषण्डस्थाः, तत्पाटकमध्यस्थदेवकुले स्वामिनः(मी) प्रतिमास्थितस्य(मां स्थितः), माघमासे हिमवर्षे निपतति दरिद्रस्थविराः समहिलादिपरिग्रहा जागरदिने गायन्ति, दृष्ट्वा गोशालो जहास, पुनः पुनः, तैस्त्रिभिर्नि(स्त्रीन् वारान् नि)र्वासितः, पुनः स्वामिशिष्य इति कृत्वा मुक्तः ॥ ४७८ ॥

सावत्थी सिरिभद्दा निंदू पिउदत्त पयस सिवदत्ते । दारगणी नखवालो हलिद्द पडिमाऽगणी पहिआ ॥ ४७९ ॥

ततः स्वामी श्रावस्त्यां गतः, वहिः प्रतिमया स्थितः, तत्र सिद्धार्थोक्तमद्यमांसभोजनपरिहाराय गोशालो वणिग्गेहेषु भिक्षार्थं भ्रमन् पितृदत्तगृहपतिभार्यया निंद्वा मृतापत्यप्रसवाश्रीभद्रया शिवदत्तनैमित्तिकवाचा स्वापत्यजीवनाय गर्भमांसमिश्र-पायसं भोजितोऽग्निभयाच्चान्यतो गृहद्वारं चक्रे, आगतेन सिद्धार्थोक्ताऽप्रत्यये पायसवमने कृते नखवालादि दृष्ट्वा रुष्टेन तद्गृहं गवेषयतापि न दृष्टं, ततः स्वामितपसा पाटकोऽपि ज्वालितः । ततः स्वामी बहिर्हरिद्रसन्निवेशात् हरिद्रवृक्षस्याधोऽवतस्थे प्रतिमया, पथिकप्रज्वालिताग्निना प्रभोरनपसरणात् पादौ दग्धौ, गोशालो नष्टस्तत्र ॥ ४७९ ॥

तत्तो य णंगलाए डिंभ मुणी अच्छिकड्ढणं चेव । आवत्ते मुहतासे मुणिओत्ति अ बाहि बलदेवो ॥ ४८० ॥

ततः स्वामी नङ्गलाग्रामे वासुदेवगृहे प्रतिमया स्थितः, तत्र गोशालो डिम्भभापनायाऽक्षिकर्षणमकार्षीत् तत्पित्रादिभिः स कुट्टितो मुनिपिशाच इति कृत्वा मुक्तः । ततः स्वामी आवर्त्तग्रामे बलदेवगृहे प्रतिमया स्थितः, तत्र गोशालेन मुखत्रासो डिम्भभापनाय कृतः, तत्पित्रादीन् 'मुणिओत्ति' ग्रथिलोऽयं किमेतेन हतेनास्य स्वाम्येव हन्यते इति विचिन्त्य स्वामिहनना-

योद्यतान् दृष्ट्वा वाहुना वलदेवमूर्तिर्लाङ्गलमुत्पाट्योत्तस्थौ, सर्वे ततः स्वामिनं नताः ॥ ४८० ॥

चोरा मंडव भोज्जं गोसालो वहण तेय ज्झामणया। मेहो य कालहत्थी कलंबुयाए उ उवसग्गा ॥ ४८१ ॥

ततः स्वामी चोराकसन्निवेशं गतः, तत्र मण्डपे भोज्यं पच्यमानं दृष्ट्वा गोशालः पुनः पुनः न्यग्भूय वेलां विलोकयति स्म, ततश्चोरशङ्कया तैस्तस्य हननं कृतं, ततो रुष्टेन स्वामितपस्तेजसा ध्यामना मण्डपस्य कृता, ततः कलम्बुकासन्निवेशं स्वामी गतः, तत्र मेघः कालहस्ती च द्वौ भ्रातरौ कालहस्तिना दृष्ट्वोपसर्गाश्चक्रिरे, मेघेनोपलक्ष्य क्षमितः ॥ ४८१ ॥

लाढेसु य उवसग्गा घोरा पुण्णकलसा य दो तेणा। वज्जहया सक्केणं भद्दिय वासासु चउमासं ॥ ४८२ ॥

ततः स्वामी बहुकर्मनिर्जरार्थं लाढाविषयं प्राप, तत्र हीलनादयो घोरा उपसर्गाः सोढाः, ततः पूर्णकलशाख्य अनार्ये ग्रामे स्वामिनो गच्छतोऽन्तरा द्वौ स्तेनौ अपशुकन इति कृत्वा असिमुत्पाद्य धावितौ, ज्ञात्वा वज्रेण हतौ शक्रेण। ततः स्वामी भद्रिकापुर्यां वर्षासु चातुर्मास्यं तपश्चकार ॥ ४८२ ॥

कयलिसमागम भोयण मंखलि दहिकूर भगवओ पडिमा। जंबूसंडे गोट्ठी य भोयणं भगवओ पडिमा ॥ ४८३ ॥

ततो बहिः पारयित्वा स्वामी विहरन् कदलिसमागमग्रामं गतः, तत्र मङ्खलिर्गोशालो दधिकूरभोजनं कुर्वन्नतृप्तो जनेन निर्भर्त्सितः, भगवतः प्रतिमा जाता, ततो जम्बूखण्डग्रामे गोष्ठ्या क्षीरकुरभोजनं कुर्वन्मङ्खलिर्निर्भर्त्सितस्तथैव भगवतश्च प्रतिमा ॥ ४८३ ॥

तंबाए नंदिसेणो पडिमा आरक्खि वहण भय डहणं। कूविय चारिय मोक्खे विजय पगब्भा य पत्तेअं ॥ ४८४ ॥

ततः स्वामी तम्बाकग्रामं गतः, तत्र पार्श्वापत्यीयो नन्दिषेण आचार्यो बहुशिष्यः, तस्य प्रतिमास्थस्याऽऽरक्षकपुत्रेण चौरभयेन रात्रौ भल्लेन हननं, अवधिर्जातः, शेषं मुनिचन्द्रवत् , दहनमुपाश्रयस्येत्याद्यवादीद्गोशालः। ततः स्वामी कूपिकसन्निवेशं गतः, तत्र चारिक इति कृत्वा गृहीतः, तत्र विजयाप्रगल्भे च पार्श्वान्तेवासिन्यौ द्वे प्रव्राजिके ज्ञात्वा ताभ्यां स्वामिनो मोक्षश्चक्रे, 'पत्तेअं'ति पृथग्भूतौ स्वामी गोशालश्च ॥ ४८४ ॥

तेणेहि पहे गहिओ गोसालो माउलोत्ति वाहणया। भगवं वेसालीए कम्मार घणेण देविंदो ॥ ४८५ ॥

अन्यस्मिन्पथि गच्छन् गोशालः स्तेनैर्गृहीतः, पञ्चशतैरपि तैर्मातुल इति कृत्वा वाहनया(नेन) खिन्नो अचिन्तयत्—वरं स्वामिनैव सार्द्धं गमनमिति स्वामिनं मार्गयितुं लग्नः, स्वाम्यपि वैशाल्यां गतः, अयस्कारशालायां स्थितः प्रतिमया, तत्रैकः कर्म्मकरोऽयस्करः षण्मासं यावद्रोगी भूत्वा आरोग्यः सन्नुपकरणानि गृहीत्वा शालामाऽऽगात्, स्वामिनं दृष्ट्वाऽमङ्गलमिति विचिन्त्य घनेन हन्तुं उद्यतोऽभूत् देवेन्द्रो ज्ञात्वाऽऽगत्य तेनैव तं जघान ॥ ४८५ ॥

गामाग विहेलग जक्ख तावसी उवसमावसाण थुई। छट्ठेण सालिसीसे विसुज्झमाणस्स लोगोही ॥ ४८६ ॥

ततः स्वामी ग्रामाकसन्निवेशं गतः, तत्रोद्याने विभेलकयक्षो महिमां चक्रे। ततः शालिशीर्षग्राम उद्याने प्रतिमास्थस्य स्वामिनो माघमासे त्रिपृष्ठभवाऽपमानितान्तःपुरी मृत्वा व्यन्तरी जाता तापसीरूपं कृत्वा जलभृतजटाभिरन्याऽसह्यमुपसर्गं चक्रे, उपशमावसाने स्तुतिं च, तद्वेदनामधिसहमानस्य षष्ठेन तपसा विशुद्धमानस्य लोकावधिरुत्पेदे ॥ ४८६ ॥

पुणरवि भद्दिअनगरे तवं विचित्तं च छट्ठवासंमि। मगहाए निरुवसग्गं मुणि उउवद्धंमि विहरित्था ॥ ४८७ ॥

ततः स्वामी भद्रिकानगरे गतः, तत्र षष्ठवर्षासु चतुर्मासतपो विचित्रांश्चाभिग्रहानकरोत् । तत्र पुनरपि षण्मासान्ते गोशालो मिलितः । ततः स्वामी बहिः पारयित्वा मगधायां निरुपसर्गं ऋतुबद्धे मुनिर्विहृतवान् ॥ ४८७ ॥

आलभिआए वासं कुंडागे तह देउले पराहुत्तो । मद्दण देउल सागारिअं मुहमूले दोसुवि मुणित्ति ॥४८८॥

तत आलभिकानगरीं सप्तमवर्षा उपागतः स्वामी चतुर्मासक्षपणेन, ततो बहिः पारयित्वा कुण्डाकसन्निवेशे वासुदेवकुले स्वामी प्रतिमां स्थितः, गोशालोऽपि वासुदेवप्रतिमायाः पराङ्मुखोऽधिष्ठानं मुखे कृत्वा तस्थौ, कुट्टितश्च । ततो मर्दनाग्रामे बलदेवदेवकुले कोणे स्वामी प्रतिमया तस्थौ, गोशालो बलदेवमुखमूले सागारिकं—मेहनं कृत्वा तस्थौ, द्वयोरपि स्थानयोर्मुनिरिति कृत्वा जनैर्मुक्तः ॥ ४८८ ॥

बहूसालगसालवणे कडपूअण पडिम विग्घणोवसमे । लोहग्गलंमि चारिय जिअसत्तू उप्पले मोक्खो ॥ ४८९ ॥

ततः स्वामी बहुशालकग्रामे शालवनोद्याने प्रतिमया तस्थौ । तत्र कटकपूतना व्यन्तरी विघ्नेनोपशमे महिमामकार्षीत् । ततः स्वामी लोहार्गले, चारनरैश्चारिक इति कृत्वा जितशत्रुपार्श्वे सगोशाल उपनीतः । तत्र पूर्वमेवास्थिकग्रामागत उत्पल आसीत् तेन मोक्षश्चक्रे ॥ ४८९ ॥

तत्तो य पुरिमताले वग्गुर ईसाण अच्चए पडिमा । मल्लीजिणायण पडिमा उण्णाए वंसि बहुगोट्ठी ॥ ४९० ॥

ततः स्वामी पुरिमताले गतः, तत्र शकटमुखोद्यानस्य पुरस्य चान्तरा प्रतिमया तस्थौ । वग्गुरश्रेष्ठी सभद्राभार्य उद्यानस्थ-मल्लीजिनजीर्णायतनप्रतिमां नमस्कृतवान् सन्तानाय नव्याऽऽयतनविधापनादिभिराराध च। जाते गर्भेऽन्यदा यांस्तत्र ईशानेन्द्र-

भद्रिकाम-
गधादिषु
विहारः
नि० गा०
४८८-४९०

वचसा ज्ञात्वा स्वामिनमर्चति स प्रतिमास्थं, ततो मल्लीजिनायतनप्रतिमां च। ततः स्वामी उन्नाकसन्निवेशे याति तत्रान्तरा 'बहुगोट्ठी' गोशालेन सम्मुखाऽऽगच्छदन्तुरवधूवरहसनं, तैः कुट्टयित्वा वंशजाल्यां स क्षिप्तः, स्वामिछत्रधरत्वान्मुक्तश्च ॥४९०॥

गोभूमि वज्जलाढे गोवक्कोवे य वंसि जिणुवसमे। रायगिहऽट्ठमवासं वज्जभूमी बहुवसग्गा ॥ ४९१ ॥

ततः स्वामी गोभूमिं याति, तत्रान्तराऽटव्यां बहुगावश्चरन्ति, तेन गोभूमिरेषा, अत्र गोशालो गोपान् अरे! वज्रलाढाः—म्लेच्छाः! इत्याक्रोश्य मार्गं पप्रच्छ, तेषां कोपः, तैर्वंशजाल्यां क्षिप्तः जिनस्याऽयमित्युपशमे मुक्तः। ततो राजगृहे स्वाम्यष्टमवर्षां अकरोत् चतुर्मासकतपश्चक्रे, बहिः पारयित्वा वज्रभूमिर्बहूपसर्गेति कृत्वा तत्र गतः स्वामी नवमवर्षारात्रं च कृतवान्, वर्षाकालश्चतुर्विधाहाररहित आसीदपरं च मासद्वयं तत्रैव निरशनो विहृत इति षण्मासिकं क्षपणमिहाभूत् ॥ ४९१ ॥

अनिअयवासं सिद्धत्थपुरं तिलत्थंब पुच्छ निप्फत्ती। उप्पाडेइ अणज्जो गोसालो वास बहुलाए ॥ ४९२ ॥

वसत्यभावेनाऽनियतवासमऽकार्षीत्, ततः सिद्धार्थपुरं गतः, ततः कूर्मग्रामं प्रस्थितः स्वामी, तत्रान्तरा तिलस्तम्भस्तं दृष्ट्वा गोशालः पप्रच्छ—भगवन्! 'अयं निष्पत्स्यते न वा', स्वामिना एते सप्त तिलपुष्पजीवा मृत्वा एकशम्ब्यां तिला भविष्यन्तीति, निष्पत्तिरित्युक्ते उत्पाटयति अनार्यो गोशालस्तं, ततो व्यन्तरैर्वृष्टिश्चक्रे, बहुलया गवा क्षुरेण क्षिप्तः प्रतिष्ठितः, पुनर्बलता कियद्भिर्दिनैर्दृष्टः तिलस्तथैव, नियतिर्गाढीकृता ॥ ४९२ ॥

मगहा गोव्बरगामो गोसंखी वेसियाण पाणामा। कुम्मग्गामायावण गोसाले गोवण पउट्टे ॥ ४९३ ॥

मगधायां राजगृहचम्पयोरन्तरा गोर्बरग्रामे गोशङ्खी कौटुम्बिकस्तेनासन्नभग्नग्रामबहिरपत्यं दृष्ट्वाऽपुत्रत्वाद्गृहीतं वर्द्धितं

च, तन्माता चम्पायां चौरैर्विक्रीता वेश्या जाता, स तत्र यौवने 'तां' गच्छन् गोवत्सरूपदेवीसङ्केतेन मातरं ज्ञात्वा विमोच्य च प्राणायामां(मिकां) दीक्षां जग्राह । स वैश्यायनर्षिः कूर्मग्रामे आतापनां करोति, तस्य यूकाशय्यातर इति कथनेन गोशाले कोपनं, प्रद्विष्टः स तेजोलेश्यां मुक्तवान्, स्वामी च गोशालरक्षायै शीतलेश्यां च, आतापनापरस्य सदा षष्ठतपःसनखकुल्माषपिण्डिकया एकेनोष्णोदकचुलुकेन पारयतः षण्मास्या उत्पद्यते तेजोलेश्येति सिद्धार्थोक्तोपायैः पृथग्भूतः श्रावस्त्यां कुम्भकारशालास्थितस्तां साधितवान्, अष्टाङ्गनिमित्तं शिक्षितं, ततोऽजिनो जिनप्रलापी भ्रमति गोशालः ॥ ४९३ ॥

वेसालीए पडिमं डिंभमुणिउत्ति तत्थ गणराया । पूएइ संखनामो चित्तो नावाए भगिणिसुओ ॥ ४९४ ॥

वैशाल्यां स्वामिनं प्रतिमास्थं शङ्खो नाम गणराजः पितृवयस्यः सिद्धार्थनृपतिमित्रं पूजितवान्, ततः स्वामिनं द(ग)ण्डकिकानद्यान्तरं पण्ये मूल्ये याच्यमाने नाविकैर्नावा उत्तीर्णे शङ्खराजस्य भगिनीसुतश्चात्र आगच्छन् मोचितवान् ॥ ४९४ ॥

वाणियगामायावण आनंदो ओहि परीसह सहिंति । सावत्थी वासं चित्ततवो साणुलट्ठि बहिं ॥ ४९५ ॥

वाणिज्यग्रामे सदा षष्ठभोजिन आतापयत आनन्दश्रावकस्यावधिरुत्पन्नः, स स्वामिनं दृष्ट्वा अहो परीषहसह ! इति स्तुतिपरोऽचिरेण स्वामिन् ! केवलमुत्पत्स्यते इत्याद्युक्तवान् । ततः स्वामी श्रावस्त्यां दशमं वर्षारात्रं विचित्रं च तपोऽकरोत्, ततः सानुय(ल)ष्टिग्रामे बहिरस्थात् ॥ ४९५ ॥

पडिमा भद्द महाभद्द सव्वओभद्द पढमिआ चउरो । अट्ठयवीसाणंदे बहुलिय तह उज्झिए दिव्वा ॥ ४९६ ॥

आद्या भद्रप्रतिमा तस्यां दिने पूर्वाभिमुखं स्थीयते, पश्चाद्रात्रौ दक्षिणाभिमुखं, पश्चिमाभिमुखं दिने, रात्रावुत्तरे (राभिमुखं)

एवं षष्ठभक्तेन पूर्यते । महाभद्रायां पूर्वदिश्येकमहोरात्रं, एवं शेषदिक्ष्वपि, एषा दशमेन पूर्यते । सर्वतोभद्रायां दशस्वपि दिक्ष्वेकैकमहोरात्रं, तत्रोर्द्धदिशमधिकृत्य यदा कायोत्सर्गं कुरुते तदोर्द्धलोकव्यस्थितान्येव कानिचिद्द्रव्याणि ध्यायति, अधोदिशि त्वधोव्यवस्थितानि, एवमेषा द्वाविंशतिभक्तेन समाप्यते, तत्र प्रथमायां भद्राख्यायां चत्वारश्चतुष्कका यामानां स्युः, चतुर्दिक्षु प्रत्येकचतुर्यामकायोत्सर्गकरणात्, महाभद्रायामष्टचतुष्कका यामानां, 'वीस' त्ति सर्वतोभद्रायां विंशतिचतुष्कका यामानां । एतास्वन्तरा पारणाऽभावेन समाप्तासु स्वामिन आनन्दगृहपतिगृहे वहुलिकादासीहस्तेन उज्झितभिक्षया पारणके जाते दिव्यानि ॥ ४९६ ॥

दढभूमीए बहिआ पेढालं नाम होइ उज्जाणं । पोलास चेइयंमी ठिएगराईमहापडिमं ॥ ४९७ ॥

ततः स्वामी दृढभूमिं वहुम्लेच्छां गतः, तस्या वहिः पेढालोद्याने पोलासचैत्येऽष्टमभक्तेनैकरात्रिकीं प्रतिमां स्थितः ॥४९७॥

सक्को अ देवराया समागओ भणइ हरिसिओ वयणं । तिण्णिवि लोग समत्था जिणवीरमणं न चलेउं जे ॥४९८॥

'जे' पूरणे ॥ ४९८ ॥ इतश्च—

सोहम्मकप्पवासी देवो सक्कस्स सो अमरिसेणं । सामाणिअ संगमओ बेइ सुरिंदं पडिनिविट्ठो ॥ ४९९ ॥

सुरेन्द्रं प्रति प्रतिनिविष्टो अभिनिवेशवान् ॥ ४९९ ॥

तेलोक्कं असमत्थंति वेह एतस्स चालणं काउं । अज्जेव पासह इमं ममवसगं भट्ठजोगतवं ॥ ५०० ॥

स ब्रूते वीरमनश्चालयितुं त्रैलोक्यमसमर्थमित्युक्तिर्युष्माकं रागेण, अन्यथा प्रेषय मामेतस्य चालनं कर्तुमद्यैवेक्षस्वैनं मम वशगं भ्रष्टयोगतपसं, इन्द्रेण स न निषिद्धः, यतो मा जानीयात्स्वामी परनिश्रया तपः करोति ॥ ५०० ॥

भद्राद्याः प्रतिमाः
दृढभूमौ विहारः
शक्रप्रशंसा
सङ्गम-प्रतिज्ञा
नि० गा० ४९७-५००

अह आगओ तुरंतो देवो सक्कस्स सो अमरिसेणं । कासी य हुउवसग्गं मिच्छदिट्ठी पडिनिविट्ठो ॥ ५०१ ॥

मिथ्यादृष्टिरभव्यः ॥ ५०१ ॥

धूली पिवीलिआओ उद्दंसा चेव तहय उण्होला । विंछुय नउला सप्पा य मूसगा चेव अट्ठमगा ॥ ५०२ ॥

धूलिवृष्टिः स्वामिनमुपरिं तावच्चकार यावत् स्वामी निरुच्छवासोऽभूत्, परं ध्यानान्न चचाल, ततः श्रान्तस्तां संहृत्य किटिका वज्रतुण्डा विचक्रे, ताभिश्चालनीतुल्यश्चक्रे स्वामी, तत उद्दंशान् वज्रतुण्डान्, तत 'उण्होला' इति घृतिल्लिकादिकास्तीक्ष्णतुण्डाः, ततो वृश्चिकाः, ततो नकुलाः, ततः सर्पाः, ततो मूषकाश्चाष्टमकास्तेन विचक्रिरे, तैर्भक्ष्यमाणोऽपि भगवान्न चचाल ॥ ५०२ ॥

हत्थी हत्थीणिआओ पिसायए घोररूव वग्घो य । थेरो थेरी सूओ आगच्छइ पक्कणो य तहा ॥ ५०३ ॥

हस्ती, हस्तिनी, एताभ्यां शुण्डाघातचरणमर्दनादिव्यथा कृता स्वामिनः, पिशाचैर्नानोपसर्गं चक्रे, घोररूपव्याघ्रो दंष्ट्रानखैर्व्यथां, स्थविरः स्थविरा सिद्धार्थत्रिशले करुणविलापान् वितेनतुः । 'सूओ'त्ति सूपकारः स एवं–त्रिशलारूपानन्तरमेव स्कन्धावारो विकृतः स्वामिपार्श्वे व्यवस्थितः, तत्र सूपकारः किल चूल्ल्यर्थं पाषाणानलभमानः स्वामिपादान्तरेऽग्निं प्रज्वाल्य स्थालीं पदोपरि व्यवस्थाप्य पचति भक्तं । 'पक्कणो'त्ति चण्डालः स तीक्ष्णतुण्डशकुनिभृतपञ्जराणि स्वामिनः कर्णबाहुमूलादिप्रदेशेष्ववलम्बते पक्षिणश्च पञ्जराच्छिद्रैर्मुखानि निःसार्य स्वाम्यङ्गं भक्षयन्ति ॥ ५०३ ॥



खरवाय कलंकलिया कालचक्कं तहेव य । पाभाइय उवसग्गे वीसइमो होइ अणुलोमो ॥ ५०४ ॥

खरवातेन स्वामी पातितः, कलंकलिकावातेन चक्रवद्भ्रामितः, कालचक्रं विकृत्य तेनाहतः स्वामी निमग्नः पृथिव्यां ताव-

यावदग्रं नखहस्तयोः, एवमपि चालयितुमशक्नुवता तेन प्रभातविकुर्वणारूप उपसर्गोऽनुलोमो विंशतितमश्चक्रे, यथा देवार्य! अद्यापि किं तिष्ठसि? स्वामी ज्ञानेन जानाति यथा न प्रभातं ॥ ५०४ ॥ अन्ये त्वेनं विंशतितमं व्याचक्षते—

सामाणिअदेवड्ढिं देवो दावेइ सो विमाणगओ। भणइ य वरेह महरिसि! निप्फत्ती सग्गमोक्खाणं ॥ ५०५ ॥

भणति च—वृणु महर्षे! स्वर्गमोक्षयोरपि निष्पत्तिं यथा तामपि कुर्वे ॥ ५०५ ॥

उवहयमइविण्णाणो ताहे वीरं बहु प्पसाहेउं। ओहीए निज्झाइ झायइ छज्जीवहियमेव ॥ ५०६ ॥

उपहतमतिविज्ञानस्तदा वीरं बहुभिरुपसर्गैः प्रसाधयितुं अवधिना निध्यायति, विभुस्त्वक्षुभितः षड्जीवहितमेव ध्यायति ५०६

वालुय पंथे य तेणा माउलपारणग तत्थ काणच्छी। तत्तो सुभूम अंजलि सुच्छित्ताए य विडरूवं ॥ ५०७ ॥

ततः स्वामिनो वालुकाख्यग्रामं गच्छतो अन्तरा पथि स्तेनाः पञ्चशतीमाना विकुर्विता वालुका च यत्र मज्जयते, तैर्मातुल इति कृत्वा वाहनं वज्राङ्गैरालिङ्गनं च यथा पर्वता अपि स्फुटन्ति। ततो वालुकां गतस्य पारणाय तत्र भिक्षां हिण्डतः स्वामिनो रूपमावृत्य काणाक्षिस्त्रीणां दर्शयति, ततः सुभूमग्रामे स्त्रीणां प्रार्थनायाञ्जलीः कारयति यथा कुप्यते स्वामी, ततः सुक्षेत्रग्रामे विडरूपं हसनगानादिकुचेष्टाकलितं स्वामिनश्चकार, तत्रापि कुट्टनं ॥ ५०७ ॥

मलए पिसायरूवं सिवरूवं हत्थिसीसए चेव। ओहसणं पडिमाए मसाण सक्को जवण पुच्छा ॥ ५०८ ॥

मलये पिशाचरूपं विकुर्व्य स्त्र्यादीन् भाषयति, हन्यते च स्वामी, ततो हस्तिशीर्षग्रामे शिवस्वरूपं भिक्षां गतस्य स्वामिनो विकुर्व्य स्त्रीदर्शने त्वचमपकृष्य विकृतं लिङ्गं करोति, ततः स्वामी चिन्तयत्येष बाढमुड्डाहं करोत्यऽनैषणां च। ततो ग्रामं

नैव प्रविशामीति विचिन्त्य वहिरेव एकान्ते प्रतिमयाऽस्थात् । ततः सङ्गमकेनोपहसनं यथा न शक्नोमि त्वां चालयितुमिति विलोकयामि तावदेहि ग्रामं, प्रतिमया स्थितं स्वामिनं श्मशाने शक्र आगत्य 'जत्ता भे? जवणिज्जं च भे? अवावाह' मित्यादिपृच्छां पप्रच्छ ॥ ५०८ ॥

तोसलि कुसीसरूवं संधिच्छेओ इमोत्ति वज्झो य। मोएइ इंदालिउ तत्थ महाभूइलो नामं ॥ ५०९ ॥

ततः स्वामी को(तो)सलिसन्निवेशे बहिः प्रतिमयाऽस्थात्, ततः सुरो दध्यौ, नायं प्रविशति, अधुनाऽस्यात्रस्थस्यैव करोम्युपसर्गं, । ततः कुशिष्यरूपं विकुर्व्य खात्रं पातयन् जनैर्हतः प्राह सुरः—अहं किं जाने? गुरुणा प्रेपितोऽहं, ततः सन्धिच्छेदोऽयमेतद्गुरुर्वध्य इति कृत्वा नीयमानं स्वामिनं दृष्ट्वा उपलक्ष्य मोचयतीन्द्रजालिकस्तत्र महाभूतिलो नाम ॥ ५०९ ॥

मोसलि संधि सुमागह मोएई रट्ठिओ पिउवयंसो। तोसलि य सत्त रज्जूवावत्ती तोसलीमोक्खो ॥ ५१० ॥

मोसलिसन्निवेशे वहिः प्रतिमास्थस्वामिपार्श्वे खात्रखनकोपकरणानि विकुर्व्य, क्षुल्लकादर्शने ज्ञातं सुरचेष्टितं ॥ ५१० ॥

सिद्धत्थपुरे तेणुत्ति कोसिओ आसवाणिओ मोक्खो। वयगाम हिंडऽणेसण विइयंदिणे वेइ उवसंतो ॥ ५११ ॥

ततः सिद्धार्थपुरे तथैव स्तेन इति कृत्वा गृहीतस्तत्राश्ववणिक्कौशिकस्तेनोपलक्ष्य मोक्षः कारितः । ततः स्वामी व्रजग्रामं गोकुलं गतः । तत्र च तद्दिने सर्वत्र परमान्नमस्ति । उपसर्गान् कृत्वा चिरं स्थितस्य सुरस्य (ते सुरे)स्वामी चिन्तयति षण्मास्य (सा गताः) स गतो भविष्यति, ततो हिण्डंस्तत्कृतामनेषणां दृष्ट्वा स्वामी उपयुक्तो ज्ञात्वा अर्द्धहिण्डित एवाऽऽगत्य बहिः प्रतिमां स्थितः । अवधिना शुद्धपरिणामं स्वामिनं ज्ञात्वा द्वितीयदिने उपशान्तः सन् सुरो ब्रूते ॥ ५११ ॥

वच्चह हिंडह न करेमि किंचि इच्छा न किंचि वत्तव्वो । तत्थेव वच्छवाली थेरी परमन्नवसुहारा ॥ ५१२ ॥

व्रज विहारादौ-हिण्ड गोचरादौ, स्वामी आह-इच्छया व्रजामि न वेति, नाहं कस्यापि किञ्चिद्वक्तव्यः । ततः स्वामी द्वितीयदिने तत्रैव गोकुले हिण्डन् वत्सपाल्या स्थविरया परमान्नेन प्रतिलाभितः, वसुधारा निपतिता ॥ ५१२ ॥

छम्मासे अणुबद्धं देवो कासीय सो उ उवसग्गं । दट्ठूण वयग्गामे वंदिय वीरं पडिनियत्तो ॥ ५१३ ॥

दृष्ट्वा अचलितं, इतश्च सौधर्मकल्पे सर्वदेवाः तद्दिनं यावदुद्विग्नमनसो अभूवन्, शक्रेण स निर्वासितः स्वर्गात् ॥ ५१३ ॥

देवो चुओ महिड्ढिओ वरमंदरचूलियाइ सिहरंमि । परिवारिओ सुरवहूहिं आउंमि सागरे सेसे ॥ ५१४ ॥

च्युतो भ्रष्टः स्वर्गात् महर्द्धिक इन्द्रसामानिकः स मन्दरचूलिकायां यानि(न)कविमानेनागत्य वधूभिः परिवारितस्तस्थौ, सुराः शेषाः शक्रनिषिद्धाः स्वर्ग एव तस्थुः । स च द्विसागरोपमायुस्तत्र च समये एकसागरोपममतिक्रान्तमेकं तु शेषं ॥ ५१४ ॥

आलभियाए हरि विज्जू जिणस्स भत्तीइ वंदओ एइ । भगवं पियपुच्छा जिय उवसग्गत्ति थेवमवसेसं ॥ ५१५ ॥

तत आलभिकायां हरिकान्तो विद्युत्कुमारो जिनस्य भक्त्या वन्दिष्यत इति वन्दक एति वन्दित्वा भणति भगवन् ! प्रियं पृच्छामो जिता उपसर्गा इति स्तोकमवशेषं तिष्ठति ॥ ५१५ ॥

हरिसह सेयवियाए सावत्थी खंद पडिम सक्को य । ओयरिउं पडिमाए लोगो आउट्टिओ वंदे ॥ ५१६ ॥

ततः श्वेतविकायां गतस्य हरिसहः प्रियं प्रष्टुमेति । ततः श्रावस्त्यां बहिः प्रतिमास्थस्य स्वामिनः स्कन्दप्रतिमाया जनैर्महिमा क्रियमाणां दृष्ट्वा शक्रस्तस्यां प्रतिमायामवतीर्य-अधिष्ठाय स्वामिनं नमति, ततो-लोकः 'आउट्टिओ'त्ति आवर्जितो वन्दते ॥ ५१६ ॥

कोसंबी चंदसूरोयरणं वाणारसीइ सक्को उ। रायगिहे ईसाणो मिहिला जणओ य धरणो य ॥ ५१७ ॥

कौशाम्ब्यां प्रियपृच्छार्थं, चन्द्रसूर्यावतरणं जातं। वाराणस्यां शक्रः प्रियं पृच्छति, राजगृहे ईशानेन्द्रः, मिथिलायां जनको राजा धरणेन्द्रश्च प्रियं पृच्छतः ॥ ५१७ ॥

वेसालि भूयणंदो चमरुप्पाओ य सुंसुमारपुरे। भोगपुरि सिंदिकंदग माहिंदो खत्तिओ कुणति ॥ ५१८ ॥

वैशाल्यां गतस्य स्वामिन एकादशमो वर्षारात्रोऽभूत्, तत्र भूतः(तानन्दः)प्रियं पृच्छति, ततः स्वामिनः सुंसुमारपुरं गतस्य चमरोत्पातो जातः। ततो भोगपुरं 'सिंदि'त्ति खर्जूरी तस्याः सकण्टककुम्बाभिर्माहेन्द्रः क्षत्रियः स्वामिन उपसर्गं करोति ॥५१८॥

वारण सणंकुमारे नंदीगामे पिउसहा वंदे। मेंढियगामे गोवो वित्तासणयं च देविंदो ॥ ५१९ ॥

अत्रान्तरे सनत्कुमारस्तस्य वारणं चक्रे प्रियपृच्छार्थमागतः। नन्दिग्रामे स्वामिनः प्रिय(पितृ)सखा-पितृमित्रं नन्दिर्वन्दते, मिण्ढिकग्रामे गोपः स्वामिनमुपसर्गयत्, तस्य वित्रासनकं च देवेन्द्रोऽकार्षीत् ॥ ५१९ ॥

कोसंबीए सयाणीओ अभिग्गहो पोसबहुल पाडिवए। चाउम्मास मिगावई विजय सुगुत्तो य नंदा य ॥ ५२० ॥

तच्चावाई चंपा दहिवाहण वसुमई विइयनामा। धणवह मूला लोयण संपुल दाणे य पव्वज्जा ॥ ५२१ ॥

ततः स्वामी कौशाम्ब्यां गतः, तत्र शतानीको राजा मृगावती देवी विजया प्रतीहारी(रिणी) तत्त्ववादीनाम धर्मपाठकः सुगुप्तोऽमात्यस्तद्भार्या नन्दा, सा च श्राविका, मृगावत्या वयस्या, स्वामिना तत्र पौषबहुलप्रतिपदि अभिग्रहो जगृहे- यथा द्रव्यतः कुल्माषान् सूर्पकोणेन, क्षेत्रतो देहल्या एकं पादमारत एकं परतः कृत्वा, कालतो निर्वृत्तेषु भिक्षाचरेषु राज-

सुता दासत्वमाप्ता निगडिता रुदती मुण्डितमस्तका अष्टमभक्तिका, चेद्दास्यति तदा ग्रहिष्यामीति परीषहसहनार्थं, स्वामिनो गोचरचर्यां हिण्डतश्चत्वारो मासा जाताः, नन्दादिभिरुपक्रान्तं परं स्वामी केनापि प्रकारेण न गृह्णाति। इतश्च चम्पेश-दधिवाहनधारिणीसुता वसुमती चन्दनबालेति द्वितीयनाम्नी दैवयोगाद्धनावहश्रेष्ठिगृहे वर्त्तते। तद्भार्या मूला साऽवलोकनगता चन्दनां श्रेष्ठिपादौ प्रक्षालयन्तीं श्रेष्ठिनं च तत्केशरचनापरमऽपश्यत्, ततो मूलादत्तदुःखस्थया चन्दनया स्वामी प्रतिलाभितः, पञ्च दिव्यानि, केशास्तदवस्था एव जाता, निगडानि स्वर्णनूपुराणि जातानि। शक्र आगात्, सान्तःपुरो राजाप्याऽऽगात्। तत्र सम्पुलो नाम दधिवाहनकञ्चुकी दृष्ट्वा तत्पादयोर्निपत्य प्ररुन्नः, मृगावत्या भगिनी पद्मावती दधिवाहनेनोढा। धारिणी च पद्मावत्याः सपत्नीति कृत्वा धारिण्यपि मृगावत्या भगिन्येव। ततः शक्रेण तस्याः शतानीकस्य दानं उक्तं च—सङ्गोपयैतां यावत्स्वामिनो ज्ञानमुत्पद्यते, ततः प्रव्रज्यां गृहीष्यत्येषा, पञ्चदिनोनया षण्मास्या स्वामिना भिक्षा लब्धा ॥ ५२०—५२१ ॥

**तत्तो सुमंलाए सणंकुमार सुछेत्त एइ माहिंदो। पालग वाइलवणिए अमंगलं अप्पणो असिणा ॥ ५२२ ॥**

ततः सुमङ्गलग्रामे स्वामिवन्दनाय सनत्कुमार आगात्, ततः सुक्षेत्रे माहेन्द्रः, ततो वालुका(पालक)ग्रामे वाइलवणिग् यात्रायां गच्छन् स्वामिनं दृष्ट्वाऽमङ्गलमिति कृत्वात्मनः असिना घाताय धावन् सिद्धार्थेन हतः ॥ ५२२ ॥

**चंपा वासावासं जक्खिंद साइदत्त पुच्छा य। वागरण दुह पएसण पच्चक्खाणे य दुविहे अ ॥ ५२३ ॥**

ततः स्वामी चम्पायां स्वातिदत्तद्विजस्याग्निहोत्रशालायां वर्षावासं तस्थौ। चतुर्मासांस्तत्र क्षपयति। रात्रौ रात्रौ पूर्णभद्रमाणिभद्रौ यक्षेन्द्रौ स्वामिनः पर्युपास्तिं कुर्वाणौ दृष्ट्वा विस्मितेन स्वातिदत्तेन पृच्छा कृता—को ह्यात्मेति, स्वामिना व्याकरणं—योऽहमभि-

मन्यते इत्यादिजीवस्थापनं, पुनरपि पृच्छा-भगवन् किं प्रदेशनं ? किं प्रत्याख्यानं ? स्वाम्याह-द्विधा प्रदेशनं धार्मिकमधार्मिकं च, प्रदेशनकं नाम प्रदेशः, द्विविधं प्रत्याख्यानं-मूलगुणप्रत्याख्यानं उत्तरगुणप्रत्याख्यानं च, विप्रो यक्षौ च बुद्धाः ॥५२३॥

जंभियगामे नाणस्स उप्पया वागरेइ देविंदो । मिंढियगामे चमरो वंदणं पियपुच्छणं कुणइ ॥ ५२४ ॥

ततः स्वामिनो जृम्भिकाग्रामं गतस्य देवेन्द्र आगत्य नाट्यविधिं दर्शयित्वा व्याकरोति-यथेयद्भिर्दिनैर्ज्ञानस्योत्पत्तिर्भविष्यति, ततो मिण्ढिकग्रामे चमरो वन्दनं प्रियपृच्छां करोति ॥ ५२४ ॥

छम्माणि गोव कडसल पवेसणं मज्झिमाए पावाए । खरओ विज्ज सिद्धत्थ वाणियओ नीहरावेइ ॥ ५२५॥

ततः षण्माणीग्रामे स्वामिनो बहिः प्रतिमास्थस्य पार्श्वे गोपो गा मुक्त्वा ग्रामं प्रविष्टः, आगतश्च पृच्छति-देवार्य ! क्व गताः ? नात्र दृश्यन्ते, मौने कृते रुष्टेन तेन स्वामिकर्णयोः कटशलाकाग्रप्रवेशनं कृतं । ते च शलाके तथा प्रक्षिप्ते यथा मिथो लग्ने, अग्रे छित्त्वाऽदृश्ये कृते, त्रिपृष्ठेन शय्यापालस्य कर्णयोस्तप्तत्रपुप्रक्षेपयता यत्कर्मार्जितं तदुदीर्णं वीरभवे, शय्यापालको भवं भ्रान्त्वा गोपः । ततः स्वामी मध्यमापापायां गतः, सिद्धार्थवणिग्गेहे भिक्षार्थं तत्रागतः खरकवैद्यो दृष्ट्वा स्वामिनं सशल्यं ज्ञातवान् । वणिग् वैद्यात्ते शलाके निर्गमयति स्म, सण्डासाभ्यां गृहीत्वा कृष्टे उद्याने गत्वा, स्वामिना तदाकर्षणे आराटिर्मुक्ता, तत्र महाभैरवमुद्यानं जातं देवकुलं च, संरोहणौषधेन तदैव स्वामी प्रगुणोऽभूत् । सर्वेषु किलोपसर्गेषु के दुर्विषहाः ?, उच्यते, जघन्येषु कटपूतनाव्यन्तरीशीतं, मध्यमेषु कालचक्रं, उत्कृष्टेषु शल्योद्धरणं कर्णयोः । एवमुपसर्गा गोपेनारब्धा गोपेनैव च निष्ठिताः । गोपः सप्तमपृथिव्यां गतः, खरकः सिद्धार्थश्च स्वर्गतौ ॥ ५२५ ॥

जंभिय बहि उजुवालियतीर वियावत्त सामसालअहे । छट्ठेणुक्कुडुयस्स उ उप्पण्णं केवलं णाणं ॥ ५२६ ॥

ततः स्वामिनो जृम्भिकाया बहिः, ऋजुवालुकानदीतीरे अव्यक्तचैत्यस्यादूरासन्ने श्यामाकस्य गृहपतेः क्षेत्रे शालवृक्षाधः षष्ठेन तपसा उत्कटिकासनस्थस्योत्पन्नं केवलज्ञानं ॥ ५२६ ॥ समाप्ता उपसर्गाः, तपसा केवलमुत्पन्नमिति कृत्वा यत्स्वामिना तपः कृतं तदाह–

जो य तवो अणुचिण्णो वीरवरेणं महाणुभावेणं । छउमत्थकालियाए अहक्कमं कित्तइस्सामि ॥ ५२७ ॥

छद्मस्थकाले, यत्तदोर्नित्याभिसम्बन्धात्तत् यथाक्रमं–येन क्रमेणानुचरितं ॥ ५२७ ॥ तच्चेदं–

नव किर चाउम्मासे छक्कीर दोमासिए उवासीय । बारस य मासियाइं बावत्तरि अद्धमासाइं ॥ ५२८ ॥

उपोषितवान्, किलः परोक्षाप्तगमवादसंसूचकः ॥ ५२८ ॥

एगं किर छम्मासं दो किर तेमासिए उवासीय । अड्ढाइज्जा य दुवे दो चेव दिवड्ढमासाइं ॥ ५२९ ॥

अर्द्धतृतीयमासनिष्पन्नं तपः क्षपणं वार्द्धतृतीयं, ते अर्द्धतृतीये, चः क्रियानुकर्षणार्थः, द्वे एव सार्द्धमासे तपसी क्षपणे वा, क्रियानुवर्त्तत एव ॥ ५२९ ॥

भद्दं च महाभद्दं पडिमं तत्तो य सव्वओभद्दं । दो चत्तारि दसेव य दिवसे ठासीय अणुबद्धं ॥ ५३० ॥

सर्वतोभद्रां स्थितवाननुबद्धमिति योगः, आसामेवानुपूर्व्या दिवसप्रमाणमाह–'दो' इत्यादिदिवसाननुबद्धं सन्ततं ॥ ५३० ॥

गोयरमभिग्गहजुयं खमणं छम्मासियं च कासी य । पंचदिवसेहि ऊणं अव्वहिओ वच्छनयरीए ॥ ५३१ ॥

गोचराभिग्रहयुक्तं क्षपणं, अव्यथितः, वत्सानगर्यां—कौशाम्ब्यां ॥ ५३१ ॥

दस दो य किर महप्पा ठाइ मुणी एगराइयं पडिमं । अट्ठमभत्तेण जई एक्केक्कं चरमराईयं ॥ ५३२ ॥

दश द्वे च द्वादशेत्यर्थः, स्थितवान्मुनिरेकरात्रिकी प्रतिमा, कथमित्याह अष्टमभक्तेन यतिः प्रयत्नवानेकैकां चरमरात्रिकीं चरमरात्रिनिष्पन्नां ॥ ५३२ ॥

दो चेव य छट्ठसए अउणातीसे उवासिओ भगवं । न कयाइ निच्चभत्तं चउत्थभत्तं च से आसि ॥ ५३३ ॥

उपोषितः ॥ ५३३ ॥

बारस वासे अहिए छट्ठं भत्तं जहण्णयं आसि । सव्वं च तवोकम्मं अपाणयं आसि वीरस्स ॥ ५३४ ॥

द्वादश वर्षाण्यधिकानि भगवतः छद्मस्थस्य सतः षष्ठं भक्तं जघन्यकमासीत् अपानकं, अयमर्थः—क्षीरादिद्रवाहारभोजनकाललभ्यव्यतिरेकेण पानकपरिभोगो नाऽऽसेवितः ॥ ५३४ ॥ पारणककालमानमाह—

तिण्णि सए दिवसाणं अउणावण्णं तु पारणाकालो । उक्कुडुयनिसेज्जाणं ठियपडिमाणं सए बहुए ॥ ५३५ ॥

तथा उत्कुडुकनिषद्यानां स्थितप्रतिमानां शतानि बहूनि ॥ ५३५ ॥

पव्वज्जाए पढमं दिवसं एत्थं तु पक्खिवित्ता णं । संकलियंमि उ संते जं लद्धं तं निसामेह ॥ ५३६ ॥

बारस चेव य वासा मासा छच्चेव अद्धमासो य । वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ ५३७ ॥

एवं तवोगुणरओ अणुपुव्वेणं मुणी विहरमाणो । घोरं परीसहचमुं अहियासित्ता महावीरो ॥ ५३८ ॥

भगवतः
तपोवर्णनं
छद्मस्थकालं
च
नि० गा०
५३२-५३८

अत्रैवोक्तलक्षणे दिवसगणे ॥ ५३६—५३८ ॥

उप्पण्णंमि अणंते नट्ठंमि य छाउमत्थिए नाणे । राईए संपत्तो महसेणवणंमि उज्जाणे ॥ ५३९ ॥

ज्ञानोत्पत्तिस्थाने कस्यापि दीक्षादि(क्षा)लाभमपश्यन्मुहूर्त्तमात्रं देवपूजां जीतमिति कृत्वा अनुभूय देशनामात्रं कृत्वा असङ्ख्येयदेवकोटीपरिवृतो देवोद्योतेन शेषाध्वानमुद्योतयन् रात्र्यां मध्यमानगर्यां महसेनवनोद्यानं सम्प्राप्तः ॥ ५३९ ॥

अमरनररायमहिओ पत्तो धम्मवरचक्कवट्टित्तं । बीयं पि समोसरणं पावाए मज्झिमाए उ ॥ ५४० ॥

पुनर्द्वितीयं समवसरणं पापायां मध्यमायां प्राप्त इत्यनुवर्त्तते, ज्ञानोत्पत्तिस्थानकृतपूजापेक्षया चास्य द्वितीयता ॥ ५४० ॥

तत्थ किल सोमिलज्जोत्ति माहणो तस्स दिक्खकालंमि । पउरा जणजाणवया समागया जन्नवाडंमि ॥ ५४१ ॥

सोमिलार्य इति ब्राह्मणस्तस्य 'दीक्षाकाले' यागकाले 'पौराः' विशिष्टनगरनिवासिलोकाः 'जनाः' सामान्यलोकाः, जानपदा विषयलोकाः ॥ ५४१ ॥ अत्रान्तरे—

एगंते य विवित्ते उत्तरपासंमि जन्नवाडस्स । तो देवदाणविंदा करेंति महिमं जिणिंदस्स ॥ ५४२ ॥

एकान्ते च विविक्ते ॥ ५४२ ॥ अमुमेवार्थं किञ्चित्सविशेषं भाष्यकार आह—

भवणवइवाणमंतरजोइसवासी विमणवासी य ।

सव्विड्ढीए सपरिसा कासी नाणुप्पयामहिमं ॥ १२५ ॥ (भाष्यम्)

समवसरणवक्तव्यतां प्रपञ्चतः प्रतिपादयन्नेतां द्वारगाथामाह—

भगवतः केवलोत्पत्तिः देवकृतमहिमा च नि० गा० ५३९-५४२

**समोसरणे केवईआ रूवं पुच्छ वागरण सोयपरिणामे । दाणं च देवमल्ले मल्लाणयणे उवरि तित्थं ॥ ५४३ ॥**

समवसरणविषयो विधिर्वाच्यः, 'केवइअ'त्ति कियन्ति सामायिकानि भगवति कथयति मनुष्यादयः प्रतिपद्यन्ते ?, कियतो वा भागादपूर्वसमवसरणेऽदृष्टपूर्वेण वा साधुना आगन्तव्यं, भगवतो रूपं व्यावर्णनीयं, किमुत्कृष्टरूपतया भगवतः प्रयोजनमिति पृच्छा कार्या, उत्तरं च वाच्यं, कियन्तो वा युगपदेव हृद्गतं संशयं पृच्छन्तीति, व्याकरणं स्वामिनो वाच्यं, यथा युगपदेव सङ्ख्यातीतानामपि पृच्छतां व्याकरोति, पृच्छाया व्याकरणमित्येकं वा द्वारं, श्रोतृपरिणामो वाच्यो, यथा—सर्वश्रोतृणां भागवती वाक् स्वभाषया परिणमते, 'दाणं च'त्ति वृत्तिदानं प्रीतिदानं च कियत्प्रयच्छन्ति चक्रवर्त्यादयस्तीर्थकृत्प्रवृत्तिकथकेभ्य इति वाच्यं, गन्धप्रक्षेपाद्देवानां सम्बन्धि माल्यं देवमाल्यं—बल्यादि कः करोतीत्यादि वाच्यं, माल्यानयने यो विधिरसौ वाच्यः, उपरीति पौरुष्यामतिक्रान्तायां तीर्थमिति—गणधरो देशनां करोति ॥ ५४३ ॥

**जत्थ अपुव्वोसरणं जत्थ व देवो महिड्ढिओ एइ । वाउदयपुप्फवद्दलपागारतियं च अभिओगा ॥ ५४४ ॥**

अपूर्वसमवसरणं स्यादवृत्तपूर्वमित्यर्थः, यत्र वा भूतपूर्वसमवसरणे क्षेत्रे, 'एति' आगच्छति, तत्र किमित्याह—वातं रेण्वाद्यपनोदायोदकवर्दलं भाविरेणुसन्तापोपशान्तये, पुष्पवर्दलं क्षितिभूषणाय, तथा प्राकारत्रितयं चाभियोग्या देवाः, कुर्वन्तीति वाक्यशेषः, अन्यत्र त्वनियमः ॥ ५४४ ॥ सामान्येन समवसरणविधिरुक्तो विशेषेणाह—

**मणिकणगरयणचित्तं भूमीभागं समंतओ सुरभिं । आजोअणंतरेणं करेंति देवा विचित्तं तु ॥ ५४५ ॥**

'आओअणंत रतो(रेणं)' योजनपरिमाणमित्यर्थः, पुनः विचित्रग्रहणं वैचित्र्यनानात्वख्यापनार्थं ॥ ५४५ ॥

वेंटट्ठाइं सुरभिं जलथलयं दिव्वकुसुमणीहारिं । पइरंति समंतेण दसद्धवण्णं कुसुमवासं ॥ ५४६ ॥

वृन्तस्थायि सुरभि जलस्थलजं दिव्यकुसुमनिर्हारि प्रकिरन्ति समन्ततो दशार्द्धवर्णं कुसुमवर्षं, अत्र निर्हारि-प्रबलो गन्धप्रसरः ॥ ५४६ ॥

मणिकणगरयणचित्ते चउदिसिं तोरणे विउव्वंति । सच्छत्तसालभंजियमयरद्धयचिंधसंठाणे ॥ ५४७ ॥

छत्रं प्रतीतं, सालभञ्जिकाः-स्तम्भपुत्तलिकाः, मकर इति मकरमुखोपलक्षणं, ध्वजाः प्रतीताः, चिह्नानि-स्वस्तिकादीनि । संस्थानं-तद्रचनाविशेष एव, सच्छोभनानि छत्रसालभञ्जिकामकरध्वजचिह्नसंस्थानानि येषु तोरणेषु तानि तथा, एतानि व्यन्तराः कुर्वन्ति ॥ ५४७ ॥

तिन्नि य पागारवरे रयणविचित्ते तहिं सुरगणिंदा । मणिकंचणकविसीसगविभूसिए ते विउव्वेंति ॥ ५४८ ॥

अब्भंतर मज्झ बहिं विमाणजोईभवणाहिवकया उ । पागारा तिण्णि भवे रयणे कणगे य रयए य ॥ ५४९ ॥

अभ्यन्तरे मध्ये बहिः, रत्नेषु भवो रात्नः, एवं काञ्चनो राजतः ॥ ५४८-५४९ ॥

मणिरयणहेमयाविय कविसीसा सव्वरयणिया दारा । सव्वरयणामय च्चिय पडागधयतोरणविचित्ता ॥ ५५० ॥

मणिरत्नहेममयान्यपि च, तत्र पञ्चवर्णमणिमयानि कपिशीर्षकाण्याद्ये प्राकारे वैमानिकाः, नानारत्नमयानि द्वितीये ज्योतिष्काः, हेममयानि तृतीये भवनपतयः । तथा सर्वरत्नमयानि द्वाराणि त एव कुर्वन्ति, तथा सर्वरत्नमयान्येव मूलदलतः पताकाध्वजप्रधानानि तोरणानि विचित्राणि कनकचन्द्रस्वस्तिकादिभिः ॥ ५५० ॥

तत्तो य समंतेणं कालागरुकुंदुरुक्कमीसेणं । गंधेण मणहरेणं धूवघडीओ विउव्वेंति ॥ ५५१ ॥

गन्धेन मनोहारिणा युक्ता धूपघटिका विकुर्वन्ति त्रिदशा एव ॥ ५५१ ॥

उक्किट्ठिसीहणायं कलयलसद्देण सव्वओ सव्वं । तित्थयरपायमूले करेंति देवा णिवयमाणा ॥ ५५२ ॥

उत्कृष्टिर्हर्षविशेषप्रेरितो ध्वनिविशेषस्तेन सिंहनादं, कलकलशब्देन 'सर्वतः' सर्वासु दिक्षु युक्तं सर्वं ॥ ५५२ ॥

चेइदुमपेढछंदय आसणछत्तं च चामराओ य । जं चऽण्णं करणिज्जं करेंति तं वाणमंतरिया ॥ ५५३ ॥

चैत्यद्रुमम्–अशोकवृक्षं स्वामिप्रमाणात् द्वादशगुणं, तथा पीठं तदधो रत्नमयं, तस्योपरि देवच्छन्दकं, तन्मध्ये सिंहासनं, तदुपरि छत्रातिच्छत्रं, चामरे च यक्षहस्तगते, चशब्दात्पद्मसंस्थितं धर्मचक्रं च । यच्चान्यद्वातोदकादि करणीयं कुर्वन्ति तद्व्यन्तराः ॥ ५५३ ॥

साहारणओसरणे एवं जत्थिड्ढिमं तु ओसरइ । एक्कु चिय तं सव्वं करेइ भयणा उ इयरेसिं ॥ ५५४ ॥

साधारणसमवसरणे एवं, साधारणं–सामान्यं, यत्र देवेन्द्रा आगच्छन्ति तत्रैवं नियोगः, यत्र तु ऋद्धिमान् समवतरति कश्चिदिन्द्रसामानिकादिस्तत्रैक एव तत्प्राकारादि सर्वं करोति, यदीन्द्रा नागच्छन्ति ततो भवनवास्यादयः कुर्वन्ति वा न वा समवसरणमित्येवं भजनेतरेषां ॥ ५५४ ॥

सूरोदय पच्छिमाए ओगाहंतीए पुव्वओऽईइ । दोहिं पउमेहिं पाया मग्गेण य होइ सत्तऽन्ने ॥ ५५५ ॥

एवं देवैः कृते समवसरणे सूर्योदये–प्रथमायां पौरुष्याम्, अन्यदा पश्चिमायामवगाहन्त्यामागच्छन्त्यां, पूर्वतः पूर्वद्वारेण

एत्याऽऽगच्छति, कथमित्याह द्वयोः 'पद्मयोः' सहस्रपत्रयोर्देवकृतयोः पादौ, स्थापयन्निति वाक्यशेषः, मार्गतश्च पृष्ठतश्च भवन्ति सप्तान्ये पद्माः, तेषां च यद्यत् पश्चिमं तत्तत्पादन्यासं कुर्वतः स्वामिनः पुरतस्तिष्ठति ॥ ५५५ ॥

आयाहिण पुव्वमुहो तिदिसिं पडिरूवगा उ देवकया । जेट्ठगणी अण्णो वा दाहिणपुव्वे अदूरंमि ॥ ५५६ ॥

स एवं स्वामी पूर्वद्वारेण प्रविश्य 'आयाहिण'त्ति चैत्यद्रुमप्रदक्षिणां कृत्वा पूर्वाभिमुख उपविशति, शेषासु तिसृषु दिक्षु प्रतिरूपकाणि तु तीर्थकराकृतिव(म)न्ति सिंहासनादियुक्तानि देवकृतानि स्युः, स्वामिनश्च पादमूलमेकेन गणधरेणाऽविरहितमेव स्यात्, स च ज्येष्ठोऽन्यो वेति, प्रायो ज्येष्ठः, स ज्येष्ठगणिरन्यो वा दक्षिणपूर्वदिग्भागे अदूरे-प्रत्यासन्न एव भगवतः, प्रणिपत्य निषीदतीति क्रियाध्याहारः, शेषगणधरा अप्येवमेव स्वामिनं नत्वा तीर्थस्य मार्गतः पार्श्वतश्च निषीदन्ति ॥ ५५६ ॥

जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स । तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं ॥ ५५७ ॥

तत्प्रभावात्तीर्थकरप्रभावात् ॥ ५५७ ॥

तित्थाइसेससंजय देवी वेमाणियाण समणीओ । भवणवइवाणमंतरजोइसियाणं च देवीओ ॥ ५५८ ॥

'तीर्थं' [प्रथमो] गणधरस्तस्मिन् स्थिते सति 'अइसेससंजय'त्ति अतिशयिनः संयताः, तथा देव्यो वैमानिकानां इत्यादि सुगमा ॥ ५५८ ॥ अवयवार्थमाह—

केवलिणो तिउण जिणं तित्थपणामं च मग्गओ तस्स । मणमादीवि णमंता वयंति सट्ठाणसट्ठाणं ॥ ५५९ ॥

केवलिनः 'त्रिगुणं' त्रिः प्रदक्षिणीकृत्य जिनं तीर्थप्रणामं च कृत्वा मार्गतः 'तस्य' तीर्थस्य गणधरस्य निषीदन्तीति

क्रियाऽध्याहारः। मनःपर्यायज्ञानिनोऽपि भगवन्तमभिवन्द्य तीर्थं केवलिनश्च पुनः केवलिनः पृष्ठतो निषीदन्ति, आदिशब्दाच्छिरतिशयसंयता मनःपर्यायज्ञानिनां पृष्ठतः, तथा वैमानिकदेव्यः साधुपृष्ठतस्तिष्ठन्ति न निषीदन्ति, तथा श्रमण्यो वैमानिकदेवीपृष्ठतस्तिष्ठन्ति न निषीदन्ति, तथा भवनपतिज्योतिष्कव्यन्तरदेव्यो दक्षिणपश्चिमदिग्भागे तिष्ठन्ति। एवं मनःपर्यायज्ञान्यादयोऽपि नमन्तो व्रजन्ति स्वस्थानं ॥ ५५९ ॥

भवणवई जोइसिया बोद्धव्वा वाणमंतरसुरा य। वेमाणिया य मणुया पयाहिणं जं च निस्साए ॥ ५६० ॥

भवनपतयो ज्योतिष्का व्यन्तरसुराश्च यथोपन्यासमेव उत्तरपश्चिमे पार्श्वे तिष्ठन्तीत्येवं बोद्धव्याः, तथा वैमानिका मनुष्याः स्त्रियश्च प्रदक्षिणां कृत्वा तीर्थकरादीन्नत्वोत्तरपूर्वे दिग्भागे तिष्ठन्ति यथासङ्ख्यमेव। सर्वा एव देव्यो न निषीदन्ति। देवाः पुरुषाः स्त्रियश्च निषीदन्तीति केचित्। 'जं च निस्साए'त्ति यः परिवारो यं च निश्रां कृत्वायातः स तत्पार्श्वे एव तिष्ठति ॥ ५६० ॥ उक्तमेवार्थं संयतादिपूर्वद्वारादिप्रवेशविशिष्टमाह भाष्यकारः—

संजयवेमाणित्थी संजइ पुव्वेण पविसिउं वीरं। काउं पयाहिणं पुव्वदक्खिणे ठंति दिसिभागे ॥ ११६ ॥ (भा०)
जोइसियभवणवंतरदेवीओ दक्खिणेण पविसंति। चिट्ठंति दक्खिणावरदिसिंमि तिगुणं जिणं काउं ॥ ११७ ॥ (भा०)
अवरेण भवणवासी वंतरजोइससुरा य अइगंतुं। अवरुत्तरदिसिभागे ठंति जिणं तो नमंसित्ता ॥ ११८ ॥ (भा०) ॥ ३०१ ॥
समहिंदा कप्पसुरा राया णरणारिओ उदीणेणं। पविसित्ता पुव्वुत्तरदिसीए चिट्ठंति पंजलिआ ॥ ११९ ॥ (भा०)

उदीच्येनोत्तरेणेत्यर्थः, प्राञ्जलयः ॥ ११६-११९ ॥ उक्तार्थोपसङ्ग्रहमाह—

एक्केक्कीय दिसाए तिगं तिगं होइ सन्निविट्ठं तु । आदिचरिमे विमिस्सा थीपुरिसा सेस पत्तेयं ॥ ५६१ ॥

तेषां चेत्थं स्थितानां देवनराणां स्थितिमाह—

एंतं महिड्ढियं पणिवयंति ठियमवि वयंति पणमंता । णावि जंतणा ण विकहा ण परोप्परमच्छरो ण भयं ॥५६२॥

येऽल्पर्द्धयः पूर्वं स्थितास्ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति, स्थितमपि महर्द्धिकं पश्चादागताः प्रणमन्तो व्रजन्ति, तथा नापि नियन्त्रणा न विकथा ॥ ५६२ ॥

बिइयंमि होंति तिरिया तइए पागारमंतरे जाणा । पागारजढे तिरियाऽवि होंति पत्तेय मिस्सा वा ॥ ५६३ ॥

तृतीये प्राकारान्तरे यानानि, 'प्राकारजढे' प्राकाररहिते बहिरित्यर्थः, तिर्यञ्चोऽपि भवन्ति, अपितो मनुष्या देवा अपि, ते च प्रत्येकं मिश्रा वेति, ते पुनः प्रविशन्तो भवन्ति निर्गच्छन्तश्चैके ॥ ५६३ ॥ द्वितीयद्वारमभिधित्सुः सम्बन्धगाथामाह—

सव्वं च देसविरतिं सम्मं घेच्छति व होति कहणा उ । इहरा अमूढलक्खो न कहेइ भविस्सइ ण तं च ॥५६४॥

सर्वविरतिं देशविरतिं वा सम्यक्त्वं ग्रहीष्यति वा, भवति कथना तु-प्रवर्त्तते कथनमित्यर्थः, 'इहर'त्ति अन्यथा, भविष्यति न तच्च यत्स्वामिनि कथयति अन्यतमोऽप्यन्यतमत्सामायिकं न प्रतिपद्यते ॥ ५६४ ॥

'केवइअ'त्ति कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्ते इत्याह—

मणुए चउमण्णयरं तिरिए तिण्णि व दुवे य पडिवज्जे । जइ नत्थि नियमसो च्चिय सुरेसु सम्मत्तपडिवत्ती ॥५६५॥

मनुष्ये प्रतिपत्तरि चतुर्णामन्यतमप्रतिपत्तिः, तिर्यञ्चस्त्रीणि सर्वविरतिवर्जानि, द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यन्ते ।

यदि नास्ति मनुष्यतिरश्चां कश्चित्प्रतिपत्ता ततो नियमत एव सुरेसु सम्यक्त्वप्रतिपत्तिः स्यात् ॥५६५॥ स चेत्थं धर्ममाचष्टे—

तित्थपणामं काउं कहेइ साहारणेण सद्देणं । सव्वेसिं सण्णीणं जोयणणीहारिणा भगवं ॥ ५६६ ॥

नमस्तीर्थायेत्यभिधाय प्रणामं च कृत्वा कथयति, साधारणेन सर्वेषां संज्ञिनां 'योजननिर्हारिणा' योजनव्यापिना भगवान् ॥ ५६६ ॥ आह–कृतकृत्यः किमिति तीर्थप्रणामं करोतीति ?, उच्यते—

तप्पुव्विया अरहया पूइयपूया य विणयकम्मं च । कयकिच्चोऽवि जह कहं कहए णमए तहा तित्थं ॥ ५६७ ॥

तीर्थं–श्रुतज्ञानं तत्पूर्विका अर्हत्ता, तदभ्यासप्राप्तेः, पूजितेन पूजा सा च कृता अस्य स्यात्, लोकस्य पूजितपूजकत्वाद्भगवताप्येतत्पूजितमिति प्रवृत्तेः, तथा विनयकर्म च कृतं स्यात्, अथवा कृतकृत्योऽपि यथा कथां कथयति नमति तथा तीर्थं ॥५६७॥ आह–क्व केन साधुना कियतो वा भूभागात्समवसरणे आगन्तव्यं, अनागच्छतो वा किं प्रायश्चित्तमित्युच्यते—

जत्थ अपुव्वोसरणं न दिट्ठपुव्वं व जेण समणेणं । बारसहिं जोयणेहिं सो एइ अणागमे लहुया ॥ ५६८ ॥

अनागच्छत्यवज्ञातो 'लहुग'त्ति चतुर्लघवः प्रायश्चित्तं ॥ ५६८ ॥ रूपपृच्छाद्वारे आह—

सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्वेज्जा । जिणपायंगुट्ठं पइ ण सोहए तं जहिंगालो ॥ ५६९ ॥

प्रसङ्गतो गणधरादीनां रूपसम्पदमाह—

गणहर आहार अणुत्तरा [ य ] जाव वण चक्कि वासु बला । मंडलिया ता हीणा छट्ठाणगया भवे सेसा ॥ ५७० ॥

अर्हद्रूपसम्पत्सकाशादनन्तगुणहीना गणधरा रूपतः स्युः, तेभ्योऽनन्तगुणहीना आहारकदेहाः, तथैव तेभ्योऽनुत्तराः

यावद्व्यन्तरचक्रवर्तिवासुदेवबलदेवमहामाण्डलिकास्तावदनन्तगुणहीनाः, शेषा राजानो जनपदलोकाश्च षट्स्थानगताः स्युः, अनन्तभागहीना वा १ असङ्ख्येयभागहीना वा २ सङ्ख्येयभागहीना वा ३ सङ्ख्येयगुणहीना वा ४ असङ्ख्येयगुणहीना वा ५ अनन्तगुणहीना वा ६॥५७०॥ उत्कृष्टरूपतायां स्वामिनः प्रतिपादयितुं प्रक्रान्तायामिदं प्रासङ्गिकं रूपसौन्दर्यहेतु संहननाद्याह–

संघयण रूव संठाण वण्ण गइ सत्त सार उस्सासा। एमाइणुत्तराइं हवंति नामोदए तस्स ॥ ५७१ ॥

गतिर्गमनं, सत्त्वं वीर्यं, सारो द्विधा बाह्योऽभ्यन्तरश्च, बाह्यो गुरुत्वमभ्यन्तरो ज्ञानादिः ॥ ५७१ ॥

पगडीणं अण्णासुवि पसत्थ उदया अणुत्तरा होंति। खयउवसमेऽवि य तहा खयम्मि अविगप्पमाहंसु ॥ ५७२ ॥

प्रकृतीनामन्यासामपि प्रशस्ता उदया उच्चैर्गोत्रादयः स्युरनुत्तरा अनन्यसदृशाः। अपितो नाम्नोऽपि ये अन्ये जात्यादयः। क्षयोपशमेऽपि सति ये दानलाभादयः कार्यविशेषाः, अपित उपशमेऽपि ये केचन तेऽप्यनुत्तरा भवन्तीति क्रियायोगः। तथा कर्मणः क्षये सति क्षायिकज्ञानादिगुणसमुदयमविकल्प्यं व्यावर्णनादिविकल्पातीतं सर्वोत्तममाख्यातवन्तोऽर्हदादयः ॥ ५७२ ॥

अस्सायमाइयाओ जावि य असुहा हवंति पगडीओ। णिंबरसलवोव्व पए ण होंति ता असुहया तस्स ॥ ५७३ ॥

असाताद्या अपि चाशुभा भवन्ति प्रकृतयः, निम्बरसलव इव पयसि न अशुभदास्तस्यार्हतः ॥ ५७३ ॥ उक्तमानुषङ्गिकं, उत्कृष्टरूपतया स्वामिनः किं प्रयोजनमिति ?, अत्रोच्यते–

धम्मोदएण रूवं करेंति रूवस्सिणोऽवि जइ धम्मं। गिज्झवओ य सुरूवो पसंसिमो तेण रूवं तु ॥ ५७४ ॥

धर्मोदयेन रूपं स्यादिति श्रोतारोऽपि [ धर्मे ] प्रवर्त्तन्ते वा ( तथा ) कुर्वन्ति रूपस्विनोऽपि यदि धर्मं ततः शेषैः सुतरां

कर्त्तव्य इति श्रोतृबुद्धिः प्रवर्त्तते, ग्राह्यवाक्यश्च सुरूपः स्यात्, चात् श्रोतृरूपाद्यभिमानापहारी च । ॥ ५७४ ॥ अथवा पृच्छेति स्वामी प्रभूतसंशयिनां कथं व्याकरणं कुर्वन् संशयव्यवच्छित्तिं करोति ?, उच्यते, युगपत्, किमित्याह–

**कालेण असंखेणवि संखातीताण संसईणं तु । मा संसयवोच्छित्ती न होज्ज कमवागरणदोसा ॥ ५७५ ॥**

कालेनासङ्ख्येयेनापि सङ्ख्यातीतानां मा संशयव्यवच्छित्तिर्न भवेत्, कुतः ? क्रमव्याकरणदोषात्, अतो युगपद् व्यागृणाति ॥ ५७५ ॥ युगपद् व्याकरणगुणमाह–

**सव्वत्थ अविसमत्तं रिद्धिविसेसो अकालहरणं च । सव्वण्णुपच्चओऽवि य अचिंतगुणभूतिओ जुगवं ॥ ५७६ ॥**

'सर्वत्र' सर्वसत्त्वेषु 'अविषमत्वं युगपत्कथनेन तुल्यत्वं भगवतः, तथा ऋद्धिविशेषश्चायं भगवतः, अकालहरणं चेत्थं स्वामिनो युगपत्संशयापगमात्, सर्वज्ञप्रत्ययोऽपि च तेषामित्थमेव, न ह्यसर्वज्ञो हृद्गताऽशेषसंशयापनोदायालं, तथाऽचिन्त्या गुणभूतिः–गुणसम्पद्भगवतः, यस्मादेते गुणास्ततो युगपत्कथयति ॥ ५७६ ॥ श्रोतृपरिणामद्वारमाह–

**वासोदयस्स व जहा वण्णादी होंति भायणविसेसा । सव्वेसिंपि सभासा जिणभासा परिणमे एवं ॥ ५७७ ॥**

वर्षोदकस्य वाशब्दादन्यस्य वा यथैकरूपस्य सतो वर्णादयो भवन्ति, भाजनविशेषात्, एवं सर्वेषामपि श्रोतॄणां स्वभाषया जिनभाषा परिणमते ॥ ५७७ ॥ अर्हद्वाचः सौभाग्यगुणमाह–

**साहारणासवत्ते तदुवओगो उ गाहगगिराए । न य निव्विज्जइ सोया किढिवाणियदासिआहरणा ॥ ५७८ ॥**

साधारणा–अनेकप्राणिषु स्वभाषात्वेन परिणमनात्, असपत्ना-अद्वितीया, तस्यां साधारणासपत्नायां सत्यां, तस्यामुप-

योगस्तदुपयोग एव स्यात् श्रोतुः, तोरेवार्थत्वात्, ग्राहयतीति ग्राहिका, सा चासौ गीश्च ग्राहकगीस्तस्यां ग्राहकगिरि, न च निर्विद्यते श्रोता किढिवणिग्दास्युदाहरणात्, 'किढि'त्ति स्थविरा, एकस्य वणिजः स्थविरा दासी प्रातः काष्ठार्थं गता, तान्यादाय मध्याह्ने क्षुधादिक्कान्ता सा आगात्, स्तोकानीति कृत्वा कुट्टयित्वा बुभुक्षिता तृषिता सती पुनः स्थापिता, सा महाकाष्ठभारं पश्चिमपौरुष्यां गृहीत्वा आगच्छन्ती पतितैककाष्ठग्रहणायाऽवनता, तावतार्हद्वचनं श्रुत्वा तथैवाऽस्थात्, अर्हत्युत्थिते सूर्यास्ते सा गृहं गता ॥ ५७८ ॥

सव्वाउअंपि सोया खवेज्ज जइ हु सययं जिणो कहए। सीउण्हखुप्पिवासापरिस्समभए अविगणेंतो ॥ ५७९ ॥

भगवति कथयति सर्वायुष्कमपि श्रोता क्षपयेत् भगवत्समीपवर्त्त्येव, यदि हु सततं जिनः कथयेत्, शीतोष्णक्षुत्पिपासापरिश्रमभयान्यवगणयन् ॥ ५७९ ॥ दानद्वारमाह–

वित्ती उ सुवण्णस्सा बारस अद्धं च सयसहस्साइं। तावइयं चिय कोडी पीतीदाणं तु चक्किस्स ॥ ५८० ॥

वृत्तिस्तु वृत्तिरेव नियुक्तपुरुषेभ्यः, कस्य इत्याह–सुवर्णस्य द्वादशार्द्धं च शतसहस्राणि, तथा तावत्य एव कोट्यः प्रीतिदानं चक्रवर्त्तिनः, तत्र वृत्तिर्या परिभाषिता दीयते नियुक्तपुरुषेभ्यः, स्वामी येषु विहरति तेभ्यो वार्ता खल्वानयन्ति, प्रीतिदानं यत्स्वाम्यागमननिवेदने हर्षान्नियुक्तेतरेभ्यो दीयते, तत्र वृत्तिः संवत्सरनियता, प्रीतिदानमनियतम् ॥ ५८० ॥

एयं चेव पमाणं णवरं रययं तु केसवा दिंति। मंडलिआण सहस्सा पीईदाणं सयसहस्सा ॥ ५८१ ॥

एतदेव प्रमाणं वृत्तिप्रीतिदानयोः, तथा मण्डलिकानां राज्ञां सहस्राण्यर्द्धत्रयोदशरूप्यवृत्तिः, प्रीतिदानमर्द्धत्रयोदशशत-

सहस्राणि ॥ ५८१ ॥

भत्तिविहवाणुरूवं अण्णेऽवि य देंति इब्भमाईया । सोऊण जिणागमणं निउत्तमणिओइएसुं वा ॥ ५८२ ॥

नियुक्तानियोजितेभ्यो वा ॥ ५८२ ॥ तेषामित्थं प्रयच्छतां के गुणा ? इति, उच्यते–

देवाणुअत्ति भत्ती पूया थिरकरण सत्तअणुकंपा । साओदय दाणगुणा पभावणा चेव तित्थस्स ॥ ५८३ ॥

देवानुवृत्तिः कृता स्यात्, यतो देवा अपि भगवतः पूजां कुर्वन्त्यतस्तदनुवृत्तिः, भक्तिश्च भगवतः कृता स्यात्, तथा पूजा च, तथा स्थिरीकरणमभिनवश्राद्धकानां, तथा कथकसत्त्वानुकम्पा च कृता, तथा सातोदयवेदनीयं बध्यते ॥ ५८३ ॥ साम्प्रतं देवमाल्यद्वारं, तत्र स्वाम्याद्यां सम्पूर्णपौरुषीं धर्ममाचष्टे, अत्रान्तरे देवमाल्यं प्रविशति, बलिरित्यर्थः, आह–कस्तं करोति ? इति, उच्यते–

राया व रायमच्चो तस्सऽसई पउरजणवओ वाऽवि । दुब्बलिखंडियबलिछडियतंदुलाणाढगं कलमा ॥ ५८४ ॥

'राजा' चक्रवर्तिमाण्डलिकादिः, राजाऽमात्यो वा, तस्य असति–अभावे नगरनिवासिविशिष्टलोकसमुदायः पौरं तत्करोति, ग्रामादिषु जनपदो वा जनपदनिवासिलोकः, स किंविशिष्टः किंपरिमाणो वा क्रियते ? इति आह–दुर्बलिकया खण्डितानां बलवत्या छटितानां तन्दुलानामाढकं–चतुःप्रस्थप्रमाणं कलमानां ॥ ५८४ ॥ किंविशिष्टानामित्याह–

भाइयपुणाणियाणं अखंडफुडियाण फलगसरियाणं । कीरइ बली सुरावि य तत्थेव छुहंति गंधाई ॥ ५८५ ॥

भक्तपुनरानीतानां, भाजनम् ईश्वरादिगृहेषु वीननार्थमर्पणं, तेभ्यः प्रत्यानयनं–पुनरानयनं, भक्ताश्च ते पुनरानीताश्च

तेषां, अखण्डाः—सम्पूर्णावयवा अस्फुटिताः—राजीरहितास्तेषां, 'फलगसरिआणं' ति फलकवीनितानां एवम्भूतानामाढकं क्रियते बलिः, सुरा अपि च तत्रैव बलौ प्रक्षिपन्ति गन्धादि ॥ ५८५ ॥ माल्यानयनद्वारमाह—

बलिपविसणसमकालं पुव्वद्दारेण ठाति परिकहणा । तिगुणं पुरओ पाडण तस्सद्धं अवडियं देवा ॥ ५८६ ॥

बलेः प्रवेशनं बलिप्रवेशनं पूर्वद्वारेण, बलिप्रवेशनसमकालं तिष्ठत्युपरमते धर्मकथा, 'तिगुणं पुरओ पाडणं'ति प्रविश्य स राजादिर्वलिव्यग्रदेहो भगवन्तं त्रिः प्रदक्षिणीकृत्य तं तत्पादान्तिके पुरतः पातयति, तस्य चार्द्धमपतितं देवा गृह्णन्ति ॥५८६॥

अद्धद्धं अहिवइणो अवसेसं हवइ पागयजणस्स । सव्वामयप्पसमणी कुप्पइ णऽण्णो य छम्मासे ॥ ५८७ ॥

शेषार्द्धस्यार्द्धं तदधिपतेः स्यात्, अवशेषं यद्बलेस्तद्भवति प्राकृतजनस्य, स सर्वामयप्रशमनः, कुप्यति नान्यश्चामयः षण्मासान् यावत्, तत्सिक्थेनापि शिरसि प्रक्षिप्तेन, प्राकृतत्वात् स्त्रीलिङ्गनिर्देशः ॥ ५८७ ॥ इत्थं बलिप्रक्षिप्ते स्वाम्याद्यप्राकारान्तरादुत्तरद्वारेण निर्गत्योत्तरपूर्वस्यां दिशि देवच्छन्दके यथासुखं तिष्ठति । ततो द्वितीयपौरुष्यामाद्यगणधरोऽन्यतरो वा धर्ममाचष्टे, आह—तत्कथने के गुणाः ?, उच्यते—

खेयविणोओ सीसगुणदीवणा पच्चओ उभयओऽवि । सीसायरियकमोऽवि य गणहरकहणे गुणा होंति ॥५८८॥

खेदविनोदो भगवतः स्यात्, प्रत्यय उभयतोऽपि श्रोतॄणामुपजायते, शिष्याचार्यक्रमोऽपि च दर्शितः स्यात् ॥ ५८८ ॥ आह—स गणधरः क्व निषण्णः कथयति ?, उच्यते—

राओवणीयसीहासणे निविट्ठो व पायवीढंमि । जिट्ठो अन्नयरो वा गणहारी कहइ बीआए ॥ ५८९ ॥

राजोपनीतसिंहासने उपविष्टो वा भगवत्पादपीठे ॥ ५८९ ॥ आह–स कथयन् कथं कथयति ?, उच्यते–

संखाईएऽवि भवे साहइ जं वा परो उ पुच्छिज्जा । ण य णं अणाइसेसी विआणई एस छउमत्थो ॥ ५९० ॥

'साहइ'त्ति कथयति, न च नैव, णमिति वाक्यालङ्कारे अनतिशयी–अवध्यादिरहितो विजानाति यथैष छद्मस्थः, अशेषप्रश्नोत्तरप्रदानसमर्थत्वात् तस्य ॥ ५९० ॥ एवं समवसरणवक्तव्यता सामान्येनोक्ता, अथ प्रकृतमुच्यते, तत्र भगवतः समवसरणे निष्पन्ने सति अत्रान्तरे–

तं दिव्वदेवघोसं सोऊणं माणुसा तहिं तुट्ठा । अहो जण्णिएणं जट्ठं देवा किर आगया इहइं ॥ ५९१ ॥

तत्र यज्ञपाटके, अहो ! विस्मये, याज्ञिकेनेष्टं, देवाः किलागता अत्र, किलः संशय एव, तेषामन्यत्र गमनात् ॥ ५९१ ॥

तत्र यज्ञपाटके एकादशापि गणधरा ऋत्विजः समन्वागता इत्याह च–

एक्कारसवि गणहरा सव्वे उण्णयविसालकुलवंसा । पावाए मज्झिमाए समोसढा जन्नवाडम्मि ॥ ५९२ ॥

पढमित्थ इंदभूई बिइओ पुण होइ अग्गिभूइत्ति । तइए य वाउभूई तओ वियत्ते सुहम्मे य ॥ ५९३ ॥

मंडियमोरियपुत्ते अकंपिए चेव अयलभाया य । मेयज्जे य पभासे गणहरा होंति वीरस्स ॥ ५९४ ॥

जं कारण णिक्खमणं वोच्छं एएसि आणुपुव्वीए । तित्थं च सुहम्माओ निरवच्चा गणहरा सेसा ॥ ५९५ ॥

'यत्कारणं' यन्निमित्तं निष्क्रमणं तद्वक्ष्ये, तथा तीर्थं च सुधर्मात्सञ्जातं ॥ ५९५ ॥ जीवादिसंशयापनोदनिमित्तं गणधरनिष्क्रमणमिति कृत्वा यो यस्य संशयस्तमाह–

जीवे कम्मे तज्जीव भूय तारिसय वंधमोक्खे य । देवा णेरइए या (य) पुण्णे परलोय णेव्वाणे ॥ ५९६ ॥

जीवे संशयः-किमस्ति नास्तीति १, कर्मणि २, किं तदेव शरीरं स एव जीव उतान्यः ३, भूतेषु संशयः किं पृथिव्यादीनि भूतानि सन्ति न वा ४, किं यो यादृश इह भवे स तादृश एवान्यस्मिन्नपि ? उत न ५, किं बन्धमोक्षौ स्तः ? उत न ६, देवाः किं सन्ति ? न वा ७, नारकाः किं सन्ति ? न वा ८, पुण्ये संशयः कर्मणि सत्यपि किं पुण्यमेव प्रवर्षप्राप्तं प्रकृष्टसुखहेतुः, तदेवाऽपचीयमानमत्यन्तस्वल्पावस्थं दुःखस्य, उत तदतिरिक्तं पापमस्ति, आहोस्विदेकमेवोभयरूपं उत स्वतन्त्रमुभयं ९, परलोक-संशयः १०, निर्वाणे संशयः ११, आह–बन्धमोक्षसंशयादस्य को विशेषः ?, उच्यते, स ह्युभयगोचरोऽयं तु केवलविपय एव, तथा किं संसाराभावमात्र एवासौ मोक्ष इत्यादि ॥ ५९६ ॥ गणधरपरिवारमानमाह–

पंचण्हं पंचसया अद्धुट्ठसया य होंति दोण्ह गणा । दोण्हं तु जुयलयाणं तिसओ तिसओ भवे गच्छो ॥ ५९७ ॥

अर्द्धचतुर्थशतानि मानं ययोस्तौ अर्द्धचतुर्थशतौ भवतो द्वयोः प्रत्येकं गणौ, इह गणः समुदायः ॥ ५९७ ॥

उक्तमानुषङ्गिकं प्रकृतमुच्यते–ते देवास्तं यज्ञपाटकं परिहृत्य समवसरणे जग्मुः, तांश्च तथा दृष्ट्वा लोकोऽपि तत्रैवागात् प्रवादश्च जातः–सर्वज्ञोऽत्र समवसृतस्तं देवाः पूजयन्ति, अत्रान्तरे–

सोऊण कीरमाणीं महिमं देवेहि जिणवरिंदस्स । अह एइ अहम्माणी अमरिसिओ इंदभूइत्ति ॥ ५९८ ॥

अथैति स्वामिपार्श्वमहमेव विद्वानिति मानोऽस्य इत्यहंमानी, अमर्षितोऽमर्षयुक्तः ॥५९८॥ अत्र [भाष्य] गाथापञ्चकमिदं–

मुत्तूण ममं लोगो किं वच्चइ एस तस्स पामूले ? । अन्नोऽवि जाणइ मए ठियम्मि कत्तुचियं एयं? ॥ १ ॥ (भा०)

वञ्चिज्ज व मुक्खजणो देवा कहऽणेण विम्हइं(यं) नीया ? । वंदंति संथुणंति अ जेणं सव्वन्नुबुद्धीए ॥२॥ (भा०)
अहवा जारिसओ च्चिय सो नाणी तारिसा सुरा तेऽवि । अणुसरिसो संजोगो गामनडाणं व मुक्खाणं ॥ ३ ॥ (भा०)
काउं हयप्पयावं पुरतो देवाण दाणवाणं च । नासेहं नीसेसं खणेण सव्वन्नुवायं से ॥ ४ ॥ ( भा० )
इअ वुत्तूणं पत्तो दट्ठुं तेलुक्कपरिवुडं वीरं । चउतीसाइसयनिहिं स संकिओ चिट्ठिओ पुरओ ॥ ५ ॥ ( भा० )

अन्योऽपि कश्चित् किं विजानातीति, कौतस्त्यमेतन्न सम्भवतीत्यर्थः ॥ १ ॥ स च तथा दृष्ट्वा स्वामिनोऽग्रे साशङ्कस्तस्थौ ॥ २–५ ॥ अत्रान्तरे–

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । णामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ५९९ ॥

आभाषितश्च संलप्तः नाम्ना हे इन्द्रभूते! गोत्रेण च गौतमगोत्रः ( हे गौतम !, ) जिनेन किंविशिष्टेनेत्याह–सर्वज्ञेन सर्वदर्शिना ॥ ५९९ ॥ अत्र भाष्यगाथे–

हे ! इंदभूइ ! गोयमु ! सागयमुत्ते जिणेण चिंतेइ । नामंपि मे विआणइ, अहवा को मं न याणेइ ॥ १ ॥ (भा०)
जइ वा हिअयगयं मे संसय मन्निज्ज अहव छिंदिज्जा । ता हुज्ज विम्हओ मे इय चिंततो पुणो भणिओ ॥ २ ॥ (भा०)
किं मन्नि अत्थि जीवो उआहु नत्थित्ति संसओ तुज्झ । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६०० ॥

किं मन्यसे–अस्ति जीव उत नास्तीति, नन्वयमनुचितस्ते संशयः, अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनः, तेषां वेदपदानां चार्थं न जानासि, तेषामयमर्थः, तत्रोभयवेदपदानि तदर्थश्च सम्यगेतद्वृत्तितोऽवगन्तव्यानि चशब्दसूचितं च

युक्तिं हृदयं च ॥ ६०० ॥

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहि सह खंडियसएहिं ॥ ६०१ ॥

'श्रमणः प्रव्रजितः' साधुः संवृत्त इत्यर्थः, खण्डिकशतैः खण्डिकाः—छात्राः ॥ ६०१ ॥

तं पव्वइयं सोउं बितिओ आगच्छई अमरिसेणं । वच्चामि ण आणेमी पराजिणित्ता ण तं समणं ॥ ६०२ ॥

व्रजामि, णमिति वाक्यालङ्कारे, आनयामि इन्द्रभूतिमिति गम्यते ॥ ६०२ ॥ अत्र भाष्यगाथे—

छलिओ छलाइणा सो मन्ने माइंदजालिओ वावि । को जाणाइ कह वत्तं इत्ताहे वट्टमाणी से? ॥ १ ॥ ( भा० )

सो पक्खंतरमेगंपि जाइ जइ मे तओ मि तस्सेव । सीसत्तं हुज्ज गओ वुत्तुं पत्तो जिणसगासं ॥ २ ॥ ( भा० )

छलितश्छलादिना स मद्बन्धुः, मन्येऽयं देवार्यो मायी, इन्द्रजालिको वा, यद्वा को जानाति, कथं वृत्ता ( वार्ता ) 'इत्ताहे 'त्यादि इतो वर्त्तमानिका से तस्य ज्ञास्यते, स पक्षान्तरं प्रतिज्ञारूपमेकमपि जानाति यदि मे ततोऽहं तस्यैव शिष्यत्वं गतो भवेयं ॥ २ ॥

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६०३ ॥

किं मण्णे अत्थि कम्मं! उदाहु णत्थित्ति संसओ तुज्झ । वेयपयाणय य अत्थं ण याणसी तेसिओ अत्थो ॥६०४॥

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहि सह खंडियसएहिं ॥ ६०५ ॥

तं पव्वइए सोउं तइओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६०६ ॥

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसीणं ॥ ६०७ ॥
तज्जीवतस्सरीरंति संसओ णवि य पुच्छसे किंचि । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥ ६०८ ॥
छिण्णंमि ॥ ६०९ ॥
ते पव्वइए सोउं विअत्तो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१० ॥
आभट्ठो० ॥ ६११ ॥
किं मण्णि पंचभूया अत्थि नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥ ६१२ ॥
छिण्णंमि० ॥ ६१३ ॥
ते पव्वइए सोउं सुहमो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१४ ॥
आभट्ठो० ॥ ६१५ ॥
किं मण्णि जारिसो इह भवंमि सो तारिसो परभवेऽवि । वेयपयाण य अत्थं ण जाणसी तेसिमो अत्थो ॥६१६॥
छिण्णंमि० ॥ ६१७ ॥
ते पव्वइए सोउं मंडिओ आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१८ ॥
आभट्ठो० ॥ ६१९ ॥
किं मन्नि बंधमोक्खा अत्थि ण अत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६२० ॥

गणधर
संशयापन
नवक्तव्यत
नि० गा
६०७-६२

छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पवइओ अद्धुट्ठहिं सह खंडियसएहिं ॥ ६२१ ॥
ते पव्वइए सोउं मोरिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६२२ ॥
आभट्ठो० ॥ ६२३ ॥

किं मन्नसि संति देवा उयाहु न संतीति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६२४ ॥
छिन्नंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ अद्धुट्ठहिं सह खंडियसएहिं ॥ ६२५ ॥
ते पव्वइए सोउं अकंपिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६२६ ॥
आभट्ठो० ॥ ६२७ ॥

किं मन्ने नेरइया अत्थि न अत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६२८ ॥
छिन्नंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ तिहि उ सह खंडियसएहिं ॥ ६२९ ॥
ते पवइए सोउं अयलभाया आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३० ॥
आभट्ठो० ॥ ६३१ ॥

किं मन्नि पुण्णपावं अत्थि न अत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६३२ ॥
छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पवइओ तिहि उ सह खंडियसएहिं ॥ ६३३ ॥

ते पव्वइए सोउं मेयज्जो आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३४ ॥
आभट्ठो० ॥ ६३५ ॥
किं मण्णे परलोगो अत्थि णत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ॥ ६३६ ॥
छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ तिहि उ सह खंडियसएहिं ॥ ६३७ ॥
ते पव्वइए सोउं पभासो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३८ ॥
आभट्ठो० ॥ ६३९ ॥
किं मण्णे निव्वाणं अत्थि णत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं ण याणसि तेसिमो अत्थो ॥ ६४० ॥
छिण्णंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ तिहि उ सह खंडियसएहिं ॥ ६४१ ॥

'किं मण्णे' इत्यादिगाथा निर्युक्तिसत्काः सुगमा एव ।

उक्ता गणधरसंशयापनयनवक्तव्यता, अधुनैतेषामेव वक्तव्यताशेषमभिधित्सुर्द्वारगाथामाह–

खेत्ते काले जम्मे गोत्तमगार छउमत्थपरियाए । केवलिय आउ आगम परिणेव्वाणे तवे चेव ॥ ६४२ ॥

एकारान्ताः शब्दाः प्राकृतशैल्या प्रथमद्वितीयया (मैकवचनान्ता) ज्ञेयाः, ततश्च गणधरानधिकृत्य क्षेत्रं–जनपदग्रामादि वक्तव्यं जन्मभूमिः, तथा कालो–नक्षत्रचन्द्रयोगोपलक्षितो वाच्यः, जन्म वाच्यं, तच्च मातापित्रायत्तमित्यतो मातापितरौ वाच्यौ, गोत्रं यद्यस्य तद्वाच्यं, पर्यायशब्दस्योभयत्र योगादगारपर्यायो–गृहस्थपर्यायः छद्मस्थपर्यायश्च वाच्यः, तथा केवलि-

पर्यायः, सर्वायुष्कं, आगमः कः कस्यासीत् ?, परिनिर्वाणं वाच्यं, कस्य भगवता जीवता सता आसीत् कस्य वा मृतेन, तपश्च, किं केनापवर्गं गच्छता तप आचरितं, चात्संहननादि वाच्यं ॥ ६४२ ॥ क्षेत्रद्वारमाह–

मगहा गोब्बरगामे जाया तिण्णेव गोयमसगोत्ता । कोल्लागसन्निवेसे जाओ विअत्तो सुहम्मो य ॥ ६४३ ॥

मगधाविषये गोर्वरग्रामे जातास्त्रय एवाद्या गौतमसगोत्राः ॥ ६४३ ॥

मोरीयसन्निवेसे दो भायरो मंडिमोरिया जाया । अयलो य कोसलाए महिलाए अकंपिओ जाओ ॥ ६४४ ॥

मौर्यसन्निवेशे ॥ ६४४ ॥

तुंगीयसन्निवेसे मेयज्जो वच्छभूमिए जाओ । भगवंपि य प्पभासो रायगिहे गणहरो जाओ ॥ ६४५ ॥

तुङ्गिकसन्निनिवेशे मेतार्यो वत्सभूमौ जातः, कौशाम्बीविषये इत्यर्थः ॥ ६४५ ॥ कालद्वारमाह–

जेट्ठा कित्तिय साई सवणो हत्थुत्तरा महाओ य । रोहिणि उत्तरसाढा मिगसिर तह अस्सिणी पूसो ॥ ६४६ ॥

एतानि यथायोगमिन्द्रभूतिप्रमुखाणां नक्षत्राणि ॥ ६४६ ॥ जन्मद्वारे मातापितरावेवाह–

वसुभूई धणमित्ते धम्मिल धणदेव मोरिए चेव । देवे वसू य दत्ते बले य पियरो गणहराणं ॥ ६४७ ॥

त्रयाणामाद्यानामेक एव पिता, शेषाणां यथासङ्ख्यं धनमित्रादयः ॥ ६४७ ॥

पुहवी य वारुणी भद्दिला य विजयदेवा तहा जयंती य । णंदा य वरुणदेवा अइभद्दा य मायरो ॥ ६४८ ॥

पृथिवी त्रयाणामाद्यानां माता, शेषास्तु यथासङ्ख्यमन्येषां, नवरं विजयदेवा मण्डिकमौर्ययोः पितृभेदेन द्वयोर्माता धनदेवे पञ्चत्वमुपगते मौर्येण गृहे धृता सैव, अविरोधश्च तस्मिन् देशे ॥ ६४८ ॥ गोत्रद्वारमाह—

तिण्णि य गोयमगोत्ता भारद्दा अग्गिवेसवासिट्ठा । कासवगोयमहारिय कोडिण्णदुगं च गोत्ताइं ॥ ६४९ ॥

त्रयश्च गौतमसगोत्रा इन्द्रभूत्यादयः, भारद्वाजाग्निवेशा(वैश्या)यनवाशिष्ठाः यथायोगं व्यक्तसुधर्ममण्डिकाः; काश्यपगौतमहारीतसगोत्रा मौर्याकम्पिताचलाभ्रातरः, कौण्डिन्यसगोत्रौ द्वौ मेतार्यप्रभासौ, एतानि गणधराणां गोत्राणि ॥ ६४९ ॥ अगारपर्यायद्वारमाह—

पण्णा छायालीसा बायाला होइ पण्ण पण्णा य । तेवण्ण पंचसट्ठी अडयालीसा य छायाला ॥ ६५० ॥

छत्तीसा सोलसगं अगारवासो भवे गणहराणं । छउमत्थयपरियागं अहक्कमं कित्तइस्सामि ॥ ६५१ ॥

५० । ४६ । ४२ । ५० । ५० । ५३ । ६५ । ४८ । ४६ । ननु मण्डिको ज्येष्ठो मौर्यस्तु लघुतरस्तत्र ज्येष्ठस्य वर्षाणि ५३ गृहवासः लघुतरस्य तु ६५, द्वयोरप्येकस्मिन्नेव दिने दीक्षा तत्कथं न विरोधः?, सत्यं, किन्तु तत्त्ववेदिनः केवलिनः । ३६ । १६ । अगारवासो यथासङ्ख्यं एतावान् गणधराणां, छद्मस्थपर्यायं यथाक्रममाह ॥ ६५१ ॥

तीसा बारस दसगं बारस बायाल चोद्दसदुगं च । नवगं बारस दस अट्ठगं च छउमत्थपरियाओ ॥ ६५२ ॥

'चउदशदुगं चे'(चोद्दसदुगं चे')ति द्वौ वारौ चतुर्दशेति ज्ञेयं ॥ ६५२ ॥ केवलिपर्यायपरिज्ञानोपायमाह—

छउमत्थपरीयागं अगारवासं च वोगसित्ता णं । सव्वाउगस्स सेसं जिणपरियागं वियाणाहि ॥ ६५३ ॥

छद्मस्थपर्यायमगारवासं च व्यवकलय्य सर्वायुष्कस्य शेषं जिनपर्यायं विजानीहि ॥ ६५३ ॥ स चायं जिनपर्यायः—
बारस सोलस अट्ठारसेव अट्ठारसेव अट्ठेव । सोलस सोल तहेकवीस चोद्द सोले य सोले य ॥ ६५४ ॥

सर्वायुष्कमाह—

बाणउई चउहत्तरि सत्तरि तत्तो भवे असीई य । एगं च सयं तत्तो तेसीई पंचणउई य ॥ ६५५ ॥
अट्ठत्तरिं च वासा तत्तो बावत्तरिं च वासाइं । बावट्ठी चत्ता खलु सव्वगणहराउयं एयं ॥ ६५६ ॥

आगमद्वारमाह—

सव्वे य माहणा जच्चा, सव्वे अज्झावया विऊ । सव्वे दुवालसंगी य, सव्वे चोद्दसपुव्विणो ॥ ६५७ ॥

स्वल्पेऽपि द्वादशाङ्गाध्ययने द्वादशाङ्गिन उच्यन्ते एव, अतः सम्पूर्णज्ञापनार्थमाह-सर्वे चतुर्दशपूर्विणः ॥ ६५७ ॥

परिनिर्वाणद्वारमाह—

परिणिव्वुया गणहरा जीवंते णायए णव जणा उ । इंदभूई सुहम्मो य रायगिहे निव्वुए वीरे ॥ ६५८ ॥

तपोद्वारमाह—

मासं पाओवगया सव्वेऽवि य सव्वलद्धिसंपण्णा । वज्जरिसहसंघयणा समचउरंसा य संठाणा ॥ ६५९ ॥

समचतुरस्राश्च संस्थानतः ॥ ६५९ ॥

उक्तः सामायिकार्थसूत्रप्रणेतॄणामर्हद्गणधराणां निर्गमः, अधुना अवसरायातं क्षेत्रद्वारमल्पवक्तव्यत्वादुल्लङ्घ्य कालद्वारमुच्यते, स च कालो नामाद्येकादशभेदभिन्नः, तत्र नामस्थापने सुज्ञाने, द्रव्यादिकालस्वरूपमाह—

**दव्वे अद्ध अहाउय उवक्कमे देसकालकाले य। तह य पमाणे वण्णे भावे पगयं तु भावेणं ॥ ६६० ॥**

द्रव्य इति वर्त्तनादिलक्षणो द्रव्यकालो वाच्यः, वर्त्तना द्रव्यस्थितिः, आदिशब्दात्प्रतिक्षणभावी परिणामः, चन्द्रसूर्यादिक्रियाविशिष्टो अद्धाकालः समयादिलक्षणो वाच्यः, यथायुष्ककालो देवाद्यायुष्कलक्षणो वाच्यः, उपक्रमकालो अभिप्रेतार्थसामीप्यानयनलक्षणः सामाचारीयथायुष्कभेदभिन्नो वाच्यः, देशकालो वाच्यः, देशः प्रस्तावोऽवसरः, ततश्चाभीष्टवस्त्वऽवाप्त्यवसरकाल इत्यर्थः, कालभावो (लकालो) वाच्यः, तत्र कालो मरणमुच्यते, मरणक्रियाकलनं काल [काल] इत्यर्थः, प्रमाणकालो अद्धाकालो(ल)विशेषो दिवसादिलक्षणो वाच्यः, वर्णकालो वाच्यः, वर्णश्चासौ कालश्चेति, औदयिकादिभावकालः सादिसपर्यवसानादिभेदभिन्नो वाच्यः, 'प्रकृतं तु भावेन' भावकालेनाधिकारः ॥ ६६० ॥ आद्यकालद्वारमाह—

**चेयणमचेयणस्स व दव्वस्स ठिइ उ जा चउवियप्पा। सा होइ दव्वकालो अहवा दवियं तु तं चेव ॥ ६६१ ॥**

चेतनाचेतनस्य देवस्कन्धादेः, बिन्दुरलाक्षणिकः, अथवा चेतनस्याचेतनस्य च द्रव्यस्य स्थानं-स्थितिरेव या सादिपर्यवसानादिभेदेन चतुर्विकल्पा सा स्थितिर्भवति द्रव्यस्य कालो द्रव्यकालः, तत्पर्यायत्वात्, अथवा 'द्रव्यं तु' तदेव द्रव्यमेव कालो द्रव्यकालः ॥ ६६१ ॥ चतुर्विधस्थितिमाह—

**गइ सिद्धा भवियाया अभविय पोग्गल अणागयद्धा य। तीयद्ध तिन्नि काया जीवाजीवट्ठिई चउहा ॥ ६६२ ॥**

देवादिगतिमधिकृत्य जीवाः सादिपर्यवसानाः जीवाः, [ सिद्धाः ] प्रत्येकं सिद्धत्वेन साद्यपर्यवसानाः, भव्याश्च भव्यत्वमधिकृत्य केचनानादिसपर्यवसानाः, अभव्याः अभव्यतयाऽनाद्यपर्यवसाना इति जीवस्थितिः चतुर्भङ्गिका । पुद्गलाः पूरणगलनधर्माणः, पुद्गलत्वेन सादिपर्यवसानाः, अनागताद्धा—अनागतकालः, स हि वर्त्तमानसमयादिः सादिरनन्तत्वाच्चापर्यवसानः, 'तीयद्ध'त्ति अतीतकालोऽनन्तत्वादनादिः साम्प्रतसमयपर्यन्तविवक्षायां सपर्यवसानः, त्रयो धर्माधर्माकाशास्तिकाया अनाद्यपर्यवसानाः, इत्थं जीवाजीवस्थितिश्चतुर्द्धा ॥ ६६२ ॥ अद्धाकालद्वारमाह—

समयावलिय मुहुत्ता दिवसमहोरत्त पक्ख मासा य । संवच्छर युग पलिया सागर ओसप्पि परियट्टा ॥ ६६३ ॥

परमनिकृष्टः कालः समयः, आवलिका—असङ्ख्येयसमयसमुदायलक्षणा, द्विघटिको मुहूर्त्तः, युगं पञ्चसंवत्सरं, परावर्त्तोऽनन्तोत्सर्पिण्यवसर्पिण्यात्मकः ॥ ६६३ ॥ यथायुष्ककालद्वारमुच्यते—तत्राद्धाकाल एवायुष्ककर्मानुभवविशिष्टः सर्वजीवानां वर्त्तनादिमयो यथायुष्ककालोऽभिधीयते, तथा चाह—

नेरइयतिरियमणुयादेवाण अहाउयं तु जं जेण । निव्वत्तियमण्णभवे पालेंति अहाउकालो सो ॥ ६६४ ॥

नारकतिर्यग्मनुष्यदेवानां यथायुष्कमेव यद्येन निर्वर्त्तितमन्यभवे तद्यथा(दा) विपाकतस्त एवानुपालयन्ति स यथायुष्ककालः ॥ ६६४ ॥ उपक्रमकालद्वारमाह—

दुविहोवक्कमकालो सामायारी अहाउयं चेव । सामायारी तिविहा ओहे दसहा पयविभागे ॥ ६६५ ॥

समाचरितः(रणं) [समाचारः]—शिष्टाचरितः क्रियाकलापस्तस्य भावः सामाचार्यं, पुनः स्त्रीविवक्षायां सामाचारी, तस्या

उपक्रमणमुपरिमश्रुतादिहानयनमुपक्रमः, समाचार्युपक्रमश्चासौ कालश्चेति समासः, यथायुकस्योपक्रमणं दीर्घकालभोग्यस्य लघुतरकालेन क्षपणमुपक्रमः, यथायुष्कोपक्रमश्चासौ कालश्च, तत्र कालकालवतोरभेदोपचारात्कालस्यैवाऽऽयुष्काद्युपाधिविशिष्टस्योपक्रमो ज्ञेयः । तत्र सामाचारी त्रिविधा-ओघः सामान्यं, ओघसामाचारी सामान्यतः सङ्क्षेपाभिधानरूपा, सा चौघनिर्युक्तिः, दशविधसामाचारी इच्छाकारादिलक्षणा, पदविभागसामाचारी छेदसूत्राणि । तत्रौघसामाचारी नवमात्पूर्वात्तृतीयाद्वस्तुन आचाराभिधानात्तत्रापि विंशतितमात्प्राभृतात्तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढा, साम्प्रतकालसाधूनां प्रत्यासन्नीकृतेत्यर्थः । दशविधसामाचारी षड्विंशतितमादुत्तराध्ययनान्निर्व्यूढा, पदविभागसामाचार्यपि नवमपूर्वादेव निर्व्यूढा ॥ ६६५ ॥

अत्रौघनिर्युक्तिर्वाच्या, [ सा च सुप्रपञ्चितत्वादेव न विव्रियते ] साम्प्रतं दशविधसामाचारीस्वरूपमाह-

इच्छा मिच्छा तहाकारो, आवसिया य निसीहिया । आपुच्छणा य पडिपुच्छा छंदणा य निमंतणा ॥ ६६६ ॥
उवसंपया य काले, सामायारी भवे दसहा । एएसिं तु पयाणं पत्तेय परूवणं वोच्छं ॥ ६६७ ॥

कारशब्दस्य प्रत्येकं योगादिच्छया-बलाभियोगमन्तरेण करणमिच्छाकारः, तथा मिथ्याकरणं मिथ्याकारः, एवं कालविषया सामाचारी भवेद्दशविधा तु, एतेषां पदानां तुर्विशेषणे, गोचरप्रदर्शनेन प्रत्येकं प्ररूपणां वक्ष्ये ॥ ६६६-६७ ॥

तत्रेच्छाकारो येष्वर्थेषु क्रियते तत्प्रदर्शनायाह-

जइ अब्भत्थेज्ज परं कारणजाए करेज्ज से कोई । तत्थवि इच्छाकारो न कप्पई बलाभिओगो उ ॥ ६६८ ॥

यदीत्यभ्युपगमेऽन्यथा साधूनामकारणेऽभ्यर्थनैव न कल्पते, अभ्यर्थयेत् परमन्यं साधुं ग्लानादौ कारणजाते कुर्याद्वा,

'से' तस्य कर्त्तुकामस्य कश्चिदन्यः साधुः, तत्र कारणजातग्रहणमुभयथापि सम्बध्यते, तत्रापि तेनऽन्येन वा साधुना तत्तस्य चिकीर्षितं कर्त्तुकामेनेच्छाकारः, कार्य इति क्रियाध्याहारः, अपिश्चार्थे, स चानुक्तं समुच्चिनोति, अथवेत्यादिना न्यक्षेण वक्ष्यते, किमित्येवमत आह–न कल्पत एव ॥ ६६८ ॥ उक्तगाथावयवार्थमाह–

अब्भुवगमंमि नज्जइ अब्भत्थेउं ण वट्टइ परो उ । अणिगूहियबलविरिएण साहुणा ताव होयव्वं ॥ ६६९ ॥

यदिशब्दप्रदर्शितेऽभ्युपगमे सति ज्ञायते, किमित्याह–अभ्यर्थयितुं 'न वर्त्तते' न युज्यत एव परः, किमित्यत आह–अनिगूहितबलवीर्येण, तत्र बलं–शारीरं, वीर्यमान्तरः शक्तिविशेषः ॥ ६६९ ॥ आह–इत्थमभ्यर्थनागोचरेच्छाकारोपन्यासोऽनर्थकः ?, उच्यते–

जइ हुज्ज तस्स अणलो कज्जस्स वियाणती ण वा वाणं । गिलाणाइहिं वा हुज्ज वियावडो कारणेहिं सो ॥ ६७० ॥

यदि भवेत्तस्य प्रस्तुतकार्यस्यानलोऽसमर्थः विजानाति न वा, वाणमिति पूरणार्थो निपातः, ग्लानादिभिर्वा भवेद्व्यापृतः, कारणैरसौ तदाऽभ्यर्थनागोचरमिच्छाकारं रत्नाधिकं विहायान्येषां करोति ॥ ६७० ॥ आह च–

राइणियं वज्जेत्ता इच्छाकारं करेइ सेसाणं । एयं मज्झं कज्जं तुब्भे उ करेह इच्छाए ॥ ६७१ ॥

भावरत्नैर्ज्ञानादिभिरधिको रत्नाधिकस्तं ॥ ६७१ ॥, 'जइ अब्भत्थेज्ज परं कारणजाए' त्ति व्याख्यातं, 'करेज्ज से कोई' इत्यवयवार्थं व्याख्याति, तत्रान्यकरणसम्भवे कारणमाह–

अहवाऽवि विणासेंतं अब्भत्थेंतं च अण्ण दट्ठूणं । अण्णो कोइ भणेज्जा तं साहुं णिज्जरट्ठीओ ॥ ६७२ ॥

विनाशयन्तमपि चिकीर्षितं कार्यं, अपितो गुरुतरकार्यकरणसमर्थमभ्यर्थयन्तं वा अभिलषितकार्यकरणाय कञ्चनाऽन्यं साधुं दृष्ट्वाऽन्यस्तत्प्रयोजनकरणशक्तः कश्चिद्भणेत् तं साधुं निर्जरार्थी ॥ ६७२ ॥ किमित्यत आह–

अहयं तुब्भं एयं करेमि कज्जं तु इच्छकारेणं । तत्थऽवि सो इच्छं से करेइ मज्जायमूलियं ॥ ६७३ ॥

अहं 'इच्छाकारेण' युष्माकमिच्छाक्रियया न बलादित्यर्थः, तत्रापि 'स' कारापकः साधुरिच्छाकारं तस्य करोति, यतो मर्यादामूलं, साधूनामियं मर्यादा–न किञ्चिदिच्छाव्यतिरेकेण कश्चित्कारयितव्यः ॥ ६७३ ॥ साम्प्रतं 'तत्थवि इच्छाकारो'त्ति अस्यापिशब्दस्य विषयमाह–

अहवा सयं करेंतं किंची अण्णस्स वावि दट्ठूणं । तस्सवि करेज्ज इच्छं मज्झंपि इमं करेहित्ति ॥ ६७४ ॥

अथवा 'स्वकं-आत्मीयं कुर्वन्तं किञ्चित्पात्रलेपनादि अन्यस्य वा दृष्ट्वा तस्याप्यापन्नप्रयोजनः सन् कुर्यादिच्छाकारं, कथं ?–ममापीदं कुरुत ॥ ६७४ ॥ अभ्यर्थितसाधुगोचरविधिमाह–

तत्थवि सो इच्छं से करेइ दीवेइ कारणं वाऽवि । इहरा अणुग्गहत्थं कायव्वं साहुणो किच्चं ॥ ६७५ ॥

तत्राप्यभ्यर्थितः सन् 'इच्छाकारं करोति' इच्छाम्यहं तव करोमीति, अथ तेन गुर्वादिकार्यान्तरं कर्त्तव्यं तदा दीपयति कारणं वापि, इतरथा गुरुकार्यकर्त्तव्याभावे सत्यनुग्रहार्थं कर्त्तव्यं साधोः कृत्यं ॥ ६७५ ॥ अपिशब्दाऽऽक्षिप्तेच्छाकारविषय-विशेषमेवाह–

अहवा णाणाईणं अट्ठाए जइ करेज्ज किच्चाणं । वेयावच्चं किंची तत्थवि तेसिं भवे इच्छा ॥ ६७६ ॥

ज्ञानादीनामर्थाय यदि कुर्यात्कृत्यानामाचार्याणां वैयावृत्त्यं 'कश्चित्' साधुः, पाठान्तरं वा किञ्चिद्विश्रामणादि, तत्रापि 'तेषां' कृत्यानां तं साधुं वैयावृत्त्ये नियोजयतां भवेदिच्छाकारः, इच्छाकारपुरस्सरं योजनीयः ॥ ६७६ ॥ यस्मात्—

आणाबलाभिओगो णिग्गंथाणं ण कप्पई काउं । इच्छा पउंजियव्वा सेहे राईणिए [ य ] तहा ॥ ६७७ ॥

आज्ञा—भवतेदं कार्यमेवेति, तदकुर्वतो बलात्कार(राप)णं बलाभियोगः, स निर्ग्रन्थानां न कल्पते कर्तुं, किन्त्विच्छाकारः प्रयोक्तव्यः, कार्ये उत्पन्ने सति शि(शै)क्षके रत्नाधिके वा आलापादि प्रष्टुकामेन, आद्यन्तग्रहणादन्येषु च ॥ ६७७ ॥ अपवादतस्त्वाज्ञाबलाभियोगावपि दुर्विनीते प्रयोक्तव्यौ, स हि प्रथममिच्छाकारेण योज्यते, अकुर्वन्नाज्ञया पुनर्बलाभियोगेनेति, आह—

जह जच्चबाहलाणं आसाणं जणवएसु जायाणं । सयमेव खलिणगहणं अहवावि बलाभिओगेणं ॥ ६७८ ॥

पुरिसज्जाएऽवि तहा विणीयविणयंमि नत्थि अभिओगो । सेसंमि उ अभिओगो जणवयजाए जहा आसे ॥६७९॥

यथा जात्यबाह्लीकानामश्वानां जनपदेषु च—मगधादिषु जातानां, चलोपोऽत्र ज्ञेयः, स्वयमेव खलिनग्रहणं स्यादथवा बलाभियोगेन, खलिनं—कविकमुच्यते, अयमर्थोपनयः—पुरुषजातेऽपि तथा, जातशब्दः प्रकारवचनः, विविधमानी(धं नी) तो (तः—प्रापितः) विनयो येन स तथा, तस्मिन्नास्त्यभियोगो जात्यबाह्लीकाश्ववत्, शेषे—विनयरहिते बलाभियोगः प्रवर्त्तते, जनपदजाते यथाऽश्वे, तस्मात्स्वयमेव प्रत्युतेच्छाकारं दत्त्वाऽनभ्यर्थितेनैव वैयावृत्त्यं कार्यम् ॥ ६७८—७९ ॥ आह—तथाप्यनभ्यर्थितस्य स्वयमिच्छाकारकरणमयुक्तमेवेत्याशङ्क्याह—

अब्भत्थणाए मरुओ वानरओ चेव होइ दिट्ठंतो । गुरुकरणे सयमेव उ वाणियगा दुण्णि दिट्ठंता ॥ ६८० ॥

अभ्यर्थनायां मरुकः, पुनः शिष्यनोदनायां सत्यां वानरकश्चैव भवति दृष्टान्तः, गुरुकरणे स्वयमेव तु वणिजौ द्वौ दृष्टान्तः, यथा एकस्य साधोर्लब्धिरस्ति, परं न करोति वैयावृत्त्यं, आचार्यनोदितः प्राह-को मामभ्यर्थयति?, आचार्येणोचे-यो ज्ञानमदमत्तो नृपादिषु दातुमुद्युक्तेषु कार्त्तिकपूर्णिमायां याचनार्थमगच्छन् भार्यया याहीत्युक्तः प्राह-एकं शूद्राद्दर्थयिष्ये अपरं तद्गृहे यास्यामि, यस्य कार्यं स ममानीय ददातु, एवं स यावज्जीवं दरिद्रोऽभूत्, एवं त्वमप्यर्थनां मार्गयन् भ्रश्यसि निर्जराया इत्युक्तः साधुराह-एवं जानद्भिरात्मनैव किं न क्रियते?, तैरुक्तं सदृशस्त्वं वानरस्य, यथैको वानरो वृक्षस्थसुगृह्या शकुनिकया गृहार्थं भणितो रुष्टस्तद्गृहं बभञ्ज, एवं त्वमपि ममैवोपर्येतेन(रितनो) जातः, किञ्च ममान्यदपि निर्जराद्वारमस्ति, महत्तल्लाभात् भ्रश्यामि, यथा द्वौ वणिजौ स्तः, एको वर्षासु मूल्यदानभयात् स्वयमेव गृहमाच्छादयति, द्वितीयो मूल्यं दत्त्वा छादयति स्म, स तद्दिने व्यवहरन् द्विगुणं लभते, एवं यद्यहं स्वयमेव वैयावृत्त्यं कुर्वे तदा अचिन्तनेन सूत्रार्था नश्यन्ति, इत्यादिबहुतरं मे नश्यति, आह च-'सुत्तत्थेसु अचिन्तण आएसे वुड्ढसेहगगिलाणे। बाले खमए वाई इड्ढीमाइ अणिड्ढी य ॥ १ ॥ एएहिं कारणेहिं तुंबभूओ उ होति आयरिओ। वेयावच्चं न करे कायव्वं तस्स सेसेहिं ॥ २ ॥ जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खेज्जा। नहु तुंबंमि विणट्ठे अरगा साहारगा होंति' ॥ ३ ॥ सूत्रार्थयोरचिन्तनं, आदेशः प्राघूर्णकस्तस्य स्वागतं न कश्चित्करोति, वृद्धशिक्षकग्लानक्षपकादीनां च न कश्चित्तप्तिं करोति, चेत्त्वाचार्यो वैयावृत्त्यव्यग्रो न स्यात्ततस्तान् परतः स्वतो वा उपचरत्येव, व्यालः सर्पस्तेन चेत्कश्चित्संयतो दश्यते तदा तदुपचारज्ञाभावात्कस्तमुपचरति?, ऋद्धिमति सामान्येन सार्थवाहादौ आदितोऽमात्यादौ वादिनि च समायाते लघुत्वं, अनृद्धिमतस्तु

व्रताद्यर्थमायातस्याचार्यमपि वैयावृत्त्ये नियुक्तं दृष्ट्वा विपरिणामादयो दोषाः । आह–इच्छाकारेणेदं तवानयामीत्याद्युक्त्वा यदा लब्ध्यभावान्न सम्पादयति तदा निर्जरालाभविकलस्तस्येच्छाकारः, इत्यतः किं तेनेत्याशङ्क्याह–

संजमजोए अब्भुट्ठियस्स सद्धाए काउकामस्स । लाभो चेव तवस्सिस्स होइ अदीणमणसस्स ॥ ६८१ ॥

निर्जराया लाभ एव अलब्ध्यादावदीनमनसः ॥ ६८१ ॥ मिथ्याकारमाह–

संजमजोए अब्भुट्ठियस्स जं किंचि वितहमायरियं । मिच्छा एतंति वियाणिऊण मिच्छत्ति कायव्वं ॥ ६८२ ॥

वितथमाचरितं भूतमिति वाक्यशेषः, 'मिच्छत्ति कायव्वं'ति मिथ्यादुष्कृतं दातव्यं । संयमयोगविषयायां च प्रवृत्तौ वितथासेवने मिथ्यादुष्कृतं दोषापनोदायालं, न तूपेत्यकरणगोचरायां ॥ ६८२ ॥ तथा चोत्सर्गमेवाह–

जइ य पडिक्कमियव्वं अवस्स काऊण पावयं कम्मं । तं चेव न कायव्वं तो होइ पए पडिक्कंतो ॥ ६८३ ॥

यदि च प्रतिक्रान्तव्यं मिथ्यादुष्कृतं दातव्यमित्यर्थः, ततश्च 'तदेव' पापकं कर्म न कर्त्तव्यं, ततो भवति 'पदे' उत्सर्गपदविषये प्रतिक्रान्तः ॥ ६८३ ॥ यथाभूतस्येदं मिथ्यादुष्कृतं सुदत्तं स्यात्तथाभूतमाह–

जं दुक्कडंति मिच्छा तं भुज्जो कारणं अपूरेंतो । तिविहेण पडिक्कंतो तस्स खलु दुक्कडं मिच्छा ॥ ६८४ ॥

यत्करणमिति योगः, ततो यद्वस्तु दुष्कृतं (दुष्टु कृतं) दुष्कृतमित्येवं विज्ञाय 'मिच्छ'त्ति मिथ्यादुष्कृतं दत्तं, तद् भूयः प्रागुक्तं दुष्कृतकारणमपूरयन्नकुर्वन् यो वर्त्तते त्रिविधेन योगेन प्रतिक्रान्तो निवृत्तो यस्तस्माद्दुष्कृतकारणात् तस्यैव दुष्कृतं प्रागुक्तं, भवतीति क्रियाध्याहारः ॥ ६८४ ॥ यस्य मिथ्यादुष्कृतं दत्तमपि न सम्यक् स्यात्तमाह–

जं दुक्कडंति मिच्छा तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई मायानियडीपसंगो य ॥ ६८५ ॥

यत्पापं किञ्चित् दुष्कृतमिति विज्ञाय, स हि प्रत्यक्षमृषावादी मायानिकृतिप्रसङ्गश्च तस्य ॥ ६८५ ॥ कः पुनरस्य मिथ्यादुष्कृतपदस्यार्थ इत्याशङ्क्याह–

मित्ति मिउमद्दवत्ते छत्ति य दोसाण छायणे होइ । मित्ति य मेराए ठिओ दुत्ति दुगंछामि अप्पाणं ॥ ६८६ ॥

कत्ति कडं मे पावं डत्ति य डेवेमि तं उवसमेणं । एसो मिच्छादुक्कडपयक्खरत्थो समासेणं ॥ ६८७ ॥

'मी'त्ययं वर्णो मृदुमार्दवत्वे वर्त्तते, तत्र मृदुत्वं–कायनम्रता मार्दवत्वं–भावनम्रता, 'छे'ति च दोषस्यासंयमयोगलक्षणस्य छादने स्थगने, 'मी'त्ययं च मर्यादायां–चारित्ररूपायां स्थितोऽहमित्यर्थस्याभिधायकः, 'दु' इति जुगुप्सामि–निन्दामि दुष्कृतकार(रि)णमात्मानमित्यस्मिन्नर्थे ॥ ६८६ ॥ 'क' इति कृतं मया पापमित्येवमभ्युपगमार्थे, 'ड' इति 'डेवेमि' लङ्घयामि ॥ ६८७ ॥ तथाकारो यस्य दीयते तमाह–

कप्पाकप्पे परिणिट्ठियस्स ठाणेसु पंचसु ठियस्स । संजमतवड्ढगस्स उ अविकप्पेणं तहाकारो ॥ ६८८ ॥

कल्प आचारो विपरीतस्त्वकल्पः, जिनकल्पादिर्वा कल्पश्चरकादिदीक्षा त्वकल्पः, एकवद्भावेन कल्पाकल्पे परिनिष्ठितस्य ज्ञाननिष्ठां प्राप्तस्येत्यर्थः, स्थानेषु महाव्रतेषु पञ्चसु स्थितस्य, संयमतपआढ्यस्याऽविकल्पेन निश्चयेन तथाकारः कार्यः ॥ ६८८ ॥ 'तथा' इति कोऽर्थः?, इत्याह–

वायणपडिसुणणाए उवएसे सुत्तअत्थकहणाए । अवितहमेयंति तहा पडिसुणणाए तहक्कारो ॥ ६८९ ॥

अवितथमेतद्यथाहुर्यूयं, तथा प्रतिपृच्छोत्तरकालमाचार्ये कथयति सति प्रतिश्रवणायां च तथाकारप्रवृत्तिः ॥६८९॥

स्वस्वस्थाने इच्छाकारादिप्रयोक्तुः फलमाह—

जस्स य इच्छाकारो मिच्छाकारो य परिचिया दोऽवि। तइओ य तहक्कारो न दुल्लभा सोग्गई तस्स ॥ ६९० ॥

आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ। एयं इच्छं नाउं गणिवर! तुब्भंतिए णिउणं ॥ ६९१ ॥

आवश्यकीनैषेधिकीद्वयमपि स्वरूपादिभेदभिन्नं इच्छामि ज्ञातुं हे गणिवर! युष्मदन्तिके निपुणमिति क्रियाविशेषणं ॥ ६९०–९१ ॥ आहाचार्यः—

आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ। वंजणमेयं तु दुहा अत्थो पुण होइ सो चेव ॥ ६९२ ॥

'व्यञ्जनं, शब्दरूपमेतदेव द्विधा, अर्थः पुनर्भवति, 'स एव' एक एव, यस्मादवश्यंकर्त्तव्ययोगक्रिया आवश्यकी, निषिद्धात्मनश्चातिचारेभ्यो नैषेधिकी, न ह्यसावप्यवश्यं कर्त्तव्यं व्यापारमुल्लङ्घ्य वर्त्तते, आह—यद्येवं भेदोपन्यासः किमर्थं?, उच्यते क्वचित्स्थितिगमनक्रियाभेदादभिधानभेदाच्च ॥ ६९२ ॥

'आवश्यकीं च निर्गच्छन्नित्युक्तं, तत्र साधोः किमवस्थानं श्रेय उताटनं?, उच्यते, अवस्थानं, यत आह—

एगग्गस्स पसंतस्स न होंति इरियाइया गुणा होंति। गंतव्वमवस्सं कारणंमि आवस्सिया होइ ॥ ६९३ ॥

एकमग्रं—आलम्बनस्येत्येकाग्रस्तस्य, 'प्रशान्तस्य' क्रोधादिरहितस्य, तिष्ठतो न भवन्ति, ईर्याशब्देनेहेर्याकार्यं कर्म गृह्यते, ईर्याऽऽदौ येषामात्मसंयमविराधनादिदोषाणां ते ईर्यादयः, तथा 'गुणाश्च' स्वाध्यायाध्ययनादयो भवन्ति, न चैवं न गन्तव्यं

एव, किन्तु गन्तव्यमवश्यं कारणे गुरुग्लानादिसम्बन्धिनि, तथा कारणे गच्छत आवश्यकी भवति ॥ ६९३ ॥ आह-किं सर्वस्यैव उत न ?, नेति, कस्य तर्हि ?, उच्यते-

आवस्सिया उ आवस्सएहिं सव्वेहिं जुत्तजोगिस्स । मणवयणकायगुत्तिंदियस्स आवस्सिया होइ ॥ ६९४ ॥

आवश्यकी तु 'आवश्यकैः' प्रतिक्रमणादिभिः सर्वैर्युक्तयोगिनः स्यात्, शेषकालमपि निरतिचारस्य क्रियास्थस्येत्यर्थः, तस्य च गुरुनियोगादिना प्रवृत्तिकालेऽपि मनोवाक्कायेन्द्रियैर्गुप्तस्यावश्यकी भवति, कायात्पृथगिन्द्रियग्रहणं प्राधान्यख्यापनार्थं ॥ ६९४ ॥ नैषेधिकीमाह-

सेज्जं ठाणं च जहिं चेएइ तहिं निसीहिया होइ । जम्हा तत्थ निसिद्धो तेणं तु निसीहिया होइ ॥ ६९५ ॥

शय्या-शयनीयस्थानं, [ स्थानं ], ऊर्ध्वस्थानं कायोत्सर्गमित्यर्थः, चशब्दो वीरासनाद्यनुक्तसमुच्चयार्थः, यत्र 'चेतयते' अनुभवरूपतया विजानाति वेदयतीत्यर्थः, तत्रैवंविधस्थितिक्रियाविशिष्ट एव स्थाने नैषेधिकी भवति, नान्यत्र, यस्मात्तत्र निषिद्धोऽसौ तेनैव कारणेन नैषेधिकी भवति, निषेधात्मकत्वात्तस्याः ॥ ६९५ ॥ [ पाठान्तरं वा ]

सेज्जं ठाणं च जदा चेतेति तया निसीहिया होइ । जम्हा तदा निसेहो निसेहमइया च सा जेणं ॥ ६९६ ॥

'एगग्गस्से'त्यादिना मूलगाथायाः आवश्यकीं [ च ] निर्गच्छन् यां चाऽऽगच्छन्नैषेधिकीं करोति व्यञ्जनमेतद् द्विधा, इत्येतावत् स्थितिरूपनैषेधिकीप्रतिपादनं व्यञ्जनभेदनिबन्धनमधिकृत्य व्याख्यातं । अमुमेवार्थं भाष्यमाह-

आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ । सेज्जाणिसीहियाए णिसीहियाअभिमुहो होई ॥१२०॥ (भा०)

'आवस्सियं च णिंतो जं च अइंतो निसीहियं कुणइ'त्ति एतद्व्याख्यातं, उपलक्षणत्वात्सह तृतीयेन पादेन। अधुना 'अर्थः पुनर्भवति स एवे' ति प्रतिपाद्यते—तत्रेत्थमेकपदार्थः स्यात्—यस्मान्नैषेधिक्यपि नावश्यंकर्त्तव्यव्यापारगोचरतामतीत्य वर्त्तते, यतः प्रविशन् संयमयोगानुपालनाय शेषपरिज्ञानार्थं चेत्थमाह—शय्या-वसतिः सा च, निषिध्यन्ते तस्यां प्रविशद्भिर्बहिः, संयतातिचारा इति कृत्वा नैषेधिकीत्युच्यते, तस्यां शय्यानैषेधिक्यां वहिस्तात् प्रविशन् साधुः शेषसाधून् प्रति ब्रूते—भोः साधवो! नैषेधिक्या, नैषेधिकीशब्देन चेहोपचारान्निषिद्धात्मनः सम्बन्धि शरीरमुच्यते, अतः शरीरेणाभिगमनं प्रत्यभिमुखोऽहं, संवृत्त्य(त)गात्रैर्भवद्भिर्भाव्यमिति संज्ञां करोति। इतश्चैक एवार्थो यत आह—

जो होइ निसिद्धप्पा निसीहिया तस्स भावओ होइ। अणिसिद्धस्स निसीहिय केवलमेत्तं हवइ सद्दो ॥१२१॥ (भा.)

निषिद्धो मूलगुणोत्तरगुणातिचारेभ्य आत्मा येनेति समासः, 'भावतः' परमार्थतः, नैषेधिकी केवलं शब्दमात्रमेव भवति ॥ १२१ ॥ आह—यद्येवं तत एकार्थतायाः किमायातं?, उच्यते, निषिद्धात्मनो नैषेधिकी स्यादित्युक्तं, स च—

आवस्सयंमि जुत्तो नियमणिसिद्धोत्ति होइ नायव्वो। अहवाऽवि णिसिद्धप्पा णियमा आवस्सए जुत्तो ॥१२२॥(भा)

'आवश्यके' मूलगुणोत्तरगुणानुष्ठानलक्षणे युक्तः नियमेन निषिद्धो नियमनिषिद्धः, 'इति' एवं भवति ज्ञातव्यः। आवश्यक्यपि चावश्यकयुक्तस्यैवेत्यत एकार्थता। अथवा निषिद्धात्मापि नियमादावश्यके युक्तो यतः अतोऽप्येकार्थता ॥ १२२ ॥ आपृच्छादिद्वारचतुष्कमाह—

आपुच्छणा उ कज्जे पुव्वनिसिद्धेण होइ पडिपुच्छा। पुव्वगहिएण छंदण णिमंतणा होअगहिएणं ॥ ६९७ ॥

आपृच्छनमापृच्छा सा च कर्त्तुमभीष्टे कार्ये प्रवर्त्तमानेन गुरोः कार्या, तथा पूर्वनिषिद्धेन सता उत्पन्ने च प्रयोजने कर्त्तुकामेन प्रतिपृच्छा कर्त्तव्या भवति, । तथा पूर्वगृहीतेनाशनादिना छन्दना शेषसाधुभ्यः कार्या–यदीदमुपयुज्यते ततो गृह्यतामिति, तथा निमन्त्रणा भवतीत्यगृहीतेनाशनादिना भवतोऽशनाद्यानयामीति ॥ ६९७ ॥ उपसम्पद्द्वारमाह–

उवसंपया य तिविहा णाणे तह दंसणे चरित्ते य । दंसणणाणे तिविहा दुविहा य चरित्तट्ठाए ॥ ६९८ ॥

द्विविधा च चारित्रार्थाय ॥ ६९८ ॥ तत्र यदुक्तं 'दर्शनज्ञानयोस्त्रिविधा' तद्दर्शनायाह–

वत्तणा संधणा चेव गहणं सुत्तत्थतदुभए । वेयावच्चे खमणे, काले आवकहाइ य ॥ ६९९ ॥

वर्त्तना सन्धना ग्रहणमित्येतत्त्रयं सूत्रार्थोभयविषयमवगन्तव्यं, एतदर्थमुपसम्पद्यते, तत्र वर्त्तना प्राग्गृहीतस्यैवास्थिरस्य सूत्रादेर्गुणनं, सन्धना तस्यैव प्रदेशान्तरविस्मृतस्य योजना, ग्रहणं पुनस्तस्यैव तत्प्रथमतया आदानं, एवं ज्ञाने नव भेदाः, दर्शनेऽपि दर्शनप्रभावनीयशास्त्रविषया एते एव द्रष्टव्याः । अत्र च सन्दिष्टः सन्दिष्टस्योपसम्पद्यते इत्यादिचतुर्भङ्गी, आद्यः शुद्धः, शेषास्त्वशुद्धाः, द्विविधा चारित्रार्थायेति यदुक्तं तदाह–चारित्रोपसम्पद्वैयावृत्त्यविषया क्षपणविषया च, इयं च कालतो यावत्कथिका चादित्वरा च स्यात्, अयमर्थः–चारित्रार्थमाचार्याय कश्चिद्वैयावृत्त्यकरत्वं प्रतिपद्यते, स च कालत इत्वरो यावत्कथिकश्च स्यात् ॥ ६९९ ॥ अयमेवार्थो विशेषत उच्यते–तत्रापि सन्दिष्टेन सन्दिष्टस्योपसम्पद्दातव्या इति मौलिकोऽयं गुणः, एतत्प्रभवत्वादुपसम्पदः, अतोऽमुमेवार्थमाह–

संदिट्ठो संदिट्ठस्स चेव संपज्जई उ एमाई । चउभंगो एत्थं पुण पढमो भंगो हवइ सुद्धो ॥ ७०० ॥

'सन्दिष्टो' गुरुणाऽभिहितः सन्दिष्टस्यैवाचार्यस्य यथामुकस्य उपसम्पद्यते (तां) उपसम्पदं प्रयच्छत इत्यर्थः, एवमादिश्चतुर्भङ्गो, आद्य उक्त एव १, सन्दिष्टोऽसन्दिष्टस्य चाचार्यस्य २, असन्दिष्टः सन्दिष्टस्य, न तावदिदानीं [ गन्तव्यं ] गन्तव्यं त्वमुकस्य ३, असन्दिष्टोऽसन्दिष्टस्य-न तावदिदानीं [ गन्तव्यं ] न चामुकस्य ॥ ७०० ॥ वर्त्तनादिस्वरूपमाह—

अथिरस्स पुव्वगहियस्स वत्तणा जं इहं थिरीकरणं । तस्सेव पएसंतरणट्ठस्सऽणुसंधणा घडणा ॥ ७०१ ॥

गहणं तप्पढमतया सुत्ते अत्थे य तदुभए चेव । अत्थग्गहणंमि पायं एस विही होइ णायव्वो ॥ ७०२ ॥

अत्र द्वितीयगाथापश्चार्द्धेन प्रसङ्गतोऽर्थग्रहणविधिमभिधित्सुरुत्तरग्रन्थसम्बन्धनायाह-अर्थग्रहणे प्राय एव वक्ष्यमाणो विधिर्भवति ज्ञातव्यः, प्रायोग्रहणात्सूत्रमपि प्रमार्जितभूमावध्येतव्यमित्यादिसूत्रगतमपि किञ्चिद्विधिं सूचयति ॥ ७०१ ॥ ७०२ ॥ अधिकृतविधिदर्शनाय द्वारगाथामाह—

मज्जणणिसेज्जअक्खा कितिकम्मुस्सग्ग वंदणं जेट्ठे । भासंतो होई जेट्ठो नो परियाएण तो वंदे ॥ ७०३ ॥

प्रमार्जनं, निषद्या, अक्षाः, व्याख्याकर्त्तुः कृतिकर्म, विघ्नोपशान्तयेऽनुयोगारम्भाय कायोत्सर्गः, यश्च व्याख्याऽवसाने चिन्तनिकं कारयति स इह ज्येष्ठो विवक्षितस्तस्मै वन्दनं, एतेषां प्रत्येकं विधिर्वाच्यः, ननु ज्येष्ठः किं पर्यायेण उत लघुरपि व्याख्यालब्धिसम्पन्नो भाषकोऽत्र ज्येष्ठ इत्याशङ्क्याह-भाषमाण इह ज्येष्ठो न पर्यायतः, अतस्तं लघुमपि भाषकं वन्दध्व ॥ ७०३ ॥ एतद्व्याचिख्यासयैवाह—

ठाणं पमज्जिऊणं दोण्णि निसिज्जाउ होंति कायव्वा । एगा गुरुणो भणिया बितिया पुण होंति अक्खाणं ॥ ७०४ ॥

'अक्खाणं' ति समवसरणस्य ॥ ७०४ ॥ कृतिकर्मद्वारमाह-

दो चेव मत्तगाइं खेले तह काइआए वीयं तु । जावइया य सुणेंती सव्वेऽवि य ते तु वंदंति ॥ ७०५ ॥

मात्रकं-समाधिः, अर्द्धकृतव्याख्यानोत्थानानुत्थानाभ्यां पलिमन्थात्मविराधनादयश्च दोषा भावनीयाः ॥ ७०५ ॥

कायोत्सर्गद्वारमाह-

सव्वे काउस्सग्गं करेंति सव्वे पुणोऽवि वंदंति । णासण्णे णाइदूरे गुरुवयणपडिच्छगा होंति ॥ ७०६ ॥

सर्वे श्रोतारः कायोत्सर्गं चोत्सार्य सर्वे पुनरपि वन्दते, ततो नासन्ने नातिदूरे व्यवस्थिताः सन्तो गुरुवचनप्रतीच्छका भवन्ति-शृण्वन्ति ॥ ७०६ ॥ श्रवणविधिमाह-

णिद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं । भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेयव्वं ॥ ७०७ ॥

अभिकंखंतेहिं सुहासियाइं वयणाइं अत्थसाराइं । विम्हियमुहेहिं हरिसागएहिं हरिसं जणंतेहिं ॥ ७०८ ॥

'हरिसागएहिं' ति आगतहर्षैरित्यर्थः, अन्येषां च हर्षं जनयद्भिः, एवं शृण्वद्भिस्तैर्गुरोरतीव परितोषः स्यात् ॥ ७०८ ॥

ततः किमित्याह-

गुरुपरिओसगएणं गुरुभत्तीए तहेव विणएणं । इच्छियसुत्तत्थाणं खिप्पं पारं समुवयंति ॥ ७०९ ॥

'गुरुपरितोषगतेन' गुरुपरितोषजातेन सता ॥ ७०९ ॥

वक्खाणसमत्तीए जोगं काऊण काइआईणं । वंदंति तओ जेट्ठं अण्णे पुव्वं चिय भणंति ॥ ७१० ॥

अन्ये आचार्या इत्थं भणन्ति—किल पूर्वमेव व्याख्यानारम्भकाले ज्येष्ठं वन्दन्ते॥७१०॥ द्वारगाथापश्चार्द्धं व्याचिख्यासुराह—

चोएति जइ हु जिट्ठो कहिंचि सुत्तत्थधारणाविगलो । वक्खाणलद्धिहीणो निरत्थयं वंदणं तंमि ॥ ७११ ॥

अह वयपरियाएहिं लहुगोऽविहु भासओ इहं जेट्ठो । रायणियवंदणे पुण तस्सवि आसायणा भंते ! ॥ ७१२ ॥

अथ वयःपर्यायाभ्यां लघुरपि भापक एवेह ज्येष्ठः, रत्नाधिकवन्दने पुनस्तस्याप्याशातना भदन्त ! प्राप्नोति, तथाहि—न युज्यत एव चिरप्रव्रजितान् लघोर्वन्दनं दापयितुं ॥ ७११–७१२ ॥ इत्थमाशङ्क्य आह—

जइवि वयमाइएहिं लहुओ सुत्तत्थधारणापडुओ । वक्खाणलद्धिमंतो सो चिय इह घेप्पई जेट्ठो ॥ ७१३ ॥

आशातनापरिजिहीर्षया त्वाह—

आसायणावि णेवं पडुच्च जिणवयणभासयं जम्हा । वंदणयं राइणिए तेण गुणेणंपि सो चेव ॥ ७१४ ॥

'तेन गुणेन' अर्हद्वचनव्याख्यानलक्षणेन ॥ ७१४ ॥ प्रसङ्गतो वन्दनविषय एव निश्चयव्यवहारमतमाह—

न वओ एत्थ पमाणं न य परियाओऽवि णिच्छयमएणं । ववहारओ उ जुज्जइ उभयनयमयं पुण पमाणं ॥ ७१५ ॥

अत्र वन्दनविधौ ज्येष्ठवन्दनादिव्यवहारलोपातिप्रसङ्गनिवृत्त्यर्थमाह—व्यवहारतस्तु युज्यते, किमत्र प्रमाणमित्याह—उभयमतं पुनः प्रमाणं ॥ ७१५ ॥ प्रकृतमेवार्थं समर्थयति—

निच्छयओ दुन्नेयं को भावे कम्मि वट्टई समणो ? । ववहारओ उ कीरइ जो पुव्वठिओ चरित्तंमि ॥ ७१६ ॥

व्यवहारतस्तु क्रियते वन्दनं 'यः पूर्वं स्थितश्चारित्रे' व्यवहारस्यापि च बलवत्त्वात् ॥ ७१६ ॥ आह च भाष्यकारः—

ववहारओऽवि हु बलवं जं छउमत्थंपि वंदई अरहा । जा होइ अणाभिण्णो जाणंतो धंमयं एयं ॥ १२३ ॥ (भा.)

छद्मस्थमपि पूर्वं रत्नाधिकं गुर्वादि वन्दते 'अर्हन्नपि' केवल्यपि यावद्भवत्यनभिज्ञातः, जानन् धर्मतामेतां व्यवहारनय-बलातिशयलक्षणां ॥ १२३ ॥ आह-यद्येवं सुतरां वयःपर्यायहीनस्य तदधिकान् वन्दापयितुं अयुक्तं, उच्यते-

एत्थ उ जिणवयणाओ सुत्तासायणबहुत्तदोसाओ । भासंतगजेट्ठगस्स उ कायव्वं होइ किइकम्मं ॥ ७१७ ॥

'अत्र तु' व्याख्यानप्रस्तावन्दनाधिकारे 'जिनवचनात्' तीर्थकरोक्तत्वात् तथाऽवन्द्यमाने सूत्राशातनादिदोषबहुत्वात् भाषमाणज्येष्ठस्यैव कर्त्तव्यं भवति कृतिकर्म ॥ ७१७ ॥ एवं ज्ञानदर्शनोपसम्पद्विधिरुक्तः, चारित्रोपसम्पद्विधिमाह-

दुविहा य चरित्तंमी वेयावच्चे तहेव खमणे य । णियगच्छा अण्णंमि य सीयणदोसाइणा होति ॥ ७१८ ॥

आह-किमत्रोपसम्पदा अस्य?, स्वगच्छ एव वैयावृत्त्यादि कस्मान्न क्रियते, निजगच्छादन्यस्मिन् गमनं सीदनदोषादिना भवति ॥ ७१८ ॥

इत्तरियाइविभासा वेयावच्चंमि तहेव खमणे य । अविगिट्ठविगिट्ठंमि य गणिणो गच्छस्स पुच्छाए ॥ ७१९ ॥

चारित्रार्थमाचार्याय( र्यस्य ) कश्चिद्वैयावृत्त्यकरत्वं प्रतिपद्यते, स च कालत इत्वरो यावत्कथिकश्च स्यात्, आचार्यस्यापि वैयावृत्त्यकरोऽस्ति न वा, तत्र यदि नास्ति ततोऽसाविष्यते एव, अथास्ति स इत्वरो वा यावत्कथिको वा, आगन्तुकोऽप्येवं द्विभेद एव, तत्र यदि द्वावपि यावत्कथिकौ ततश्च यो लब्धिमान् स कार्यते, अन्यस्तु उपाध्यायादिभ्यो दीयते, अथ द्वावपि लब्धियुक्तौ ततो वास्तव्य एव कार्यते, इतरस्तूपाध्यायादिभ्यो दीयते अथ नेच्छति ततो वास्तव्य एव प्रीतिपुरःसरं

तेभ्यो दीयते आगन्तुकस्तु कार्यते, अथ प्राक्तनोऽप्युपाध्यायादिभ्यो नेच्छति तत आगन्तुको विसृज्यते एव इत्यादिविभाषा कार्या। अथ क्षपणोपसम्पदुच्यते—चारित्रनिमित्तं कश्चित्क्षपणार्थमुपसम्पद्यते, स च क्षपको द्विविधः—इत्वरो यावत्कथिकश्च, यावत्कथिक उत्तरकालेऽनशनकर्त्ता, इत्वरस्तु द्विधा—विकृष्टक्षपको अविकृष्टक्षपकश्च, तत्राष्टमादिक्षपको विकृष्टक्षपकः, चतुर्थ-षष्ठक्षपकस्त्वविकृष्टः, तत्रापि विकृष्ट आचार्येण प्रष्टव्यः—त्वमायुष्मन्! पारणके कीदृशो भवसि?, यद्यसावाह—ग्लानोपमस्ततो असौ वाच्योऽलं तव क्षपणेन, स्वाध्यायादौ प्रयत्नं कुरु, इतरोऽपि पृष्टः सन्नेवमेव प्रज्ञाप्यते। अन्ये तु व्याचक्षते विकृष्टक्षपकः पारणककाले ग्लानकल्पतामनुभवन्नपीष्यत एव, यस्तु मासादिक्षपको यावत्कथिको वा स इष्यत एव, तत्राप्याचार्येण गच्छः प्रष्टव्यः—अयं क्षपक उपसम्पद्यते तदनुमताविष्यते एवान्यथा त्यज्यते ॥ ७१९ ॥ चारित्रोपसम्पद्विशेषमाह—

उवसंपन्नो जं कारणं तु तं कारणं अपूरेंतो। अहवा समाणियंमी सारणया वा विसग्गो वा ॥ ७२० ॥

'यत्कारणं' यन्निमित्तं, तुतोऽन्यच्च सामाचार्यन्तर्गतं किमपि गृह्यते, 'तत्कारणं' वैयावृत्त्याद्यपूरयन्, यदा वर्त्तते इत्यध्याहारः, तदा तस्य 'सारणा'नोदना वा क्रियते तद्विसर्गो वा, तथा न पूरयन्नेव यदा वर्त्तते तदैव सारणा विसर्गो वा क्रियते, किन्तु 'अहवा समाणियंमी'त्ति परिसमाप्तिं नीतेऽभ्युपगतप्रयोजने सारणा च क्रियते, यथा—समाप्तं, तद्विसर्गो वा ॥७२०॥ उक्ता साधूपसम्पत्, अथ गृहस्थोपसम्पदुच्यते—तत्र साधुना सर्वत्रैवानुज्ञाप्य स्थातव्यं,—

इत्तरियं पि न कप्पइ अविदिन्नं खलु परोग्गहाईसुं। चिट्ठित्तु निसिइत्तु व तइयव्वयरक्खणट्ठाए ॥ ७२१ ॥

'इत्वरमपि' स्वल्पमपि कालमिति गम्यते, न कल्पते अविदत्तं खलु परावग्रहादिषु, आदिशब्दः परावग्रहानेकभेद-

प्रख्यापकः, 'स्थातुं' कायोत्सर्गं कर्त्तुं निषीदितुं, अदत्तादानविरत्याख्यतृतीयव्रतरक्षणार्थं ॥ ७२१ ॥ साम्प्रतमुपसंहरन्नाह—

एवं सामायारी कहिया दसहा समासओ एसा । संजमतवड्ढगाणं निग्गंथाणं महरिसीणं ॥ ७२२ ॥

सामाचार्यासेवकानां फलमाह—

एवं सामायारिं जुंजंता चरणकरणमाउत्ता । साहू खवंति कम्मं अणेगभवसंचियमणंतं ॥ ७२३ ॥

पदविभागसामाचारी स्वस्थानादवसेया, उक्तः सामाचार्युपक्रमकालः, यथायुष्कोपक्रमकालः सप्तधा, तद्यथा—

अज्झवसाणनिमित्ते आहारे वेयणा पराघाए । फासे आणापाणु सत्तविहं झिज्जए आउं ॥ ७२४ ॥

अध्यवसानं रागस्नेहभयभेदात्त्रिधा, तस्मिन्नध्यवसाने सति, तथा दण्डादिके निमित्ते, आहारे प्रचुरे सति, वेदनायां नयनादिसम्बन्धिन्यां सत्यां, पराघाते गर्त्तापातादिसमुत्थे सति, स्पर्शे भुजङ्गादिसम्बन्धिनि, प्राणापानयोर्निरोधेन, सप्तविधं भिद्यते आयुः ॥ ७२४ ॥ अत्र निमित्तमनेककारणमाह—

दंडकससत्थरज्जू अग्गी उदगपडणं विसं वाला । सीउण्हं अरइ भयं खुहा पिवासा य वाही य ॥ ७२५ ॥

मुत्तपुरीसनिरोहे जिण्णाजिण्णे य भोयणे बहुसो । घंसणघोलणपीलण आउस्स उवक्कमा एए ॥ ७२६ ॥

दण्डकसशस्त्ररज्जवः, अग्निः, उदकपतनं, विषं, व्यालाः—सर्पाः, शीतोष्णं, अरतिर्भयं, क्षुत्पिपासा च व्याधिश्च ॥ ७२५ ॥ मूत्रपुरीषनिरोधः, जीर्णाजीर्णं च भोजनं, बहुशः घर्षणं चन्दनस्येव, घोलनमङ्गुष्ठाङ्गुलिगृहीतसञ्चाल्यमानयूकाया

इव, पीडनमिक्ष्वादेरिव, आयुष उपक्रमहेतुत्वादुपक्रमा एते ॥ ७२६ ॥ उक्त उपक्रमकालः, अधुना देशकालद्वारं, तत्र देशकालः प्रस्ताव उच्यते, स च प्रशस्तोऽप्रशस्तश्च, तत्र प्रशस्तस्वरूपमाह—

निद्धूमगं च गामं महिलाथूमं च सुण्णयं दट्ठुं । णीयं च कागा ओलेंति जाया भिक्खस्स हरहरा ॥ ७२७ ॥

महिलास्तूपं-कूपतटं, तथा 'णीयं च कागा ओलेंति'त्ति [ नीचं च काकाः ] गृहाणि प्रति भ्रमन्ति, तांश्च दृष्ट्वा विद्यात् यथा जाता भैक्षस्य 'हरहरा'—इति अतीव भिक्षाप्रस्तावः ॥ ७२७ ॥ अप्रशस्तस्वरूपमाह—

निम्मच्छियं महुं पायडो णिही खज्जगावणो सुण्णो । जायंगणे पसुत्ता पउत्थवइया य मत्ता य ॥ ७२८ ॥

खाद्यकापणः- कुल्लूरिकापणः शून्यः, अतो मध्वादीनां ग्रहणप्रस्तावः ॥ ७२८ ॥ अधुना कालकाल उच्यते कालस्य—सत्त्वस्य श्वानादेः कालो—मरणं कालकालः, अमुमेवार्थमाह—

कालेण कओ कालो अम्हं सज्झायदेसकालंमि । तो तेण हओ कालो अकालकालं करेंतेणं ॥ ७२९ ॥

'कालेन' शुना 'कृतः कालः' कृतं मरणं, ततोऽनेन हतः कालो भग्नः स्वाध्यायकालः, अकाले—अप्रस्तावे 'कालं' मरणं कुर्वता ॥ ७२९ ॥ प्रमाणकालो विशिष्टव्यवहारहेत्वहर्निशरूप इत्याह—

दुविहो पमाणकालो दिवसपमाणं च होइ राई अ । चउपोरिसिओ दिवसो राती चउपोरिसी चेव ॥ ७३० ॥

दिवसप्रमाणं च भवति रात्रिश्च, ततश्च प्रमाणमेव कालः प्रमाणकालः ॥ ७३० ॥ वर्णकालस्वरूपमाह—

पंचण्हं वण्णाणं जो खलु वण्णेण कालओ वण्णो । सो होइ वण्णकालो वण्णिज्जइ जो व जं कालं ॥ ७३१ ॥

सादीसपज्जवसिओ चउभंगविभागभावणा एत्थं। ओदइयादीयाणं तं जाणसु भावकालं तु ॥ ७३२ ॥

• वर्णेन छायया कालको वर्णः, वर्णश्चासौ कालश्च वर्णकालः, वर्ण्यते–प्ररूप्यते यो वा कश्चित्पदार्थो यत्कालं स वर्णकालः, वर्णप्रधानः कालो वर्णकालः ॥ ७३१ ॥ भावानामौदयिकादीनां स्थितिर्भावकाल इति जानीहि भावकालं, इयं पुनरत्र विभागभावना–'बीयं दुतियादीया भंगा वज्जेज्ज विइययं सेसे । भवमिच्छसम्मचरणे दिट्ठीनाणेतराणुभवजिए' ॥ १ ॥ औदयिकचतुर्भङ्ग्यां द्वितीयभङ्गशून्यानां शेषभङ्गानामयं विषयः–नारकादीनां नारकादिभव औदयिकः सादिः सपर्यवसानः, मिथ्यात्वादयो भव्यानामोदयिकोऽनादिः सपर्यवसानः, स एवाऽभव्यानां चरमभङ्गे । औपशमिकचतुर्भङ्ग्यां द्व्यादयः शून्या एव, आद्यभङ्गस्तु औपशमिकसम्यक्त्वादयः, औपशमिको भावः सादिः सपर्यवसानः । क्षायिकचतुर्भङ्ग्यां तु त्र्यादयः शून्य एव, क्षायिकं चारित्रं दानादिलब्धिपञ्चकं च, क्षायिको भावः सादिः सपर्यवसानः क्षायिकज्ञानदर्शने तु सादिसपर्यवसाने । क्षायोपशमिकचतुर्भङ्ग्यां द्वितीयभङ्गः शून्यः, चत्वारि ज्ञानानि क्षायोपशमिकभावः सादिः सपर्यवसानः, मत्यज्ञानश्रुताज्ञाने भव्यानामनादिसपर्यवसानः, एत एवाऽभव्यानां चरमभङ्गे । पारिणामिकचतुर्भङ्ग्यां द्वितीय[भङ्ग]शून्यः, पुद्गलकाये द्व्यणुकादिः पारिणामिको भावः सादिः सपर्यवसानः, भव्यत्वं भव्यानामनादिः सपर्यवसानः, जीवत्वं पुनश्चरमभङ्गे ॥ ७३२ ॥ आह–

एत्थं पुण अहिगारो पमाणकालेण होइ नायव्वो । खेत्तंमि कंमि काले विभासियं जिणवरिंदेणं ? ॥ ७३३ ॥

द्वारगाथायां 'पगयं तु भावेणं' ति इत्युक्तं, साम्प्रतमत्र पुनरधिकारः प्रमाणकालेन इत्युच्यमानं कथं न विरुध्यते ?, उच्यते, क्षायिकभावकाले भगवता प्रमाणकाले च पूर्वाह्णे सामायिकं भाषितमित्यविरोधः ॥ ७३३ ॥ व्याख्यातं कालद्वारं, अत्र यत्र क्षेत्रे भाषितं सामायिकं तदजानन् प्रमाणकालस्य चानेकरूपत्वाद्विशेषमजानन् गाथापश्चार्द्धमाह नोदकः—'खेत्तंमी'-त्यादि—प्रश्नोत्तरमाह—

वइसाहसुद्धएक्कारसीए पुव्वण्हदेसकालंमि । महसेणवणुज्जाणे अणंतरं परंपरं सेसं ॥ ७३४ ॥

पूर्वाह्णदेशकाले प्रथमपौरुष्यां महसेनवनोद्याने क्षेत्रेऽनन्तरनिर्गमः सामायिकस्य, शेषं क्षेत्रजातमधिकृत्य परम्परनिर्गमस्तस्य, गतं क्षेत्रद्वारं ॥ ७३४ ॥ इह च क्षेत्रकालपुरुषद्रव्यद्वाराणां निर्गमाङ्गता व्याख्यातैव, ततश्च निर्गमद्वारव्याचिख्यासयाऽऽह—'नामं ठवणा दविए खित्ते काले तहेव भावे अ । एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ'त्ति येयं गाथोपन्यस्ता अस्या एव भावनिर्गममाह—

खइयंमि वट्टमाणस्स निग्गयं भगवओ जिणिंदस्स । भावे खओवसमियंमि वट्टमाणेहिं तं गहियं ॥ ७३५ ॥

भावे क्षायोपशमिके वर्त्तमाने 'तत्' सामायिकमन्यच्च श्रुतं गृहीतं गणेशादिभिः ॥ ७३५ ॥ पुरुषद्वारमाह—

दव्वाभिलावचिंधे वेए धम्मत्थभोगभावे य । भावपुरिसो उ जीवो भावे पगयं तु भावेणं ॥ ७३६ ॥

द्रव्यपुरुष आगमनोआगमज्ञशरीरादिभेदभिन्नः, अभिलापपुरुषः पुल्लिङ्गाभिधानं पुरुष इति, घटपट इति वा, चिह्नपुरुषस्त्वपुरुषोऽपि पुरुषचिह्नोपलक्षितो यथा नपुंसकं श्मश्रुचिह्नमित्यादि, त्रिष्वपि लिङ्गेषु तृणज्वालोपमवेदानुभवकाले वेद-

पुरुषः, धर्मार्जनव्यापारपरः साधुर्धर्मपुरुषः, अर्थार्जनपरस्त्वर्थपुरुषः, भोगपुरुषः सम्प्राप्तसर्वविषयसुखभोगोपभोगसमर्थः, भावपुरुषश्च, चशब्दो नामाद्यनुक्तभेदसमुच्चयार्थः । भावे-भावद्वारे, प्रकृतं भावेन-भावपुरुषेण-शुद्धेन जीवेन तीर्थकृता इत्यर्थः, ततो वेदपुरुषेण च गणधरेण, अयमर्थः-अर्थतस्तीर्थकरान्निर्गतं, सूत्रतो गणधरेभ्यः ॥ ७३६ ॥ कारणमाह-

**णिक्खेवो कारणंमी चउव्विहो दुविह होइ दव्वंमि । तद्दवमण्णदव्वे अहवावि णिमित्तनेमित्ती ॥ ७३७ ॥**

करोतीति कारणं, कार्यं निर्वर्त्तयतीत्यर्थः, तस्मिन्कारणे चतुर्विधो नामादिः, नामस्थापने सुज्ञाने, द्रव्यकारणं व्यतिरिक्तं द्विधा, यत आह-द्रव्ये द्विधा निक्षेपः, तद्द्रव्यमिति तस्यैव पटादेर्द्रव्यं तद्द्रव्यं-तन्त्वादि, तदेव कारणमिति द्रष्टव्यं, तद्विपरीतं वेमाद्यन्यद्रव्यकारणं, अथवा अन्यथा द्विविधत्वं-निमित्तं नैमित्तं, अपितोऽन्यथाऽपि कारणनानातेति, तां वक्ष्ये । तत्र पटस्य निमित्तं तन्तवस्त एव कारणं, तद्व्यतिरेकेण पटानुत्पत्तेः, यथा च तन्तुभिर्विना न स्यात्पटः तथा तद्गताताना-दिचेष्टाव्यतिरेकेणापि न स्यादेव, तस्याश्च चेष्टाया वेमादि कारणं, अतो निमित्तस्येदं नैमित्तं( त्तिकं ) ॥ ७३७ ॥

**समवाइ असमवाई छव्विह कत्ता य कम्म करणं च । तत्तो य संपयाणापयाण तह संनिहाणे य ॥ ७३८ ॥**

समवायः-संश्लेषः स येषां विद्यते ते समवायिनः-तन्तवो यस्मात्तेषु पटः [ समवैति ], समवायिनश्च ते कारणं च समवायिकारणं, तन्तुसंयोगाः कारणद्रव्यान्तरधर्मत्वात्पटाख्यकार्यद्रव्यान्तरस्य दूरवर्त्तित्वात् असमवायिनः त एव कारणं तत्तथा, एवमर्थाभेदेऽपि अनेकधा कारणद्वयोपन्यासः सञ्ज्ञाभेदेन तन्त्रान्तरीयाभ्युपगमप्रदर्शनार्थं कृतः । अथवा षड्विधं कारणं, करोतीति व्युत्पत्तेः, स्वेन व्यापारेण कार्ये यदुपयुज्यते तत्कारणं, तथाहि-यो घटादिकार्यं करोति स कुलालादिः कर्त्ता, कार्यनिर्वर्त्तन-

क्रियाविषयत्वात् घटादि कर्म्म कारणं, तथा घटादि (मृत्पिण्डादि) कारणं, यस्मै च सम्यक् संस्कृत्य कार्यस्य .मृत्पिण्डादि (सत्कृत्य प्रयत्नेन) दीयते तत्सम्प्रदानकारणं, यतोऽपादीयते गृह्यते मृत्पिण्डादि तद्भूम्यादि अपादानकारणं, यत्र निधाय कार्यं क्रियते तदाधारभूतचक्रादि सन्निधानकारणं, यतः कुलालः क्रियाविषयता मृत्पिण्डदानयोग्यपात्रं भूमिश्चक्रं चेति पोढा कारणं विना न घटकार्यस्य सिद्धिः ॥ ७३८ ॥ भावकारणमाह–

दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं। संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥ ७३९ ॥

त्रिविधं चेति चतुर्विधाद्यनेक(मुक्त)कारणभेदसमुच्चयार्थः ॥ ७३९ ॥ यदुक्तं–'संसारस्यैकविध' मित्यादि, तमाह–

अस्संजमो य एक्को अण्णाणं अविरई य दुविहं तु। अण्णाणं मिच्छत्तं च अविरती चेव तिविहं तु ॥ ७४० ॥

प्रशस्तमाह–

होइ पसत्थं मोक्खस्स कारणं एगदुविहतिविहं वा। तं चेव य विवरीयं अहिगारो पसत्थएणेत्थं ॥ ७४१ ॥

अत्र सामायिकान्वाख्याने, मोक्षाङ्गत्वादस्य, प्रशस्तभावरूपं चेदं, कारणं च मोक्षस्येत्यधिकारभावना ॥ ७४१ ॥

इत्थं कारणद्वारेऽधिकारं प्रदर्श्य पुनः कारणद्वारसङ्गतमेव वक्तव्यताशेषमाह–

तित्थयरो किं कारण भासइ सामाइयं तु अज्झयणं ?। तित्थयरणामगोत्तं कम्मं मे वेइयव्वंति ॥ ७४२ ॥

तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं। बज्झइ तं तु भगवओ तइयभवोसक्कइत्ताणं ॥ ७४३ ॥

णियमा मणुयगईए इत्थी पुरिसेयरोव्व सुहलेसो। आसेवियबहुलेहिं वीसाए अण्णयरएहिं ॥ ७४४ ॥

भावकारणं तद्वक्तव्यताशेषं च नि० गा० ७३९-७४४

इत्थं तीर्थकृतः सामायिकभाषणे कारणमुक्त्वा गणभृतां तच्छ्रवणकारणमाह–

गोयमाई सामाइयं तु किंकारणं निसामिंति ?। णाणस्स तं तु सुंदरमंगुलभावाण उवलद्धी ॥ ७४५ ॥

चतुर्थ्यर्थे षष्ठी, ततश्च ज्ञानाय, तच्च ज्ञानं सुन्दरमङ्गुलभावानां–शुभेतरपदार्थानामुपलब्धये ॥ ७४५ ॥

होइ पवित्तिनिवित्ती संजमतवपावकम्मअग्गहणं। कम्मविवेगो य तहा कारणमसरीरया चेव ॥ ७४६ ॥

शुभेतरभावपरिज्ञानाद् भवतः शुभाशुभपदार्थप्रवृत्तिनिवृत्ती, ते च संयमतपसोः कारणं, तयोश्च संयमतपसोः पापकर्माग्रहणं कर्मविवेकश्च, कारणं यथासङ्ख्यं, कर्मविवेकस्य प्रयोजनमशरीरतैव ॥ ७४६ ॥ अविवक्षितमर्थमुक्तानुवादेनाह–

कम्मविवेगो असरीरया य असरीरया अणाबाहा। होअणबाहनिमित्तं अवेयणमणाउलो निरुओ ॥ ७४७ ॥

नीरुयत्ताए अयलो अयलत्ताए य सासओ होइ। सासयभावमुवगओ अव्वाबाहं सुहं लहइ ॥ ७४८ ॥

अशरीरताऽनाबाधायाः कारणं भवति, 'अनाबाधानिमित्तं' अनाबाधाकार्यं, अवेदनो वेदनारहितो जीव इति गम्यते, अनाकुलोऽविह्वलो नीरुक् ॥ ७४७–७४८ ॥ प्रत्ययद्वारमाह–

पच्चयणिक्खेवो खलु दव्वंमी तत्तमासगाइओ। भावंमि ओहिमाई तिविहो पगयं तु भावेणं ॥ ७४९ ॥

खलुशब्दोऽनन्तरोक्तकारणनिक्षेपसाम्यप्रदर्शनार्थः, तप्तमापकादिः, द्रव्यं च तत्प्रत्याय्यप्रतीतिहेतुत्वात् प्रत्ययश्च द्रव्यप्रत्ययस्तप्तमापकादिरेव, तज्ज्ञो वा प्रत्याय्यपुरुषप्रत्ययः, अवध्यादिशब्दान्मनःपर्यायकेवलपरिग्रहः ॥ ७४९ ॥

केवलणाणित्ति अहं अरहा सामाइयं परिकहेई। तेसिंपि पच्चओ खलु सव्वण्णू तो निसामिंति ॥ ७५० ॥

तेषामपि श्रोतॄणामपि हृद्गताशेषसंशयपरिच्छित्त्या प्रत्ययोऽवबोधः सर्वज्ञ इत्येवम्भूतः स्यात् ॥ ७५० ॥ लक्षणद्वारमाह—
नामं ठवणा दविए सरिसे सामण्णलक्खणागारे । गइरागइ णाणत्ती निमित्त उप्पाय विगमे य ॥ ७५१ ॥

लक्ष्यते अनेनेति लक्षणं-पदार्थस्वरूपं, तत्र नामलक्षणं लक्षणमितीयं वर्णानुपूर्वी, स्थापनालक्षणं लकारादिवर्णानामाकारविशेषः, द्रव्यलक्षणं ज्ञशरीराद्यतिरिक्तं यद्यस्य द्रव्यस्यान्यतो व्यवच्छेदकं स्वरूपं, यथा गत्यादि धर्मास्तिकायादीनां । इदमेव च किञ्चिन्मात्रविशेषात्साहश्यादिलक्षणभेदतो निरूप्यते, तत्र साहश्यलक्षणमिहत्यघटसहशः पाटलिपुत्रको घटः, सामान्यलक्षणं यथा सिद्धः (द्धत्वं) सिद्धानां सद्द्रव्यजीवमुक्तत्वादिधर्मैः समानः, आकारो—बाह्यचेष्टारूपः, स एवान्तराकूतगमकत्वात् लक्षणं । गत्यागतिलक्षणं द्वयोर्द्वयोः पदयोर्विशेषणविशेष्यतया अनुकूलगमनं गतिः प्रत्यावृत्त्या प्रातिकूल्येनागमनमागतिः, ताभ्यां ते एव वा लक्षणं गत्यागतिलक्षणं । तच्चतुर्द्धा—तत्र पूर्वपदव्याहतोदाहरणं—'जीवे णं भंते ! नेरइए ? नेरइए जीवे ?, गोअमा ! जीवे सिअ नेरइए सिअ अनेरइए, नेरइए पुण निअमा जीवे' १, उत्तरपदव्याहतं—'जीवइ भंते ! जीवे जीवे जीवइ ?, गोअमा ! जीवइ ताव निअमा जीवे, जीवे पुण सिअ जीवइ सिअ नो जीवइ सिद्धानां जीवनाभावात् २, उभयपदव्याहतं—'भवसिद्धिए णं भंते ! नेरइए !, नेरइए भवसिद्धिए ?, गोयमा ! भवसिद्धिए सिय नेरइए सिअ अनेरइए, नेरइएवि सिअ भवसिद्धिए सिअ अभवसिद्धिए ३, उभयपदाव्याहतं—'जीवे भंते ! जीवे जीवे जीवे ?, गोअमा ! जीवे निअमा जीवे जीवेऽवि निअमा जीवे' ४, उपयोगो नियमाज्जीवः जीवोऽपि नियमादुपयोग इति भावना । तथा नानाभावो नानाता—भिन्नता, सा च लक्षणं, सा तु चतुर्द्धा द्रव्यादिभेदेन, तत्र द्रव्यतो नानाता द्विधा—तत्र तद्द्रव्यनानाता परमाणूनां

परस्परतो भिन्नता, अन्यद्रव्यनानाता परमाणोर्द्व्यणुकादिभिन्नता, एवमेकादिप्रदेशावगाढैकसमयादिस्थित्येकादिगुणशुक्लानां तदन्यक्षेत्रादिना तदतन्नानाता वाच्या, निमित्तमेव लक्षणं, तच्चाष्टधा—भोमादि, नानुत्पन्नं वस्तु लक्ष्यतेऽत उत्पादोऽपि वस्तु-लक्षणं, विगमश्च विनाशश्च वस्तुलक्षणं तमन्तरेणोत्पादाभावात् ॥ ७५१ ॥

वीरियभावे य तहा लक्खणमेयं समासओ भणियं । अहवावि भावलक्खण चउव्विहं सद्दहणमाई ॥ ७५२ ॥

वीर्य—सामर्थ्यं यद्यस्य वस्तुनस्तदेव लक्षणं भावलक्षणं, यथा उदयलक्षण औदयिकः, उपशमलक्षण औपशमिक इत्यादि, तत्र सामायिकस्य जीवगुणत्वात् क्षयोपशमोपशमक्षयस्वभावत्वाद्भावलक्षणता ॥ ७५२ ॥

सद्दहण जाणणा खलु विरती मीसा य लक्खणं कहए । तेऽवि णिसामिंति तहा चउलक्खणसंजुयं चेव ॥ ७५३ ॥

सामायिकं चतुर्विधं स्यात्, अस्य यथायोगं लक्षणं श्रद्धानं लक्षणं सम्यक्त्वसामायिकस्य, विरतिश्चारित्रसामायिकस्य, मिश्रा—विरताविरतिः सा च चारित्राचारित्रसामायिकस्य लक्षणं, कथयतीत्यनेन शास्त्रपारतन्त्र्यमाह, तेऽपि गणधरादयोऽपि 'निशामयन्ति' शृण्वन्ति ॥ ७५३ ॥ नयद्वारमाह—

णेगमसंगहववहारउज्जुसुए चेव होइ बोद्धव्वे । सद्दे य समभिरूढे एवंभूए य मूलणया ॥ ७५४ ॥

अवयवार्थं त्वाह—

णेगेहिं माणेहिं भिणइत्ती णेगमस्स णेरुत्ती । सेसाणंपि णयाणं लक्खणमिणमो सुणेह वोच्छं ॥ ७५५ ॥

नैकैर्मानैः—महासत्तासामान्यविशेषविज्ञानैर्मिमीते मिनोतीति वा नैगमस्य निरुक्तिः ॥ ७५५ ॥

संगहियपिंडियत्थं संगहवयणं समासओ बिंति । वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसुं ॥ ७५६ ॥

आभिमुख्येन गृहीतः-उपात्तः सङ्गृहीतः पिण्डितः-एकजातिमापन्नोऽप्यर्थो विषयो यस्य तत्सङ्गृहीतपिण्डितार्थं सङ्ग्रहवचनं । व्रजति निश्चयः-सामान्यं विगतो निश्चयो विनिश्चयः-निःसामान्यभावस्तदर्थं-तन्निमित्तं, सामान्याभावायेत्यर्थः । व्यवहारो नयः सर्वद्रव्यविषये ॥ ७५६ ॥

पच्चुप्पण्णग्गाही उज्जुसुओ नयविही मुणेयव्वो । इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो ॥ ७५७ ॥
वत्थूओ संकमणं होइ अवत्थू णए समभिरूढे । वंजणमत्थतदुभयं एवंभूओ विसेसेइ ॥ ७५८ ॥

प्रत्युत्पन्नं वर्त्तमानं तद्ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही, ऋजुसूत्रो नयविधिः, अयं हि वर्त्तमानं स्वलिङ्गवचननामादिभेदभिन्नमप्येकं वस्तु प्रतिपद्यते । तत्र लिङ्गभिन्नं तटस्तटी तटं, वचनभिन्नमापो जलं, नामादिभिन्नं नामस्थापनाद्रव्यभावाः, इच्छति विशेषिततरं नाम स्थापनाद्रव्यविरहेण समानलिङ्गवचनपर्यायध्वनिवाच्यत्वेन च प्रत्युत्पन्नं नयः शब्दः, तथाहि-अयं नामस्थापनाद्रव्यकुम्भा न सन्त्येवेति मन्यते, न च भिन्नलिङ्गवचनमेकं स्त्रीपुरुषवत् कुटवृक्षवत् , अतो घटः कुटः कुम्भ इति स्वपर्यायध्वनिवाच्यमेवैकं ॥ ७५७ ॥ वस्तुनः सङ्क्रमणं भवत्यवस्तु नये समभिरूढे, अयमर्थः-घटनात् घटः विशिष्टचेष्टावानर्थो घटः, तथा 'कुट कौटिल्ये' कुटनात्कुटः, तथा 'उभ उम्भ पूरणे' उम्भनात् उम्भः कुत्सितपूरणादित्यर्थः । ततश्च यदा घटार्थे कुटादिशब्दः प्रयुज्यते तदा वस्तुनः कुटादेस्तत्र सङ्क्रान्तिः कृता स्यात्, तथा च [सति] सर्वधर्माणां नियतस्वभावत्वादन्यत्र सङ्क्रान्त्या उभयस्वभावापगमतोऽवस्तुता । व्यञ्जनं-शब्दोऽर्थस्तु-तद्गोचरस्तच्च तदुभयं च तदुभयं-शब्दार्थलक्षणं

एवम्भूतो नयो विशेषयति, अयमर्थः–शब्दमर्थेन विशेषयति अर्थं च शब्देन, 'घट चेष्टाया'मित्यत्र चेष्टायां (चेष्टया) घटशब्दं विशेषयति, घटशब्देनापि चेष्टां, न स्थानभरणक्रियां ॥ ७५८ ॥ प्रभेदसङ्ख्यामाह–

एकेको य सयविहो सत्त णयसया हवंति एमेव । अण्णोवि य आएसो पंचेव सया नयाणं तु ॥ ७५९ ॥

पञ्च शतानि शब्दादीनामेकत्वात्, अपितः षट् चत्वारि द्वे वा शते, तत्र षट्शतानि नैगमस्य सङ्ग्रहव्यवहारद्वये प्रवेशादेकैकस्य च शतभेदत्वात्, तथा चत्वारि शतानि सङ्ग्रहव्यवहारऋजुसूत्रशब्दाद्येकैकनयानां शतविधत्वात् । द्वे शते तु नैगमादीनां ऋजुसूत्रपर्यन्तानां [द्रव्यास्तिकत्वात्, शब्दादीनां च] पर्यायास्तिकत्वात् ॥ ७५९ ॥

एएहिं दिट्ठिवाए परूवणा सुत्तअत्थकहणा य । इह पुण अणब्भुवगमो अहिगारो तिहि उ ओसन्नं ॥ ७६० ॥

एभिर्नयैः प्रभेदैः प्ररूपणा सर्ववस्तूनां क्रियत इति शेषः, सूत्राऽर्थकथना च, सूत्रोपनिबद्धस्यैव सूत्रार्थत्वेन विवक्षितत्वात्, तद्व्यतिरेकेणापि वस्तुसम्भवात्, 'इह पुनः' कालिकश्रुते 'अनभ्युपगमो' नावश्यं नयैर्व्याख्या कार्या, तत्राप्यधिकारस्त्रिभिराद्यैः 'उत्सन्नं' प्रायसः ॥ ७६० ॥ आह–इह यद्यनभ्युपगमस्तर्हि त्रिनयानुज्ञा किमर्थं?, उच्यते–

णत्थि णएहि विहूणं सुत्तं अत्थो य जिणमए किंचि । आसज्ज उ सोयारं णए णयविसारओ बूया ॥ ७६१ ॥

नास्ति नयैर्विहीनं सूत्रमर्थो वा जिनमते किञ्चित् अतस्त्रिनयपरिग्रहः, अशेषनयप्रतिषेधस्तु आचार्यशिष्याणां विशिष्टबुद्ध्यभावापेक्ष्य । आह च–आश्रित्य पुनः श्रोतारं नयान्नयविशारदो–गुरुर्ब्रूयात् ॥ ७६१ ॥ समवतारे द्वारे क्व? एतेषां समवतारः? वाऽनवतार इत्याह–

नयप्रभेद-सङ्ख्या
नि० गा० ७५९-७६१

मूढनइयं सुयं कालियं तु ण णया समोयरंति इहं । अपुहुत्ते समोयारो नत्थि पुहुत्ते समोयारो ॥ ७६२ ॥

मूढनयमेव मूढनयिकं श्रुतं, 'कालिकं तु न नयाः समवतरन्ति' अत्र प्रतिपदं न भण्यन्त इत्यर्थः। अपृथक्त्वं चरणधर्मसङ्ख्याद्रव्यानुयोगानां प्रतिसूत्रमविभागेन वर्त्तनं, तस्मिन्नयानां समवतारः, नास्ति पृथक्त्वे समवतारः, पुरुषविशेषापेक्षमवतार्यते ॥ ७६२ ॥ आह—कियन्तं कालमपृथक्त्वमासीत्?, कुतो वा समारभ्य पृथक्त्वं जातं?, उच्यते—

जावंति अज्जवइरा अपुहुत्तं कालियाणुओगस्स । तेणारेण पुहुत्तं कालियसुय दिट्ठिवाए य ॥ ७६३ ॥

यावदार्यवैरास्तावदपृथक्त्वं कालिकानुयोगस्यासीत् कालिकग्रहणं प्राधान्यख्यापनार्थं अन्यथा सर्वानुयोगस्यैवाऽपृथक्त्वमासीत् तत आरतः पृथक्त्वं कालिकश्रुते दृष्टिवादे च ॥ ७६३ ॥ अथ क एते आर्यवैराः?, तत्र स्तवद्वारेण तेषामुत्पत्तिमाह—

तुंबवणसंनिवेसाओ निग्गयं पिउसगासमल्लीणं । छम्मासियं छसु जयं माऊयसमन्नियं वंदे ॥ ७६४ ॥

पितुः सकाशमल्लीनं (मालीनं) षाण्मासिकं षट्सु जीवनिकायेषु यतं—प्रयत्नवन्तं मात्रा समन्वितं वन्दे ॥ ७६४ ॥

जो गुज्झएहिं बालो णिमंतिओ भोयणेण वासंते । णेच्छइ विणीयविणओ तं वइररिसिं णमंसामि ॥ ७६५ ॥

गुह्यकैर्देवैः वर्षति सति, पर्जन्ये इति गम्यते ॥ ७६५ ॥

उज्जेणीए जो जंभगेहिं आणक्खिऊण थुयमहिओ । अक्खीणमहाणसियं सीहगिरिपसंसियं वंदे ॥ ७६६ ॥

'आणक्खिऊण'त्ति परीक्ष्य 'स्तुतमहितः' तत्र स्तुतो वाक्स्तवेन, महितो विद्यादानेन ॥ ७६६ ॥

जस्स अणुन्नाए वायगत्तणे दसपुरंमि नयरंमि । देवेहिं कया महिमा पयाणुसारिं नमंसामि ॥ ७६७ ॥

समवतारद्वारं अनुयोगापृथक्त्वपृथक्त्वं आर्यवज्रोत्पत्तिश्च नि० गा० ७६२-७६७

अनुज्ञाते 'वाचकत्वे' आचार्यत्वे देवैर्जृम्भकैः ॥ ७६७ ॥

जो कन्नाइ धणेण य निमंतिओ जुव्वणंमि गिहवइणा । नयरंमि कुसुमनामे तं वइररिसिं नमंसामि ॥ ७६८ ॥

'गृहपतिना' धनेन 'कुसुमनाम्नि' पाटलिपुत्रे इत्यर्थः ॥ ७६८ ॥

जेणुद्धरिया विज्जा आगासगमा महापरिन्नाओ । वंदामि अज्जवइरं अपच्छिमो जो सुअहराणं ॥ ७६९ ॥

अन्येभ्योऽधिकृतविद्यायाश्चानिषेधख्यापनाय प्रदाननिराचिकीर्षया तदनुवादस्तावदित्थमाह–

भणइ अ आहिंडिज्जा जंबुद्दीवं इमाइ विज्जाए । गंतुं च माणुसनगं विज्जाए एस मे विसओ ॥ ७७० ॥

आहिण्डेत जम्बूद्वीपमनया विद्यया, तथा गत्वा च 'मानुषनगं' तिष्ठेदिति शेषः । विद्याया एष मे 'विषयो'गोचरः ॥७७०॥

भणइ अ धारेअव्वा न हु दायव्वा इमा मए विज्जा । अप्पिड्ढिया उ मणुआ होहिंति अओ परं अन्ने ॥ ७७१ ॥

धारयितव्या प्रवचनोपकाराय, अल्पर्द्धय एव ॥ ७७१ ॥

माहेसरीउ सेसा पुरिअं नीआ हुआसणगिहाओ । गयणयलमइवइत्ता वइरेण महाणुभागेण ॥ ७७२ ॥

माहेश्वर्या नगर्याः, 'सेस'त्ति पुष्पसमुदायलक्षणा, सा पुरिकां नगरीं नीता हुताशनगृहाद्–व्यन्तरदेवकुलसमन्वितोद्यानात्, गगनतलमतिव्यतीत्य–अतीवोल्लङ्घ्य ॥ ७७२ ॥

अपुहुत्ते अणुओगो चत्तारि दुवार भासई एगो । पुहत्ताणुओगकरणे ते अत्थ तओ उ वुच्छिन्ना ॥ ७७३ ॥

अपृथक्त्वे सति अनुयोगश्चत्वारि द्वाराणि-चरणधर्मकालद्रव्याख्यानि भाषते एकः, तेऽर्थाश्चरणादयस्तत एव पृथक्त्वा-

नुयोगकरणाद्व्यवच्छिन्नाः ॥ ७७३ ॥ येन पृथक्त्वं कृतं तमाह–

देविंदवंदिएहिं महाणुभागेहिं रक्खिअज्जेहिं। जुगमासज्ज विभत्तो अणुओगो तो कओ चउहा ॥ ७७४ ॥

युगं कालस्वरूपमासाद्य प्रवचनहिताय 'विभक्तः' पृथक् पृथक् व्यवस्थापितः ॥ ७७४ ॥ आर्यरक्षितप्रसूतिमाह–

माया य रुद्दसोमा पिआ य नामेण सोमदेवुत्ति । भाया य फग्गुरक्खिअ तोसलिपुत्ता य आयरिया ॥ ७७५ ॥
निज्जवण भद्दगुत्ते वीसुं पढणं च तस्स पुव्वगयं । पव्वाविओ य भाया रक्खिअखमणेहिं जणओ अ ॥ ७७६ ॥

तोसलिपुत्राश्चाचार्याः येषां पार्श्वे आर्यरक्षितः प्रव्रज्य एकादशाङ्गानि दृष्टिवादं च कियन्तं पपाठ । ततः स विद्यमानाशेषदृष्टिवादपाठाय श्रीवज्रान् व्रजन् उज्जयिनीस्थभद्रगुप्ताचार्याणां निर्यामणमकार्षीत् । ततस्तद्वचसा विश्वगुपाश्रयस्थस्य पठनं जातं, वज्रान्ते पूर्वगतं गृहीतं तेन ॥ ७७६ ॥ यदुक्तं–'अनुयोगस्ततः कृतश्चतुर्द्धा, तत्रानुयोगचातुर्विध्यमाह मूलभाष्यकारः–

कालियसुयं च इसिभासियाइं तइओ य सूरपण्णत्ती। सव्वो य दिट्ठिवाओ चउत्थओ होइ अणुओगो ॥१२४॥मू.भा.

'तृतीयश्च' कालानुयोगः स च सूर्यप्रज्ञप्ती (प्तिरि) त्युपलक्षणात् [ चन्द्रप्रज्ञप्त्यादि ], कालिकश्रुतमेकादशाङ्गरूपं चरणकरणानुयोगः, ऋषिभाषितानि उत्तराध्ययनादीनि धर्मकथानुयोग इति गम्यते, चतुर्थो भवत्यनुयोगो द्रव्यानुयोगः ॥ १२४ ॥ ऋषिभाषितानि धर्मकथानुयोग इत्युक्तं ततश्च महाकल्पश्रुतादीनामपि ऋषिभाषितत्वात् दृष्टिवादादुद्धृत्य तेषां प्रतिपादितत्वाद् धर्मकथानुयोगत्वप्रसङ्ग इत्यतस्तदपोहमाह–

जं च महाकप्पसुयं जाणि य सेसाणि छेयसुत्ताणि । चरणकरणाणुओगोत्ति कालियत्थे उवगयाइं ॥ ७७७ ॥

चरणानुयोग इति कृत्वा कालिकार्थे उपगतानि ॥ ७७७ ॥ श्रीआर्यरक्षितेषु दिवं गतेषु तन्मातुलो गोष्ठामाहिलः कर्मविचारे अभिनिवेशेनान्यथा मन्यमानः प्ररूपयंश्च निह्नवो जातः, अनेन प्रस्तावेन क एते निह्नवा इत्याशङ्कापनोदाय तानाह–

बहुरय पएस अव्वत्तसमुच्छादुगतिगअबद्धिया चेव । सत्तेए णिण्हगा खलु तित्थंमि उ वद्धमाणस्स ॥ ७७८ ॥

बहुषु समयेषु रता बहुरता दीर्घकालद्रव्यप्रसूतिप्ररूपिणः । प्रदेशा इति चरमप्रदेशजीवप्ररूपिणः । अव्यक्ताः संयताद्यवगमे सन्दिग्धबुद्धयः । सामुच्छेदाः क्षणक्षयिभावप्ररूपकाः । उत्तरपदलोपात् द्वैक्रियाः कालद्वयाभेदेन क्रियाद्वयानुभवप्ररूपिणः । त्रैराशिका राशित्रयख्यापकाः । अबद्धिकाः स्पृष्टकर्मविपाकप्ररूपकाः । सप्तैते निह्नवाः, खलुशब्दादन्ये तु द्रव्यलिङ्गतोऽपि भिन्ना बोटिकाख्याः ॥ ७७८ ॥ एते येभ्यः समुत्पन्नास्तानाह–

बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ । अव्वत्ताऽऽसाढाओ सामुच्छेयाऽऽसमित्ताओ ॥ ७७९ ॥
गंगाओ दोकिरिया छलुगा तेरासियाण उप्पत्ती । थेराय गोट्ठमाहिल पुट्ठमबद्धं परूविंति ॥ ७८० ॥

जीवप्रदेशाश्च तिष्यगुप्तात्समुत्पन्नाः ॥ ७७९ ॥ षडुलूकात् त्रैराशिकानामुत्पत्तिः, स्थाविराश्च गोष्ठामाहिलाः स्पृष्टमबद्धं प्ररूपयन्ति कर्मेति गम्यते, ततश्चाऽबद्धिका गोष्ठामाहिलात्सञ्जाताः ॥ ७८० ॥ एतदुत्पत्तिस्थानान्याह–

सावत्थी उसभपुरं सेयविया मिहिल उल्लुगातीरं । पुरिमंतरंजि दसपुर रहवीरपुरं च नगराइं ॥ ७८१ ॥

ऋषभपुरं–राजगृहं, नगराणि निह्नवानां यथायोगं प्रभवस्थानानि । वक्ष्यमाणभिन्नद्रव्यलिङ्गमिथ्यादृष्टिबोटिकप्रभवस्थानरथवीरपुरोपन्यासो लाघवार्थः ॥ ७८१ ॥ वीरस्योत्पन्नकेवलस्य परिनिर्वृतस्य च कः कियता कालेन निह्नवः समुत्पन्न इत्याह–

चोद्दस सोलस वासा चोद्दसवीसुत्तरा य दोण्णि सया.। अट्ठावीसा य दुवे पंचेव सया उ चोयाला ॥ ७८२ ॥

चतुर्दशाधिके द्वे शते, विंशत्युत्तरे च [ द्वे शते ] वर्षाणामिति गम्यते, अष्टाविंशत्यधिके च द्वे शते, पञ्चैव शतानि चतुश्चत्वारिंशत्या(शद)धिकानि ॥ ७८२ ॥

पंच सया चुलसीया छच्चेव सया णवोत्तरा होंति। णाणुपत्तीय दुवे उप्पण्णा णिव्वुए सेसा ॥ ७८३ ॥

ज्ञानोत्पत्तेरारभ्य चतुर्दश षोडश वर्षाणि यावदतिक्रान्तानि तावदत्रान्तरे द्वावाद्यावुत्पन्नौ, उत्पन्ना निर्वृते वीरे यथोक्तकाले चातिक्रान्ते शेषा अव्यक्तादयः। बोटिकप्रभवकालाभिधानं लाघवार्थमेव ॥ ७८३ ॥ सूचितमेवार्थं मूलभाष्यकृदाह–

चोद्दस वासाणि तया जिणेण उप्पाडियस्स णाणस्स। तो बहुरयाण दिट्ठी सावत्थीए समुप्पण्णा ॥१२५॥ (मू. भा.)

यथा उत्पन्नास्तथा दर्शयन् सङ्ग्रहगाथामाह–

जेट्ठा सुदंसण जमालिऽणोज्ज सावत्थितेंदुगुज्जाणे। पंचसया य सहस्सं ढंकेण जमालि मोत्तूणं ॥१२६॥ (मू. भा.)

ज्येष्ठा सुदर्शना अनोद्या ( अनवद्या ) इति जमालिगृहिण्या नामानि, श्रावस्त्यां तिन्दुकोद्याने जमालेरेषा दृष्टिरुत्पन्ना, तत्र पञ्चशतानि साधूनां सहस्रं च संयतीनां एतेषां यत्स्वयं न प्रतिबुद्धं तत् ढङ्केन प्रतिबोधितमिति वाक्यशेषः, जमालिं मुक्त्वा। अन्ये तु व्याचक्षते ज्येष्ठा महत्तरा सुदर्शनाख्या भगवतो भगिनी तस्या जमालिः पुत्रः तस्य अनोद्या ( अनवद्या ) नाम भगवत्पुत्री भार्या, शेषं पूर्ववत् ॥ १२६ ॥

सोलस वासाणि तया जिणेण उप्पाडियस्स णाणस्स। जीवपएसियदिट्ठी उसभपुरंमी समुप्पण्णा ॥१२७॥ (मू. भा.)

रायगिहे गुणसिलए वसु चोद्दसपुव्वि तीसगुत्ताओ। आमलकप्पा णयरी मित्तसिरि कूरपिंडाई ॥१२८॥ (मू. भा.)

राजगृहे गुणशीलके उद्याने वसुराचार्यश्चतुर्दशपूर्वी समवसृतः, तच्छिष्यात्तिष्यगुप्तादेषा दृष्टिरुत्पन्ना, स मिथ्यात्वाभिभूत आमलकल्पां नगरीं गतः तत्र मित्रश्रीश्रावकस्तेन कूरबुचकादि (कूरसित्थकादि) दृष्टान्तेन प्रतिबोधितः ॥ १२८ ॥

चोद्दा दो वाससया तइया सिद्धिं गयस्स वीरस्स। अव्वत्तयाण दिट्ठी सेयवियाए समुप्पन्ना ॥ १२९ ॥ (मू. भा.)
सेयवि पोलासाढे जोगे तद्दिवसहिययसूले य। सोहंमि णलिणिगुम्मे रायगिहे मुरिय बलभद्दे ॥१३०॥ (मू. भा.)

श्वेतव्यां पोलासे उद्याने आषाढाख्य आचार्यो योगे उत्पादिते सति तद्दिवस एव च हृदयशूले चोत्पन्ने मृत इति वाक्यशेषः, स च सौधर्मे नलिनीगुल्मे विमाने समुत्पद्यावधिना पूर्ववृत्तान्तं ज्ञात्वा शिष्याणां योगान् सारितवानिति वाक्यशेषः। स्वर्गते तस्मिन्नव्यक्तमतास्तच्छिष्या विहरन्तो राजगृहे मौर्ये बलभद्रो राजा तेन सम्बोधिता इति वाक्यशेषः ॥ १३० ॥

वीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स। सामुच्छेइयदिट्ठी मिहिलपुरीए समुप्पण्णा ॥१३१॥ (मू. भा.)
मिहिलाए लच्छिघरे महगिरिकोडिण्ण आसमित्ते य। णेउणियाणुप्पवाए रायगिहे खंडरक्खा य ॥१३२॥ (मू. भा.)

मिथिलायां लक्ष्मीगृहोद्याने महागिरेराचार्यस्य शिष्यः कोण्डिन्यस्तस्यौ। तस्य शिष्योऽश्वमित्रोऽनुप्रवादे पूर्वे नैपुणिकं वस्तु पठन् उत्पन्नक्षणक्षयमतिः, राजगृहे खण्डरक्षा नाम श्रमणोपासकास्ते च सुंक(शुल्क)पालास्तैः प्रतिबोधिताः ॥ १३२ ॥

अट्ठावीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स। दो किरियाणं दिट्ठी उल्लुगतीरे समुप्पण्णा ॥ १३३ ॥ (मू. भा.)
णइखेडजणव उल्लुग महगिरिधणगुत्त अज्जगंगे य। किरिया दो रायगिहे महातवो तीरमणिणाए ॥ १३४ ॥ (मू. भा.)

उल्लुका नाम नदी तयोपलक्षितो जनपदोऽपि तन्नामैव, तस्या नद्या एकस्मिंस्तीरे खेटस्थानं द्वितीये उल्लुकातीरं पुरं, तत्र महागिरेः शिष्यो धनगुप्तो नाम तस्यापि शिष्यो गङ्गो नामाचार्यः स तस्या नद्याः पूर्वतटे, आचार्यास्तस्या अपरतटे, स आचार्य-वन्दनाय व्रजन्नुल्लुकानदीमुत्तरन्नधः शीतं, उपर्यातपमनुभवन्नेकसमये क्रियाद्वयवेदनं प्ररूपितवान् । तद्वादमत्यजन् गुरु-निष्काशितो राजगृहे गतः । तद्बहिर्वैभारगिरेः पार्श्ववर्त्ती महातपस्तीरप्रभाख्यः पञ्चधनुःशतायामविस्तरजलाशयविशेषः । तत्र मणिनागो नाम नागः, तेन स्वचैत्येऽसौ वितथं प्ररूपयन् प्रतिबोधितः ॥ १३४ ॥

पंचसया चोयाला तइया सिद्धिं गयस्स वीरस्स । पुरिमंतरंजियाए तेरासियदिट्ठी उववण्णा ॥ १३५ ॥ (मू. भा.)

पुर्यन्तरञ्जिकायां ॥ १३५ ॥

पुरिमंतरंजि भूयगुह बलसिरि सिरिगुत्त रोहगुत्ते य । परिवायपोट्टसाले घोसणपडिसेहणा वाए ॥ १३६ ॥ (मू. भा.)

अन्तरञ्जिका पुरी, तत्र भूतगृहं नाम चैत्यं, श्रीगुप्ता आचार्याः स्थिताः, तत्र बलश्री राजा, तेषामाचार्याणां शिष्यो रोहगुप्तो अन्यग्रामस्थो वन्दितुमभ्येति, तत्र एकश्च परिव्राद् पोट्टशालाख्यः पटहेन शून्याः परप्रवादा इति घोषणामकारयत्, रोहगुप्तेन तस्य प्रतिषेधना कृता, वादे नोजीवस्थापनया जिग्ये ( तः ), पोट्टशालस्यैताः सप्त विद्या आसन् ॥ १३६ ॥

विच्छुय सप्पे मूसग मिई वराही य कायपोआई । एआहिं विज्जाहिं सो उ परिव्वायओ कुसलो ॥ १३७ ॥ (मू. भा.)

'कायपोआई' त्ति काकविद्या पोताकीविद्या च, पोताक्यः शकुन्तिकाः, वृश्चिकादीन्येतानि सप्त रूपाणि कृत्वा तत्प्रयुक्ता विद्या प्रतिवादिनमुपसर्गयन्ति ॥ १३७ ॥ रोहगुप्तस्य गुरुभिः प्रतिपक्षविद्या एता दत्ताः—

मोरी नउलि विराली वग्घी सीही उलूगि ओवाई । एयाओ विज्जाओ गेण्ह परिवायमहणीओ ॥ १३८ ॥ (मू. भा.)

उलूकी 'ओवाई' त्ति उवालय (ओलावय) प्रधाना, रजोहरणं चाभिमन्त्र्य गुरुभिर्दत्तं तेन गर्दभीविद्या तत्प्रयुक्ता विफलिता । वादिनि जिते गुरुभिरुक्तः—त्वं तत्र यात्वा उत्सूत्रं मया प्रज्ञप्तमिति कथय, सोऽभिनिवेशादनिच्छन् गुरुणा सह सभायां वादायोत्तस्थौ ॥ १३८ ॥ ततः—

सिरिगुत्तेणऽवि छलुगो छम्मासे कड्ढिऊण वायजिओ । आहरणकुत्तियावण चोयालसएण पुच्छाणं ॥१३९॥ (मू. भा.)

'छलुगो' त्ति षट्पदार्थप्ररूपणादुलूकगोत्रत्वात् (त्वाच्च) षडुलूकः षण्मासान् विकृष्यातिवाह्य वादे जितो गुरुभिः उदाहराणि परीक्षायै कुत्रिकापणे चतुश्चत्वारिंशदधिकशतपृच्छानां कारितानि, तत्र तेन रोहगुप्तेन षद् मूलपदार्था गृहीताः, तद्यथा—द्रव्य १ गुण २ कर्म ३ सामान्य ४ विशेष ५ समवायाः ६, तत्र द्रव्यं नवधा—भूम्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि, गुणाः सप्तदश रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगवियोगपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाख्याः, कर्म्म पञ्चधा—उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि, सामान्यं त्रिधा—त्रिपदार्थसत्करी सत्ता १ सामान्यं द्रव्यत्वादि २ सामान्यविशेषः पृथिवीत्वादि ३, विशेषा अन्त्याः [ अनन्त्याश्च ], इहप्रत्ययहेतुः समवायः, एते ३६ भेदाः, एकैकस्मिन् चत्वारो भङ्गाः, भूमिः १ अभूमिः २ नोभूमिः ३ नोअभूमिः ४, एवं सर्वत्र, सर्वे १४४, तत्र कुत्रिकापणे भूमिर्याचिता लब्धो लेष्टुः, अभूम्यां पानीयं, नोभूम्यां जलाद्येव तु नो राश्यन्तरं, नोऽभूम्यां लेष्टुरेव, एवं सर्वत्र, ततो निगृहीतः षडुलूकः गुरुणा तन्मूर्ध्नि खेलमल्लको भग्नः,

ततस्तेन भस्मोद्धूलितेन वैशेषिकं मतं प्रवर्त्तितं । *नयं० ॥ भूजलजलणानिलनहकालदिसाऽऽया मणो य दव्वाइं । भण्णंति नवेयाइं सत्तरस गुणा इमे अण्णे ॥ २ ॥ रूवरसगंधफासा संखापरिमाणमहपुहुत्तं च । संजोग विभागपराऽपरत्त बुद्धी सुहं दुक्खं ॥ ३ ॥ इच्छा दोस पयत्ता एत्तो कम्मं तयं च पंचविहं । उक्खेवणवक्खेवणपसारणाऽऽकुंचणं गमणं ॥ ४ ॥ सत्ता सामण्णं पिय सामण्णविसेसया विसेसो य । समवाओ य पयत्था छ छत्तीसप्पभेया य ॥ ५ ॥ पगईए अगारेण य नोगरोनिसेहओ सव्वे । गुणिआ ओयालसयं पुच्छाणं पुच्छिओ देवो ॥ ६ ॥ इक्कि° ॥ पुढवि त्ति देइ लेट्ठु देसो वि समाणजाइलिंगोत्ति । पुढवि त्ति सोऽपुढवीं देहित्ति देइ तोयाइं ॥ ८ ॥ जीवं० ॥ जीव०'' ॥ १३९ ॥ अमुमेवार्थमुपसंहरन्नाह—

वाए पराजिओ सो निव्विसओ कारिओ नरिंदेणं । घोसावियं च णगरे जयइ जिणो वद्धमाणोत्ति ॥१४०॥ (मू.भा.)

पंचसया चुलसीया तइया सिद्धिं गयस्स वीरस्स । अबद्धियाण दिट्ठी दसपुरनयरे समुप्पण्णा ॥१४१॥ (मू. भा.)

दसपुरे नगरुच्छुघरे अज्जरक्खियपूसत्तमितियगं च । गोट्ठामाहिल नवमट्ठमेसु पुच्छा य विंझस्स ॥१४२॥ (मू.भा.)

दशपुरनगरे उत्पन्ना आर्यरक्षिताः, तैरिक्षुगृहे तोसलिपुत्राचार्या दृष्टिवादपाठाय पार्थिताः, ततस्तदन्तिके प्रव्रज्य साधिकनवपूर्वाणि जगृहुस्ते आर्यवैरान्तो पश्चादनुज्ञा जाता तेषां दुर्बलिकाघृतवस्त्रपुष्यमित्रा(कापुष्यमित्रगोष्ठामाहिलफल्गुरक्षिता)ख्यं शिष्यत्रयं, तत्र दुर्बलिकापुष्यमित्रस्यार्यरक्षितैर्दिवं गच्छद्भिराचार्यपदं दत्तं, अन्यदा गोष्ठामाहिलो गुरावभिनिविष्टः सन् प्रत्युच्चारकं विन्ध्यं नवमे पूर्वे साधूनां सावधिप्रत्याख्यानं अष्टमे कर्मप्रवादे च बद्धस्पृष्टनिकाचितभेदभिन्नकर्म प्ररूपयन्तं



* १-७-९-१० अङ्कवत्यो गाथा न क्वापि लब्धा अतः केवलं तासां प्रतीका दत्ताः ।

प्राह—नन्वेवमयुक्तं आशंसादिदोपदुष्टत्वात्, ततो विन्ध्येनोक्तं अस्माकं गुरुणैवमेव व्याख्यातं । गोष्ठामाहिलः प्राह—स किं वेत्ति ?, ततः शङ्कितस्य सतो विन्ध्यस्य गुर्वन्तिके पृच्छा, गुरुभिस्तथैव व्याख्यातं ॥ १४२ ॥ गोष्ठामाहिलश्चैवं कर्म प्ररूपयति—

पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समन्नेइ । एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ १४३ ॥ ( मू. भा. )

स्पृष्टो यथाऽबद्धः कञ्चुकिनं पुरुषं कञ्चुकः 'समन्वेति' समनुगच्छति, एवं स्पृष्टमबद्धं कर्म जीवं समन्वेति अन्यथा मोक्षाभावः प्रसज्यते, कथं ?, जीवात्कर्म न वियुज्यते अन्योन्याविभागबद्धत्वात् ॥ १४३ ॥ प्रत्याख्यानं चैवं—

पच्चक्खाणं सेयं अपरिमाणेण होइ कायव्वं । जेसिं तु परीमाणं तं दुट्ठं आससा होइ ॥ १४४ ॥ ( मू. भा. )

प्रत्याख्यानं अतोऽपरिमाणेन—कालावधिं विहाय कर्त्तव्यं । येषां तु परिमाणं प्रत्याख्याने यथा—प्राणातिपातं प्रत्याख्यामि यावज्जीवमित्यादि तत्प्रत्याख्यानं दुष्टमशोभनं, यतस्तत्राशंसा भवति अनुस्वारलोपोऽत्र, गुरुराहैतन्मिथ्या यतः कृत-प्रत्याख्यानानां नाशंसा-मृतः सेविष्याम इति, किन्तु मृतानां देवभवे मा भूद्व्रतभङ्ग इति कालावधिकरणं, एष सप्तमो निह्नवः ॥ १४४ ॥ भणिता देशविसंवादिनो निह्नवाः, अधुनानेनैव प्रस्तावेन प्रभूतविसंवादिनो वोटिका भण्यन्ते—

छव्वाससयाइं नवुत्तराइं तइया सिद्धिं गयस्स वीरस्स । तो बोडियाण दिट्ठि रहवीरपुरे समुप्पण्णा ॥१४५॥ (मू.भा.)
रहवीरपुरं नयरं दीवगमुज्जाण अज्जकण्हे य । सिवभूइस्सुवहिंमि य पुच्छा थेराण कहणा य ॥ १४६ ॥ ( मू. भा. )

रथवीरपुरं नगरं तत्र दीपकमुद्यानं, तत्रार्यकृष्णा आचार्याः समवसृताः, तदन्तिके प्रव्रजितः सहस्रमल्लो रात्रौ शिवभूतिर्नामा, अन्यदा तत्रैवागतस्य [ राज्ञा ] रत्नकम्बलं दत्तं, किमेतेन यतीनामिति विचिन्त्य गुरुभिस्तद ( स्तम )

नापृच्छय तत्पाटितं ज्ञात्वा स कषायितः अन्यदा जिनकल्पवर्णने शिवभूतेरुपधिविषयपृच्छा गुर्वन्तिके किमयं ध्रियते येन जिनकल्पो न क्रियते इति, तैः स्थविरैस्तस्य कथना कृता यथा अधुना न शक्यते कर्तुमेवं प्रज्ञापितोऽपि स वस्त्राणि त्यक्त्वाऽगात् तद्भगिन्यपि चोत्तरानाम्नी, परं सा भिक्षायै प्रविष्टा, गणिकया शाटिका ग्राहिता । तेन द्वौ शिष्यौ प्रव्राजितौ, कौण्डिन्यः कोट्टवीरश्च ॥ १४६ ॥ अमुमेवार्थमाह भाष्यकारः-

ऊहाए पण्णत्तं बोडियसिवभूइउत्तराहि इमं । मिच्छादंसणमिणमो रहवीरपुरे समुप्पण्णं ॥ १४७ ॥ (मू.भा.)

ऊहया स्वतर्कबुद्ध्या प्रज्ञायितं (प्रज्ञप्तं)-प्रणीतं ॥ १४७ ॥

बोडियसिवभूईओ बोडियलिंगस्स होइ उप्पत्ती । कोडिण्णकोट्टवीरा परंपराफासमुप्पण्णा ॥ १४८ ॥ (मू.भा.)

बोटिकशिवभूतेः सकाशात् बोटिकलिङ्गस्य भवत्युत्पत्तिः, कोण्डिन्यकोट्टवीरात् परम्परास्पर्शमाचार्यशिष्यसम्बन्धलक्षणमधिकृत्योत्पन्ना बोटिकदृष्टिः इति शेषः ॥ १४८ ॥ निह्नववक्तव्यतां निगमयन्नाह-

एवं एए कहिया ओसप्पिणीए उ निण्हवा सत्त । वीरवरस्स पवयणे सेसाणं पव्वयणे णत्थि ॥ ७८४ ॥

'णत्थि' न सन्ति ॥ ७८४ ॥

मोत्तूणमेसिमिक्कं सेसाणं जावजीविया दिट्ठी । एक्केक्कस्स य एत्तो दो दो दोसा मुणेयव्वा ॥ ७८५ ॥

मुक्त्वा एषामेकं गोष्ठामाहिलं शेषाणां जमाल्यादीनां प्रत्याख्यानमङ्गीकृत्य यावज्जीविका दृष्टिः, नाऽपरिमाणप्रत्याख्यानमिच्छन्तीत्यर्थः । आह-प्रकरणादेवेदमवसीयते किमर्थमस्योपन्यासः ?, उच्यते, प्रत्यहमुपयोगेन प्रत्याख्यानस्योपयोगित्वात्

मा भूत्कश्चित्तथैव प्रतिपद्येत, अतो ज्ञाप्यते निह्नवानामपि प्रत्याख्याने इयमेव दृष्टिः, एकैकस्य च 'एत्तो'त्ति इतोऽमीषां मध्ये द्वौ द्वौ दोषौ विज्ञातव्यौ मुक्त्वैकमिति वर्त्तते, परस्परतः यथाऽऽहुर्बहुरता जीवप्रदेशिकान्—यूयं कारणद्वयात् मिथ्यादृष्टयः, यद्भणत—एकप्रदेशो जीवस्तथा क्रियमाणं च कृतं, इत्येवं सर्वत्र योज्यं। गोष्ठामाहिलमधिकृत्य एकैकस्य त्रयो दोषाः, यथा [ आहुः ] बहुरतान् गोष्ठामाहिलाः—दोषत्रयाद्भवन्तो मिथ्यादृष्टयः यत्कृतं कृतमिति भणत तथा बद्धं कर्म वेद्यते यावज्जीवं च प्रत्याख्यानं ॥ ७८५ ॥

सत्तेया दिट्ठीओ जाइजरामरणगब्भवसहीणं। मूलं संसारस्स उ भवंति निग्गंथरूवेणं ॥ ७८६ ॥

सप्तैता दृष्टयः, वोटिकास्तु मिथ्यादृष्टयः एवेति न तद्विचारः। जातिग्रहणान्नारकादिप्रसूतिग्रहः मूलं—कारणं भवतीति योगः, मा भूत्सकृद्भाविनीनां जातिजरामरणगर्भवसतीनां मूलमिति प्रत्ययः अत आह—संसारस्तिर्यङ्नरनारकामरभवानुभूतिरूपः प्रदीर्घो गृह्यते, तस्यैव, तोरवधारणार्थत्वात्, निर्ग्रन्थरूपेण ॥ ७८६ ॥ आह—एते निह्नवाः किं साधवः ? उत तीर्थान्तरीयाः ? उत गृहस्थाः ?, उच्यते, न साधवः, यस्मात्साधूनामेकस्याप्यर्थाय कृतमशनादि शेषाणामकल्प्यं, नैवं निह्नवानां, आह च—

पवयणनीहूयाणं जं तेसिं कारियं जहिं जत्थ। भज्जं परिहरणाए मूले तह उत्तरगुणे य ॥ ७८७ ॥

निहूयन्ति देशीवचनमकिञ्चित्कारार्थे, ततश्च प्रवचनं-यथोक्तं क्रियाकलापं प्रत्यकिञ्चित्कराणां यदशनादि भाज्यं विकल्पनीयं परिहरणया, कदाचित्परिह्रियते कदाचिन्न, चेल्लोको न जानाति यथैते निह्नवाः साधुभ्यो भिन्नास्तदा परिह्रियते, अथ तु जानाति तदा न, अथवा परिहरणा—परिभोगस्तत्र भाज्यं, मूलगुणविषयमाधाकर्मादि तथोत्तरगुणविषयं च क्रीतादि,

अतो नैते साधवो नापि गृहस्था नान्यतीर्थ्याः, यतस्तदर्थाय कृतं कल्प्यमेव स्यादतो अवक्तव्या ( अव्यक्ता ) एते ॥ ७८७ ॥ आह–बोटिकानां यत्कारितं तत्र का वार्त्ता ?, उच्यते–

मिच्छादिट्ठीयाणं जं तेसिं कारियं जहिं जत्थ । सव्वंपि तयं सुद्धं मूले तह उत्तरगुणे य ॥ ७८८ ॥

उक्तं समवतारद्वारं, अधुनाऽनुमतद्वारे यद्यस्य नयस्य सामायिकं मोक्षमार्गत्वेनाऽनुमतं तदाह–

तवसंजमो अणुमओ निग्गंथं पवयणं च ववहारो । सद्दुज्जुसुयाणं पुण निव्वाणं संजमो चेव ॥ ७८९ ॥

तपःप्रधानः संयमस्तपःसंयमोऽसावऽनुमतो मोक्षाङ्गतया, निर्ग्रंथानामिदं नैर्ग्रन्थ्यमार्हतमित्यर्थः, प्रवचनं श्रुतमित्यर्थः, चशब्दो अनुक्तत्वसम्यक्त्वसामायिकसमुच्चयार्थः, एवं व्यवहारो व्यवस्थितः, व्यवहारग्रहणाच्च तदधोवर्त्ति नैगमसङ्ग्रहनयद्वयमपि गृहीतं, ततश्चायमर्थः–नैगमसङ्ग्रहव्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते, तपःसंयमग्रहणाच्चारित्रसामायिकं, प्रवचनग्रहणात् श्रुतसामायिकं चातसम्यक्त्वसामायिकं । आह–यद्येवं किमिति मिथ्यादृष्टयः ?, उच्यते, यतो व्यस्तान्यप्यनुमन्यन्ते न सापेक्षाण्येव, शब्दऋजुसूत्रयोः पुनः कारणे कार्योपचारान्निर्वाणं संयम एवेत्यनुमतं, ऋजुसूत्रमुलङ्घ्यादौ शब्दोपन्यासः शेषोपरितननयानुमतसङ्ग्रहार्थं, अयमर्थः–ऋजुसूत्रादयः सर्वे चारित्रसामायिकमेव मोक्षमार्गत्वेनानुमन्यन्ते नेतरे द्वे ॥ ७८९ ॥ 'उद्देसे निद्देसे' इत्याद्युपोद्घातनिर्युक्ति [ प्रथम ] गाथात्रयार्थो गतः, अधुना द्वितीयद्वारगाथावयवार्थः, तत्र किमिति द्वारं व्याख्यायते–किं सामायिकं ?, किं जीवः उताजीवः ? अथोभयं ? उतानुभयं ?, जीवाजीवत्वेऽपि किं द्रव्यं ? उत गुण इत्याशङ्कासम्भवे सत्याह–

आया खलु सामाइयं पचक्खायंतओ हवइ आया। तं खलु पचक्खाणं आवाए सव्वदव्वाणं ॥ ७९० ॥

आत्मैव–जीव एव सामायिकमित्यर्थः, अजीवादिविकल्पव्यवच्छेदः, स च प्रत्याचक्षाणः–प्रत्याख्यानं कुर्वन् 'क्रियमाणं कृतमिति क्रियाकालनिष्ठाकालयोरभेदाद्वर्त्तमानस्यैवातीतापत्तेः कृतप्रत्याख्यानोऽपि गृह्यते, स एव च परमार्थत आत्मा, श्रद्धान[ ज्ञान ]सावद्यनिवृत्तिस्वस्वभावावस्थितत्वात्, प्रत्याख्यानं जीवपरिणतिरूपत्वाद्विषयमधिकृत्य सर्वद्रव्याणामापाते–आभिमुख्येन समवाये, निष्पद्यत इति[ वाक्य ]शेषः, तस्य श्रद्धेयज्ञेयक्रियोपयोगित्वात्सर्वद्रव्याणाम् ॥ ७९० ॥ यथाभूतोऽसावात्मा सामायिकं तथाभूतमाह–

सावज्जजोगविरओ तिगुत्तो छसु संजओ। उवउत्तो जयमाणो आया सामाइयं होई ॥ १४९ ॥ ( मू. भा. )

यदुक्तं–'तं खलु पचक्खाणं आवाए सव्वदव्वाणं'ति तत्र साक्षान्महाव्रतरूपं चारित्रसामायिकमधिकृत्य सर्वद्रव्यविषयतामस्याह–

पढमंमि सव्वजीवा बिइए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं ॥ ७९१ ॥

'प्रथमे' प्राणातिपातनिवृत्तिरूपव्रते सर्वजीवाः तदनुपालनरूपत्वात्तस्य, द्वितीये चरमे च सर्वद्रव्याणि, कथं?, नास्ति पञ्चास्तिकायात्मको लोक इति मृषावादस्य, सर्वद्रव्यविषयत्वात्, तन्निवृत्तिरूपत्वाच्च द्वितीयव्रतस्य, तथा मूर्च्छाद्वारेण परिग्रहस्यापि सर्वद्रव्यविषयत्वाच्चरमव्रतस्य तन्निवृत्तिरूपत्वात्, शेषाणि महाव्रतानि तेषामेकदेशस्तेनैव हेतुभूतेन द्रव्याणां, भवन्तीत्यध्याहारः, कथं?–तृतीयस्य ग्रहणधारणीयद्रव्यादत्तादानविरतिरूपत्वात्, चतुर्थस्य च रूपरूपसहगत [ द्रव्य ] सम्बन्ध्यब्रह्म [विरति]-

कथम्भूत आत्मा सामायिकं सामायिक-विषयता च नि० गा० ७९०-७९१ भा० गा० १४९

रूपत्वात्, षष्ठस्य च रात्रिभोजनविरतिरूपत्वात् ॥ ७९१ ॥ एवं चारित्रसामायिकं निवृत्तिद्वारेण सर्वद्रव्यविषयं, श्रुतसामायिकमपि श्रुतज्ञानात्मकत्वात् सर्वद्रव्यविषयमेव, सम्यक्त्वसामायिकमपि सर्वद्रव्याणां सगुणपर्यायाणां श्रद्धानरूपत्वात्सर्वविषयमेव। सामायिकं जीव एवेत्युक्तं, तस्य च नयमतभेदेन द्रव्यगुणप्राप्तौ सर्वनयाधारद्रव्यार्थिकपर्यायार्थिकाभ्यां स्वरूपव्यवस्थामाह–

जीवो गुणपडिवन्नो णयस्स दव्वट्ठियस्स सामइयं। सो चेव पज्जवणयट्ठियस्स जीवस्स एस गुणो ७९२ ॥

जीवः गुणैः प्रतिपन्नः–आश्रितः गुणप्रतिपन्नः, गुणाश्च सम्यक्त्वादयः खल्वौपचारिकाः, 'नयस्य' द्रव्यार्थिकस्य सामायिकं वस्तुत आत्मैव सामायिकं, गुणास्तु तद्व्यतिरेकेणानवगम्यमानत्वान्न सन्त्येवेत्यर्थः। स एव सामायिकादिर्गुणः पर्यायार्थिकनयस्य, परमार्थतो यस्माज्जीवस्यैष गुणः व्यस्तेनाप्यनेनावयवेन जीवस्य गुणो जीवगुण इति षष्ठीतत्पुरुषसमासः सूचितो ज्ञेयः, उत्तरपदप्रधानत्वात्तत्पुरुषस्य, यथा तैलस्य धारा, न तत्र धारातिरेकेणापरं तैलमस्ति, एवं न गुणातिरिक्तो जीवस्तस्मात् गुणः सामायिकं, न तु जीवः ॥ १९२ ॥ पर्यायार्थिक एव स्वपक्षं समर्थयति–

उप्पज्जंति वयंति य परिणमंति य गुणा न दव्वाइं। दव्वपभवा य गुणा ण गुणप्पभवाइं दव्वाइं ॥ ७९३ ॥

उत्पद्यन्ते व्ययन्ते च, अनेनोत्पादव्ययरूपेण परिणमन्ति गुणा एव न द्रव्याणि, अतस्त एव सन्ति, उत्पादादिमत्वात पत्रनीलरक्ततादिवत्। किञ्च द्रव्यात्प्रभवो येषां ते द्रव्यप्रभवाः, चशब्दो युक्त्यन्तरसमुच्चये, गुणा न स्युः, तथा गुणप्रभवाणि च द्रव्याणि नैवेति वर्त्तते, अतो न कारणत्वं नापि कार्यत्वं द्रव्याणामित्यभावः, सतः कार्यकारणरूपत्वात्, अथवा द्रव्यप्रभवाश्च

गुणा न, किन्तु गुणप्रभवाणि द्रव्याणि, प्रतीत्यसमुत्पादोपजातगुणसमुदये द्रव्योपचारात्, तस्माद्गुणः सामायिकं ॥ ७९३ ॥ द्रव्यार्थिक आह–द्रव्यं प्रधानं न गुणाः, यस्मात्–

जं जं जे जे भावे परिणमइ पओगवीससा दव्वं । तं तह जाणाइ जिणो अपज्जवे जाणणा नत्थि ॥ ७९४ ॥

[1]जं जं जे जे भावे परिणमइ पओगवीससा दव्वं । तं तह जाणाइ जिणो अपज्जवे जाणणा नत्थि ॥ ७९५ ॥

यान् यान् भावान् विज्ञानघटादीन् परिणमति प्रयोगविस्रसातो द्रव्यं तत्, प्रयोगतो घटादीन् विस्रसातोऽभ्रेन्द्रधनुरादीन्, द्रव्यमेव तदुत्प्रेक्षितपर्यायमुत्फणविफणादिपर्यायसमन्वितसर्पद्रव्यवत्, न तत्र केचिदुत्फणादयः सर्पद्रव्यातिरिक्ताः सन्ति । किञ्च–तत् 'तथैव'अन्वयप्रधानं पर्यायोपसर्जनं जानाति जिनः अपर्याये–निराकारे परिज्ञा नास्ति, यद्यपर्याये परिज्ञा नास्ति तर्हि त एव इति पर्यायास्तिकेनोक्ते सत्याह–न च ते पर्यायास्तत्र वस्तुनि सन्तो द्रव्यमेव, तदाकारवत्, ततश्च तदेव सत्, केवलिनाप्यवगम्यमानत्वात्, तस्माज्जीव एव सामायिकं । तत्त्वं तु सामायिकभावपरिभणतः आत्मा सामायिकं ॥ ७९४ ॥ यद् यद् यान् यान् 'भावान्' आध्यात्मिकान् बाह्यांश्च परिणमति प्रयोगविस्रसातो द्रव्यं, भावार्थः पूर्ववत्, तत्तथापरिणाममेव जानाति जिनः अपर्याये परिज्ञा नास्ति, तस्मादुभयात्मकं वस्तु, केवलिना तथाऽवगतत्वादिति गाथार्थः ॥ ७९५ ॥ कतिविधमिति द्वारमाह–

सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं च । दुविहं चेव चरित्तं अगारमणगारियं चेव ॥ ७९६ ॥

1 इयं निर्युक्तिगाथा कुतोऽपि हेतोः अत्र न विद्यते किन्तु हारि० वृत्तौ इयं सटीका विद्यते ततः तथैव अत्रापि सा सटीका दर्शिता ।

द्रव्य-
पर्याया-
र्थिकाभ्यां
सामायिक-
स्वरूप-
व्यवस्था
कतिविध-
द्वारं च
नि० गा०
७९४-७९६

सम्यक्त्वमनुस्वारलोपात्, अगारः—गृहस्थस्तस्येदमागारिकं, अनगारः—साधुस्तस्येदमानगारिकं चैव । आह—आद्यसामायिके विहाय चारित्रसामायिकभेदस्य साक्षादभिधानं किमर्थं ?, उच्यते, अस्मिन्सति तयोर्नियमेन भाव इति ज्ञापनार्थं ॥ ७९६ ॥ मूलभाष्यकारः श्रुतसामायिकं व्याचिख्यासुस्तस्याध्ययनरूपत्वादाह—

अज्झयणंपि य तिविहं सुत्ते अत्थे य तदुभए चेव । सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती ॥१५०॥ (मू. भा.)

अध्ययनमपि त्रिविधं सूत्रविषयमर्थविषयं च तदुभयविषयं चैव, अपिशब्दात्सम्यक्त्वसामायिकमपि औपशमिकादिभेदात्त्रिविधं । प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयति—'शेषेष्वपि' चतुर्विंशतिस्तवादिष्वन्येषु वाऽध्ययनेषु भवत्येषा [ एव ] निर्युक्तिः—उद्देशनिर्देशादिका निरुक्तिपर्यवसाना । आह—अशेषद्वारपरिसमाप्तावतिदेशो न्याय्यः, अपान्तराले किमर्थम् ?, उच्यते, 'मध्यमग्रहण आद्यन्तयोर्ग्रहणं स्यादिति न्यायप्रदर्शनार्थः ॥ १५० ॥ कस्येति द्वारे यस्य तत्स्यात्तदाह—

जस्स सामाणिओ अप्पा, संजमे नियमे तवे । तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ७९७ ॥

'सामानिकः' सन्निहितोऽप्रवसित इत्यर्थः, 'संयमे' मूलगुणेषु 'नियमे' उत्तरगुणेषु 'तपसि'अनशनादिरूपे ॥ ७९७ ॥

जो समो सव्वभूएसु, तसेसु थावरेसु य । तस्स सामाइयं होइ इइ केवलिभासियं ॥ ७९८ ॥

'सर्वभूतेषु' सर्वप्राणिषु ॥ ७९८ ॥ फलदर्शनद्वारेणास्य करणविधिमाह—

सावज्जजोगप्परिवज्जणट्ठा सामाइयं केवलियं पसत्थं । गिहत्थधम्मा परमंति णच्चा कुज्जा बुहो आयहियं परत्थं ॥७९९॥
सव्वंति भाणिऊणं विरई खलु जस्स सव्विया णत्थि । सो सव्वाविरइवाई चुक्कइ देसं च सव्वं च ॥ ८०० ॥

'कैवलिकं' प्रतिपूर्णं 'प्रशस्तं' पवित्रं, एतदेव गृहस्थधर्मात् 'परमं' प्रधानमित्येवं ज्ञात्वा कुर्यादुध आत्महितं परार्थमिति परो मोक्षस्तदर्थं न तु सुरलोकाद्यवाप्त्यर्थं ॥ ७९९ ॥ प्रतिपूर्णसामायिककरणशक्त्यभावे गृहस्थोऽपि गृहस्थसामायिकं 'करेमि भंते ! सामाइअं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव निअमं पज्जुवासामि' इत्येवं कुर्यात्, आह-तस्य सर्वं त्रिविधं त्रिविधेन प्रत्याचक्षाणस्य को दोषः ?, उच्यते, प्रवृत्तकर्मारम्भानुमत्यऽनिवृत्त्या करणाऽसम्भव एव, तथा भङ्गप्रसङ्गदोषश्चेति, आह च-'सव्वं'ति उपलक्षणत्वात्सर्वं सावद्यं योगं प्रत्याख्यामि त्रिविधं त्रिविधेनेत्येवं भणित्वा 'सर्विका' सर्वा नास्ति, प्रवृत्तकर्मारम्भानुमतिसद्भावात्, 'चुक्कइ'त्ति भ्रश्यति 'देशं च सर्वं चे'ति देशविरतिं सर्वविरतिं प्रतिज्ञाताऽकरणात् ॥ ८०० ॥ गृहस्थसमायिकमपि कार्यमेव तस्यापि विशिष्टफलसाधकत्वात्, आह च-

जति किंचिदप्पजोयणमपप्पं वा विसेसिउं वत्थुं । पच्चक्खेज्ज ण दोसो सयंभुरमणादिमच्छव्व ॥ १ ॥
जो वा निक्खमिउमणो पडिमं पुत्तादिसंतइणिमित्तं । पडिवज्जिज्ज तओ वा करिज्ज तिविहंपि तिविहेणं ॥ २ ॥
जो पुण पुव्वारद्धाणुज्झियसावज्जकम्मसंताणो । तदणुमतिपरिणतिं सो ण तरति सहसा णियत्तेउं ॥ ३ ॥
सामाइयंमि उ कए समणो इव सावओ हवइ जम्हा । एएणं कारणेणं बहुसो सामाइयं कुज्जा ॥ ८०१ ॥

किञ्च-

जीवो पमायबहुलो बहुसोऽवि अ बहुविहेसु अत्थेसुं । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ ८०२ ॥

बहुशो अनेकधापि च बहुविधेष्वर्थेषु-शब्दादिषु प्रमादवांश्चैकान्तेनाऽशुभबन्धक एवातोऽनेन कारणेन तत्परिजिहीर्षया

वहुशः सामायिकं कुर्यात्–मध्यस्थो भूयात् ॥ ८०२ ॥ सङ्क्षेपेण सामायिकवतो मध्यस्थस्य लक्षणमाह–

जो णवि वट्टइ रागे णवि दोसे दोण्ह मज्झयारंमि । सो होइ उ मज्झत्थो सेसा सव्वे अमज्झत्था ॥ ८०३ ॥

क किं सामायिकमिति निरूपयन् द्वारगाथात्रयमाह–

खेत्तदिसाकालगइ भवियसण्णिऊसासदिट्ठिमाहारे । पज्जत्तसुत्तजम्मट्ठितिवेयसण्णाकसायाऊ ॥ ८०४ ॥
णाणे जोगुवओगे सरीरसंठाणसंघयणमाणे । लेसा परिणामे वेयणा समुग्घाय कम्मे य ॥ ८०५ ॥
णिव्वेढणमुव्वट्टे आसवकरणे तहा अलंकारे । सयणासणठाणत्थे चंकम्मंते य किं कहियं ॥ ८०६ ॥

क्षेत्रदिक्कालगतिभव्यसंज्ञिउच्छ्वासदृष्टिआहारकानङ्गीकृत्यालोचनीयं, किं क सामायिकं इति योगः । तथा पर्याप्तसुप्तजन्मस्थितिवेदसंज्ञाकपायायूंषि च ॥ ८०४ ॥ तथा ज्ञानं योगोपयोगौ शरीरसंस्थानसंहननमानानि लेश्याः परिणामं वेदनां समुद्घातं कर्म च ॥ ८०५ ॥ तथा निर्वेष्टनोद्वर्त्तने आश्रवकरणं तथा अलङ्कारं तथा शयनासनस्थानस्थानधिकृत्य, तथा चङ्क्रमतश्च विषयीकृत्य किं सामायिकं केत्यालोचनीयं ॥ ८०६ ॥ तत्रोर्ध्वलोकादिक्षेत्रमङ्गीकृत्य [ सम्यक्त्वादि– ] सामायिकानां लाभादिभावमाह–

सम्मसुआणं लंभो उड्ढं च अहे अ तिरिअलोए अ । विरई मणुस्सलोए विरयाविरई य तिरिएसुं ॥ ८०७ ॥

सम्यक्त्वश्रुतसामायिकयोर्लाभ ऊर्ध्वलोके मेरुसुरलोकादिषु ये सम्यक्त्वं प्रतिपद्यन्ते जीवास्तेषां श्रुताज्ञानमपि तदैव सम्यक्श्रुतं स्यात्, एवमधोलोकेऽपि महाविदेहाधोलौकिकग्रामेषु नरकेषु च ये प्रतिपद्यन्ते, एवं तिर्यग्लोकेऽपि । विरतिं

सर्वविरतिसामायिकं लाभापेक्षया मनुष्यलोके एव स्यात्, मनुष्या एवास्य प्रतिपत्तार इत्यर्थः, क्षेत्रनियमं तु विशिष्टश्रुतविदो विदन्ति, विरताविरतिश्च देशविरतिसामायिकलाभविचारे तिर्यक्षु स्यान्मनुष्येषु च केषुचित् ॥ ८०७ ॥

पुव्वपडिवन्नगा पुण तीसुवि लोएसु निअमओ तिण्हं। चरणस्स दोसु निअमा भयणिज्जा उड्ढलोगंमि ॥८०८॥

पूर्वप्रतिपन्नास्तु त्रयाणां नियमेन त्रिष्वपि लोकेषु विद्यन्ते, चारित्रस्य त्वधोलोकतिर्यग्लोकयोः, ऊर्द्धलोके तु भाज्याः ॥ ८०८ ॥ दिग्द्वाराऽवयवार्थाभिधित्सया दिक्स्वरूपमाह–

नामं ठवणा दविए खेत्तदिसा तावखेत्त पन्नवए। सत्तमिया भावदिसा सा होअट्ठारसविहा उ ॥ ८०९ ॥

नामस्थापने 'सुगमे' द्रव्यविषया दिक् [ द्रव्यदिक् ], सा च जघन्यतस्त्रयोदशप्रदेशिकं दशदिक्प्रभवं द्रव्यं, तत्रैकैकः प्रदेशो विदिक्षु एते चत्वारः, मध्ये त्वेक इत्येते पञ्च चतसृषु दिक्षु आयतावस्थितौ द्वौ द्वौ, आह च भाष्यकारः–

तेरसपदेसियं खलु तावतिएसुं भवे पदेसेसुं। जं दव्वं ओगाढं जहण्णगं तं दसदिसागं ॥ १ ॥



अस्य चेयं स्थापना, उत्कृष्टतस्त्वनन्तप्रदेशिकं, क्षेत्रदिगनेकभेदा, मेरुमध्याष्टप्रदेशिकरुचकाद्बहिर्द्व्यादिद्व्युत्तरश्रेण्या शकटोर्द्धिसंस्थानाः चतस्रो दिशः, चतसृणामप्यन्तरालकोणावस्थिता एकप्रदेशिकाश्छिन्नावलिसंस्थानाश्चतस्र एव विदिशः, ऊर्द्धं चतुरस्रदण्डसंस्थाना एकैव, अधोऽप्येवंप्रकारा द्वितीया, उक्तं च–

अट्ठपएसो रुयगो तिरियं लोगस्स मज्झयारंमि। एस पभवो दिसाणं एसेव भवेऽणुदिसाणं ॥१॥
दुपदेसादिदुरुत्तर एगपदेसा अणुत्तरा चेव। चउरो चउरो य दिसा चउरादि अणुत्तरा दोण्णि ॥ २ ॥

सगडुद्धिसंठिताओ महादिसाओ भवंति चत्तारि ।
मुत्तावली य चउरो दो चेव य होन्ति रुयगनिभा ॥ ३ ॥

इयं स्थापना, आसां च नामानि—

इंदग्गेई जम्मा य णेरती वारुणी य वायव्वा ।
सोमा ईसाणाऽवि य विमला य तमा य बोद्धव्वा ॥ १ ॥
इंदा विजयद्दाराणुसारतो सेसिया पदक्खिणतो ।
अट्ठवि तिरियदिसाओ उड्ढं विमला तमा चाधो ॥ २ ॥

तापः—सविता तदुपलक्षिता क्षेत्रदिक् ताप [ क्षेत्र ] दिक्, [ सा चानियता—'जेसिं जत्तो सूरो उदेति तेसिं तई हवइ पुव्वा । तावक्खेत्तदिसाओ पयाहिणं सेसियाओसिं ॥ १ ॥' 'पण्णवए' त्ति प्रज्ञापकस्य दिक् प्रज्ञापकदिक्—'पण्णवओ जदभिमुहो सा पुव्वा सेसिया पदाहिणतो । तस्सेवणुगंतव्वा अग्गेयादी दिसा नियमा ॥ २ ॥', सप्तमी भावदिक् सा भवत्यष्टादशविधैव, दिश्यतेऽयममुक इति संसारी यया सा भावदिक् ], सा चेत्थं स्यादष्टादशविधा—

पुढविजलजलण वाया मूला खंधग्गपोरबीया य । बितिचउपंचेंदिय तिरियनारगा देवसंघाया ॥ १ ॥
संमुच्छिमकंमाकम्मभूमगणरा तहऽन्तरदीवा । भावदिसा दिस्सइ जं संसारी णिययमेताहिं ॥ २ ॥

इह च नामस्थापनाद्रव्यदिग्भिरनधिकार एव, शेषासु यथासम्भवं सामायिकस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नो वा वाच्यः,

तत्र क्षेत्रदिशोऽधिकृत्याह—

पुव्वाईआसु महादिसासु पडिवज्जमाणओ होइ । पुव्वपडिवन्नओ पुण अन्नयरीए दिसाए उ ॥ ८१० ॥

पूर्वाद्यासु महादिक्षु विवक्षिते काले सर्वेषां सामायिकानां प्रतिपद्यमानकः स्यान्न च विदिक्षु, तास्वेकप्रादेशिकत्वेन जीवावगाहनाभावात्, आह च—

छिण्णावलिरुयगागिइदिसासु सामाइयं ण जं तासु । सुद्धासु णावगाहइ जीवो तासु पुण फुसेज्जा ॥ १ ॥

पूर्वप्रतिपन्नकः पुनरन्यतरस्यां भवत्येव, तापक्षेत्रप्रज्ञापकदिक्षु पुनरष्टसु चतुर्णामपि सामायिकानां पूर्वप्रतिपन्नोऽस्ति प्रतिपद्यमानकश्च सम्भवति । अधऊर्ध्वदिग्द्वये तु सम्यक्त्वश्रुतसामायिकयो [ रेवमेव, देशविरतिसर्वविरतिसामायिकयो]स्तु पूर्वप्रतिपन्नकः, प्रतिपद्यमानकस्तु नैव, उक्तं च—

अट्ठसु चउण्ह नियमा पुव्वपवण्णो उ दोसु दोण्हेव । दोण्ह तु पुव्वपवण्णो सिय णण्णो तावपण्णवए ॥ १ ॥

भावदिक्षु पुनरेकेन्द्रियेषूभयाभावश्चतुर्णामपि, विकलेन्द्रियेषु सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्नः सम्भवति नेतरः, पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्जानां पूर्वप्रतिपन्नोऽस्ति प्रतिपद्यमानको भाज्यः, नारकामराकर्मभूमिजाऽन्तरद्वीपनरेषु सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नोऽस्त्येव, अन्यः भाज्यः, कर्मभूमिजमनुष्येषु चतुर्णामपि पूर्वप्रतिपन्नो अस्त्येव, इतरस्तु भाज्यः, सम्मूर्च्छिमेषु चोभयाभावः, उक्तं च—

उभयाभावो पुढवादिएसु विगलेसु होज्ज उववण्णो । पंचिंदियतिरिएसुं णियमा तिण्हं सिय पवज्जे ॥ १ ॥

णारगदेवाकम्मगअंतरदीवेसु दोण्ह भयणा उ । कम्मगणरेसुं चउसुं मुच्छेसु तु उभयपडिसेहो ॥ २ ॥

कालद्वारे कालस्त्रिविधः—उत्सर्पिणीकालो अवसर्पिणीकाल उभयाभावतोऽवस्थितश्च, तत्र भरतैरावतेष्ववसर्पिण्युत्सर्पिणीगतः कालः प्रत्येकं सुषमसुषमादिभेदात् षड्विधः, अवस्थितश्चतुर्द्धा सुषमसुषमाप्रतिभागः १ सुषमाप्रतिभागः २ सुषमदुःषमाप्रतिभागः ३ दुःषमसुषमाप्रतिभागश्च ४ । तत्राद्यो देवकुरूत्तरकुरुषु, द्वितीयो हरिवर्षरम्यकयोः, तृतीयो हैमवतैरण्यवतयोः, चतुर्थो विदेहेषु, इत्थमनेकधा काले सति यस्य सामायिकस्य यस्मिन् काले प्रतिपत्तिरित्येतदाह—

**संमत्तस्स सुयस्स य पडिवत्ती छव्विहंमि कालंमि । विरइं विरयाविरइं पडिवज्जइ दोसु तिसु वावि ॥ ८११ ॥**

षड्विधेऽपि सुषमादिलक्षणकाले सम्भवति, न चात्र दुःषमदुःषमायां अत्यन्तक्लिष्टत्वात् बिलवासिषु सामायिकाभाव आशङ्कनीयः, यतस्तत्रापि सम्यक्त्वमात्रप्रतिपत्ता कश्चित्स्यादपि, स च प्रतिपत्ता सुषमसुषमादिषु देशन्यूनपूर्वकोट्यायुष्क एव प्रतिपद्यते, पूर्वप्रतिपन्नकास्त्वनयोर्विद्यन्त एव, विरतिं तथा विरताविरतिं प्रतिपद्यते कश्चिद् द्वयोः कालयोः त्रिषु वाऽपि कालेषु, तत्रोत्सर्पिण्यां द्वयोः दुःषमसुषमायां सुषमदुःषमायां च, अवसर्पिण्यां त्रिषु सुषमदुषमायां दुःषमसुषमायां दुःषमायां च, पूर्वप्रतिपन्नस्त्वस्त्येव, अपिशब्दात्संहरणं प्रतीत्य पूर्वप्रतिपन्नकः सर्वकालेषु सम्भवति, प्रतिभागकालेषु त्रिषु सम्यक्त्वश्रुतयोः प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव, चतुर्थे तु प्रतिभागे चतुर्विधस्यापि प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्तु अस्ति एव, बाह्यद्वीपसमुद्रेषु तु काललिङ्गरहितेषु त्रयाणां प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव ॥ ८११ ॥ गतिद्वारमाह—

**चउसुवि गतीसु णियमा सम्मत्तसुयस्स होइ पडिवत्ती । मणुएसु होइ विरती विरयाविरई य तिरिएसुं ॥ ८१२ ॥**

सम्यक्त्वश्रुतयोर्भवति प्रतिपत्तिः, सम्भवति विवक्षिते काले इत्यर्थः । पूर्वप्रतिपन्नकस्त्वनयोर्विद्यत एव, मनुष्येषु भवति विरतिः, प्रतिपत्तिमङ्गीकृत्य मनुष्येष्वेव सम्भवतीत्यर्थः, पूर्वप्रतिपन्नापेक्षया तु सदा भवत्येव, विरताविरतिश्च तिर्यक्षु, भावना पूर्ववत् ॥ ८१२ ॥ भव्यसंज्ञिद्वार आह–

भवसिद्धिओ उ जीवो पडिवज्जइ सो चउण्हमण्णयरं । पडिसेहो पुण असण्णिमीसए सण्णि पडिवज्जे ॥ ८१३ ॥

भवसिद्धिको भव्यः, स चतुर्णामन्यतरत् एकं द्वे त्रीणि सर्वाणि, व्यवहारनयापेक्षया इत्थमुच्यते, न तु निश्चयतः केवलसम्यक्त्वसामायिकसम्भवोऽस्ति, श्रुतसामायिकानुगतत्वात्तस्य, एवं संज्ञ्यपि, यत आह–संज्ञि पडिवज्जे, पूर्वप्रतिपन्नकस्तु भव्यसंज्ञिष्वस्त्येव, प्रतिषेधः पुनरसंज्ञिनि मिश्रकेऽभव्ये च, मिश्रके–सिद्धे यतोऽसौ न संज्ञी नाप्यसंज्ञी न भव्यो नाप्यभव्यः, पुनःशब्दस्तु पूर्वप्रतिपन्नोऽसंज्ञी सास्वादनो जन्मनि सम्भवतीति विशेषणार्थः, संज्ञी प्रतिपद्यते इति व्याख्यातमेव ॥ ८१३ ॥ उच्छ्वासदृष्टिद्वार आह–

ऊसासग णीसासग मीसग पडिसेह दुविह पडिवण्णो । दिट्ठीइ दो णया खलु ववहारो निच्छओ चेव ॥ ८१४ ॥

उच्छ्वासको निःश्वासक आनपानपर्याप्तिपरिनिष्पन्न इत्यर्थः, स हि चतुर्णामपि प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नोऽस्त्येवेति शेषः । मिश्रः खल्वानपानपर्याप्त्या अपर्याप्तो भण्यते, तत्र प्रतिपत्तिमङ्गीकृत्य प्रतिषेधो, नासौ चतुर्णामपि प्रतिपद्यमानकः सम्भवतीत्यर्थः । स एव द्विविधस्य सम्यक्त्वश्रुतसामायिकस्य प्रतिपन्नः पूर्वप्रतिपन्नः स्याद्देवादिर्जन्मकाले, अथवा मिश्रकः–सिद्धस्तत्र चतुर्णामप्युभयथापि प्रतिषेधः, द्विविधस्य दर्शनचारित्रसामायिकस्य शैलेशीगतः पूर्वप्रतिपन्नः स्यादसावपि

तावन्मिश्र एव, दृष्टौ विचार्यमाणायां द्वौ नयौ विचारकौ–व्यवहारो निश्चयश्चैव, तत्राद्यस्य सामायिकरहितः सामायिकं प्रतिपद्यते, इतरस्य तु तद्युक्त एव, क्रियाकालनिष्ठाकालयोरभेदात् ॥ ८१४ ॥ आहारकपर्याप्तकद्वार आह–

आहारओ उ जीवो पडिवज्जइ सो चउण्हमण्णयरं । एमेव य पज्जत्तो सम्मत्तसुए सिया इयरो ॥ ८१५ ॥

आहारकश्चतुर्णामन्यतरत्प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव, एवमेव पर्याप्तः षड्भिरप्याहारादिपर्याप्तिभिः, इतरोऽनाहारकोऽपर्याप्तकश्च, तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्वश्रुते अङ्गीकृत्य स्यात् पूर्वप्रतिपन्नः, प्रतिपद्यमानस्तु नैवेति शेषः । केवली तु समुद्घातशैलेश्यवस्थायामनाहारको दर्शनचरणयोः, अपर्याप्तोऽपि सम्यक्त्वश्रुते अधिकृत्य स्यात्पूर्वप्रतिपन्नः ॥ ८१५ ॥

सुप्तजन्मद्वारे आह–

णिद्दाए भावओऽवि य जागरमाणो चउण्हमण्णयरं । अंडयपोयजराउय तिग तिग चउरो भवे कमसो ॥ ८१६ ॥

सुप्तो द्विधा द्रव्यभावाभ्यां एवं जाग्रदपि, तत्रो द्रव्यसुप्तो निद्रया भावसुप्तोऽज्ञानी, तथा द्रव्यजागरोऽनिद्रः भावजागरः सम्यग्दृष्टिः, तत्र निद्रया भावतोऽपि च जाग्रच्चतुर्णामन्यतरत्प्रतिपद्यते पूर्वप्रतिपन्नस्त्वस्त्येव, अपिशब्दाद्भावजागरो द्वयोः पूर्वप्रतिपन्न एव, द्वयं तु प्रतिपत्ता स्यात्, निद्रासुप्तश्चतुर्णामपि पूर्वप्रतिपन्नः स्यान्न तु प्रतिपद्यमानकः, भावसुप्तस्तूभयविकलो नयमताद्वा प्रतिपद्यमानकः स्यात् । जन्म त्रिविधं–अण्डजादिभेदेन, तत्राण्डजाः–हंसादयस्त्रयाणां प्रतिपद्यमानकाः पूर्वप्रतिपन्नाः सन्त्येव, पोतजाः–हस्त्यादयोऽप्येवमेव, जरायुजाः–मनुष्याश्चतुर्णामित्थमेव । औपपातिकाः प्रथमयोर्द्वयोरेवं ॥८१६॥

स्थितिद्वारमाह–

**उक्कोसयट्ठितीए पडिवज्जंते य णत्थि पडिवण्णो। अजहण्णमणुक्कोसे पडिवज्जंते य पडिवण्णे ॥ ८१७ ॥**

आयुर्वर्जसप्तकर्मणामुत्कृष्टस्थितिजीवश्चतुर्णामपि न प्रतिपत्ता नापि प्रतिपन्नः, आयुषस्तूत्कृष्टस्थितौ द्वयोः पूर्वप्रतिपन्नः, अजघन्योत्कृष्टस्थितौ चतुर्णामपि द्विधापि स्यात्। जघन्यायुःस्थितिर्न प्रतिपद्यते न प्रतिपन्नः क्षुल्लकभवगतः, शेषकर्मजघन्यस्थितिस्तु देशविरतिरहितस्य त्रयस्य पूर्वप्रतिपन्नः स्याद्, दर्शनसप्तकातिक्रान्तः क्षपकोऽन्तकृत्केवली, जघन्यस्थितिकर्मबन्धकत्वात् जघन्यस्थितित्वं तस्य, न तूपात्तकर्मप्रवाहापेक्षया ॥ ८१७ ॥ वेदसंज्ञाकषायानाह—

**चउरोऽवि तिविहवेदे चउसुवि सण्णासु होइ पडिवत्ती। हेट्ठा जहा कसाएसु वण्णियं तह य इहयंपि ॥ ८१८ ॥**

चत्वार्यपि त्रिविधवेदे द्विधापि सन्ति, अवेदस्तु देशविरतिरहितानां त्रयाणां पूर्वप्रतिपन्नः स्यात्, क्षीणवेदः क्षपको न प्रतिपद्यमानकः। संज्ञासु आहारभयमैथुनपरिग्रहरूपासु चतुर्णामपि स्यात्प्रतिपत्तिः, इतरस्त्वस्त्येव। अधो यथा 'पढमिल्लुगाण उदए' इत्यादिना वर्णितं, समुदायार्थोऽयं—सकषायी चतुर्णां द्विधापि, अकषायी छद्मस्थवीतरागस्त्रयाणां पूर्वप्रतिपन्नो न तु प्रतिपद्यमानकः ॥ ८१८ ॥ आयुर्ज्ञानद्वार आह—

**संखिज्जाऊ चउरो भयणा सम्मसुयऽसंखवासीणं। ओहेण विभागेण य नाणी पडिवज्जइ चउरो ॥ ८१९ ॥**

सङ्ख्येयायुर्नरश्चत्वारि प्रतिपद्यते, प्रतिपन्नस्त्वस्त्येव, भजना—विकल्पना सम्यक्त्वश्रुतयोरसङ्ख्येयवर्षायुषां, अयमर्थः—विवक्षितकाले असङ्ख्येयायुषां सम्यक्त्वश्रुतयोः प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव, ओघेन—सामान्येन ज्ञानी प्रतिपद्यते चत्वार्यपि नयमतेन, पूर्वप्रतिपन्नस्त्वस्त्येव, विभागेन च मतिश्रुतज्ञानी युगपदाद्यसामायिकद्वयप्रतिपत्ता स्यात्, पूर्वप्रति-

पन्नस्त्वस्त्येव, उपरितनसामायिकद्वयस्यापि प्रतिपद्यमानकः सम्भवति, इतरस्त्वस्त्येव, अवधिज्ञानी सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्न एव न प्रतिपद्यमानकः, देशविरतिं न प्रतिपद्यते, गुणपूर्वकत्वात् तदवाप्तेः, स्यात् पूर्वप्रतिपन्नः, सर्वविरतिं प्रतिपद्यते, पूर्वप्रतिपन्नोऽपि स्यात्, मनःपर्यायज्ञानी देशविरतिरहितस्य त्रयस्य पूर्वप्रतिपन्न एव, [ न प्रतिपद्यमानकः ], युगपद्वा सह तेन चारित्रं प्रतिपद्यते तीर्थकृत्, [भवस्थ]केवली पूर्वप्रतिपन्नस्तु सम्यक्त्वचारित्रयोः [ न तु प्रतिपद्यमानकः ] ॥ ८१९ ॥ योगोपयोगशरीराण्याह–

चउरोऽवि तिविहजोगे उवओगदुगंमि चउर पडिवज्जे । ओरालिए चउक्कं सम्मसुय विउव्विए भयणा ॥ ८२० ॥

'त्रिविधयोगे' मनोवाक्कायलक्षणे, उपयोगद्वये–साकारानाकारभेदे चत्वारि प्रतिपद्यते, प्राक्प्रतिपन्नस्त्वस्त्येव, ननु 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स' इत्यागमादनाकारोपयोगे सामायिकलब्धिविरोधः ?, उच्यते, प्रवर्द्धमानपरिणामजीवविषयत्वात्तस्यागमस्य, अवस्थितौपशमिकपरिणामापेक्षया चानाकारोपयोगे सामायिकलब्धिप्रतिपादनादविरोधः, आह च भाष्यकारः– "ऊसरदेसं दड्ढेल्लयं च विज्झाइ वणदवो पप्प । इव मिच्छस्स अणुदए उवसमसंमं लहइ जीवो ॥ १ ॥" अवस्थितपरिणामता चाऽस्य–'जं मिच्छस्साणुदओ न हायए तेण तस्स परिणामो । जं पुण सयमुवसंतं न वड्ढएऽवड्ढिओ तेणं ॥ २ ॥" औदारिके शरीरे चतुष्कं द्विधाप्यस्ति, सम्यक्त्वश्रुतयोर्वैक्रिये भजना, अयमर्थः–वैक्रियशरीरी सम्यक्त्वश्रुतयोर्द्विधापि, उपरितनद्वयस्य प्राक्प्रतिपन्न एव कृतवैक्रियश्चारणश्रावकादिः श्रमणो वा, न प्रतिपद्यमानकः, प्रमत्तत्वात्, आहारकशरीरी देशविरतिवर्जानि त्रीण्याश्रित्य प्राक्प्रतिपन्नः, तैजसकार्मणकायेऽपान्तरालगतावाद्यद्वयमाश्रित्य प्राक्प्रतिपन्नः ॥ ८२० ॥ संस्थानादित्रयमाह–

सव्वेसुवि संठाणेसु लहइ एमेव सव्वसंघयणे। उक्कोसजहण्णं वज्जिऊण माणं लहे मणुओ ॥ ८२१ ॥

सर्वेषु संस्थानेषु लभते चत्वार्यपि, प्राक्प्रतिपन्नोऽप्यस्ति, उत्कृष्टं जघन्यं वर्जयित्वा मानं-देहप्रमाणं लभते मनुजश्चत्वारि, प्राक्प्रतिपन्नोऽप्यस्ति, गर्भजमनुजो जघन्यदेहः आद्यद्वयस्य पूर्वप्रतिपन्नः स्यान्न प्रतिपत्ता, उत्कृष्टावगाहनां सम्यक्त्वश्रुतयोर्द्विधापि ॥ ८२१ ॥ लेश्या[ द्वारं ] आह-

सम्मत्तसुयं सव्वासु लहइ सुद्धासु तीसु य चरित्तं। पुव्वपडिवण्णगो पुण अण्णयरीए उ लेसाए ॥ ८२२ ॥

सम्यक्त्वश्रुतं सर्वासु, पूर्वप्रतिपन्नः पुनरन्यतरस्यां कृष्णादिलेश्यायां स्यात्। आह-मतिश्रुतलाभचिन्तायां शुद्धासु तिसृषु प्रतिपद्यमानक उक्तः, कथमिदानीं सर्वास्वभिधीयमानः सम्यक्त्वश्रुतप्रतिपत्ता न विरुध्यते ?, उच्यते, तत्रात्मपरिणामरूपां भावलेश्यामाश्रित्याऽसावुक्तोऽत्र त्ववस्थितकृष्णादिद्रव्यरूपां द्रव्यलेश्यामेव ॥ ८२२ ॥ परिणाममाह-

वड्ढंते परिणामे पडिवज्जइ सो चउण्हमण्णयरं। एवमेवऽवट्ठियंमिवि हायंति न किंचि पडिवज्जे ॥ ८२३ ॥

एवमेवावस्थितेऽपि शुभे परिणामे, क्षीयमाणे न किञ्चित्प्रतिपद्यते, प्राक्प्रतिपन्नस्तु त्रिष्वपि परिणामेषु स्यात् ॥ ८२३ ॥ वेदनासमुद्घातकर्मणी आह-

दुविहाए वेयणाए पडिवज्जइ सो चउण्हमण्णयरं। असमोहओऽवि एमेव पुव्वपडिवण्णए भयणा ॥८२४ ॥

द्विविधायां-सातासातरूपायां सत्यां [ प्रतिपद्यते स चतुर्णामन्यतरत् ], प्राक्प्रतिपन्नश्च स्यात्, असमवहतोऽप्येवमेव, समवहतस्तु केवलिसमुद्घातादिना सप्तविधे न प्रतिपद्यते, किन्तु पूर्वप्रतिपन्नके भजना, समवहतः स स्यादित्यर्थः, स च

सामायिकद्वयस्य त्रयस्य वा स्यात् ॥ ८२४ ॥ निर्वेष्टनमाह–

दव्वेण य भावेण य निव्विड्ढंतो चउण्हमण्णयरं । नरएसु अणुव्वट्टे दुगं चउक्कं सिया उ उव्वट्टे ॥ ८२५ ॥

द्रव्यनिर्वेष्टनं–कर्मप्रदेशविसङ्घातरूपं, भावनिर्वेष्टनं–क्रोधादिहानिलक्षणं, तत्र सर्वमपि कर्म निर्वेष्टयंश्चतुष्टयं लभते, विशेषतो ज्ञानावरणं निर्वेष्टयन् श्रुतमाप्नोति, मोहनीयं तु शेषत्रयम् । संवेष्टयंस्तु अनन्तानुवन्धा( न्ध्या )दीन्न प्रतिपद्यते, शेषकर्म त्वङ्गीकृत्योभयथाऽप्यस्ति । उद्वर्त्तनामाह–नरकेष्वनुद्वर्त्तयन्, तत्रस्थ एवेत्यर्थः, आद्यं सामायिकद्विकं प्रतिपद्यते, तदाश्रित्य च पूर्वप्रतिपन्नः स्यात्, उद्वृत्तस्तु 'स्यात्' कदाचित् चतुष्कं कदाचित्त्रिकं, पूर्वप्रतिपन्नोऽस्ति ॥ ८२५ ॥

तिरिएसु अणुव्वट्टे तिगं चउक्कं सिया उ उव्वट्टे । मणुएसु अणुव्वट्टे चउरो ति दुगं तु उव्वट्टे ॥ ८२६ ॥

तिर्यक्षु गर्भव्युत्क्रान्तिकेषु संज्ञिष्वनुद्वृत्तः सन् त्रिकमाद्यमधिकृत्य प्रतिपत्ता स्यात् प्राक्प्रतिपन्नश्च स्यात्, उद्वृत्तस्य मनुष्यादिष्वायातस्य स्यात् चतुष्टयं स्यात् त्रिकं, द्विकमधिकृत्य द्विधा स्यात्, मनुष्येष्वनुद्वृत्तः सन् चत्वारि प्रतिपद्यते प्राक्प्रतिपन्नश्च, उद्वृत्तः सन् तिर्यङ्नारकामरेष्वायातस्त्रीणि द्विकं वाधिकृत्योभयथा स्यात् ॥ ८२६ ॥

देवेसु अणुव्वट्टे दुगं चउक्कं सिया उ उव्वट्टे । उव्वट्टमाणओ पुण सव्वोऽवि न किंचि पडिवज्जे ॥ ८२७ ॥

उद्वर्त्तमानकः पुनरपान्तरालगतौ सर्वोऽपि देवादिर्न किञ्चित्प्रतिपद्यते प्राक्प्रतिपन्नस्तु द्वयोः स्यात् ॥ ८२७ ॥

आश्रवकरणमाह–

णीसवमाणो जीवो पडिवज्जइ सो चउण्हमण्णयरं । पुव्वपडिवण्णओ पुण सिय आसवओ व णीसवओ ॥८२८॥

निःश्रावयन्–तदावरणं कर्म निर्जरयन्, शेषकर्म बध्नन्नपि जीवः [प्रतिपद्यते चतुर्णामन्यतरत्] प्रतिपन्नकः पुनः स्यादाश्रवको वन्धकः, निःश्रावको वा, निर्वेष्टनस्य कर्मप्रदेशविसङ्घातरूपत्वात् क्रियाकालो गृहीतः, निःश्रवणस्य तु निर्जरारूपत्वान्निष्ठाकालः ॥ ८२८ ॥ अलङ्कारशयनासनस्थानचङ्क्रमणान्याह–

उम्मुक्कमणुम्मुक्के उम्मुंचंते य केसलंकारे । पडिवज्जेज्जऽन्नयरं सयणाईसुंपि एमेव ॥ ८२९ ॥

उन्मुक्ते परित्यक्ते 'अनुन्मुक्ते' अपरित्यक्ते, उन्मुञ्चंश्च केशालङ्कारान्, केशग्रहणं कटककेयूराद्युपलक्षणं, शयनादिष्वप्येवमेव, उन्मुक्तशयनोऽनुन्मुक्तशयनः, उन्मुञ्चन् शयनं चतुर्णामन्यतरत् प्रतिपद्यते प्राक्प्रतिपन्नश्च, एवं शेषयोजनापि ॥ ८२९ ॥ क्केति द्वारं गतं, केष्विति द्वारमाह–

सव्वगयं सम्मत्तं सुए चरित्ते ण पज्जवा सव्वे । देसविरइं पडुच्चा दोण्हवि पडिसेहणं कुज्जा ॥ ८३० ॥

अथ केषु द्रव्येषु पर्यायेषु वा सामायिकं ?, तत्र सर्वगतं सम्यक्त्वं सर्वद्रव्यपर्यायरुचिलक्षणत्वात्तस्य । तथा श्रुते चारित्रे न पर्यायाः सर्वे विषयाः, श्रुतस्याभिलाप्यविषयत्वात्, द्रव्यस्य चाभिलाप्यानभिलाप्यपर्याययुक्तत्वात्, आह–अयं सामायिकविषयः किंद्वारे प्ररूपित एव, किं पुनरभिधानं ?, उच्यते, किं तदिति तत्र सामायिकं जातिमात्रमुक्तं विषयविषयिणोरभेदेन, इह तु सामायिकस्य किंद्वार एव द्रव्यत्वगुणत्वनिरूपितस्य ज्ञेयभावेन विषयाभिधानं ॥ ८३० ॥ केष्विति गतं, कथं पुनः सामायिकमवाप्यते ?, तत्र चतुर्विधमपि मनुष्यादिस्थानावाप्तौ सत्यामवाप्यत इति तत्क्रमदुर्लभतामाह–

माणुस्स खेत्त जाई कुलरूवारोग्गमाउयं बुद्धि । सवणोग्गह सद्धा संजमो लोगंमि दुलहाइं ॥ ८३१ ॥

क्केति द्वारे
अलङ्कार-
शयनासन-
स्थानचङ्क्र-
मणद्वाराणि
केष्विति
द्वारं च
नि० गा०
८२९-८३१

क्षेत्रमार्य, जातिर्मातृसमुत्था, कुलं पितृसमुत्थं, रूपमन्यूनाङ्गता, बुद्धिः परलोकप्रवणा, श्रवणं धर्मसम्बद्धं अवग्रहस्तदवधारणं, संयमो अनवद्यानुष्ठानं, एतानि दुर्लभानि, एतदवाप्तौ च विशिष्टसामायिकलाभः ॥ ८३१ ॥ अथ चैतानि दुर्लभानि—

इंदियलद्धी निव्वत्तणा य पज्जत्ति निरुवहयखेमं । धायारोग्गं सद्धा गाहगउवओग अट्ठो य ॥ १ ॥ (अन्यदीया)

चोल्लग पासग धण्णे जूए रयणे य सुमिण चक्के य । चम्मजुगे परमाणू दस दिट्ठंता मणुयलंभे ॥ ८३२ ॥

इन्द्रियलब्धिः पञ्चेन्द्रियलब्धिः, निर्वर्त्तना चेन्द्रियाणामेव, पर्याप्तिः—स्वविषयग्रहणसामर्थ्यं, निरुपहतेन्द्रियता, क्षेमं विषयस्य, घ्रातं सुभिक्षं, [श्रद्धा भक्तिः] ग्राहको गुरुः, उपयोगः श्रोतुस्तदभिमुखता, अर्थित्वं च धर्मे ॥१॥ भिन्नकर्तृकीयं । जीवो मानुष्यं लब्ध्वा पुनस्तदेव दुःखेन लप्स्यते, बह्वन्तरायान्तरितत्वात्, चोल्लकादिवत्, कं-चोल्लकभोजनं 'चम्म'त्ति शेवालपटलं ॥ ८३२ ॥ युगदृष्टान्तमाह—

पुव्वंते होज्ज जुगं अवरंते तस्स होज्ज समिला उ । जुगछिड्डंमि पवेसो इय संसइओ मणुयलंभो ॥ ८३३ ॥

जलधेः पूर्वान्ते, एवं यथा युगच्छिद्रे प्रवेशः संशयितः, एवं मनुष्यलाभः ॥ ८३३ ॥

जह समिला पब्भट्ठा सागरसलिले अणोरपारंमि । पविसेज्ज जुग्गछिड्डं कहवि भमंती भमंतंमि ॥ ८३४ ॥

प्रविशेत् युगच्छिद्रं कथमपि भ्रमन्ती युगे ॥ ८३४ ॥

सा चंडवायवीचीपणुल्लिया अवि लभेज्ज युगछिड्डं । ण य माणुसाउ भट्ठो जीवो पडिमाणुसं लहइ ॥ ८३५ ॥

सा समिला ॥ ८३५ ॥

कथं सामायिकादिप्राप्तिः दुर्लभस्थानानि युगदृष्टान्तं च
नि० गा० ८३२-८३५

इय दुल्लहलंभं माणुसत्तणं पाविऊण जो जीवो। ण कुणइ पारत्तहियं सो सोयइ संकमणकाले ॥ ८३६ ॥

परत्र हितं – धर्मं, 'सङ्क्रमणकाले' मरणकाले॥ ८३६ ॥

जइ वारिमज्झछूढोव गयवरो मच्छउव्व गलगहिओ। वग्गुरपडिउव्व मओ संवट्टइओ जह व पक्खी ॥ ८३७ ॥

संवर्त्त–जालं इतः प्राप्तो यथा वा पक्षी ॥ ८३७ ॥

सो सोयइ मच्चुजरासमोच्छुओ तुरियणिद्दपक्खित्तो। तायारमविंदंतो कम्मभरपणोल्लिओ जीवो ॥ ८३८ ॥

सोऽकृतपुण्यः, समवसृतो (समास्तृतो) व्याप्तः, त्वरितनिद्राप्रक्षिप्तो, मरणनिद्रयाऽभिभूतः, अविन्दन्–अलभमानः ॥ ८३८ ॥

काऊणमणेगाइं जम्ममरणपरियट्टणसयाइं। दुक्खेण माणुसत्तं जइ लहइ जहिच्छया जीवो ॥ ८३९ ॥

दुःखेन मानुषत्वं लभते जीवः यदि यदृच्छया, कुशलपक्षकारी पुनः सुखेन मृत्वा सुखेनैव लभते ॥ ८३९ ॥

तं तह दुल्लहलंभं विज्जुलयाचंचलं माणुसत्तं। लद्धूण जो पमायइ सो कापुरिसो न सप्पुरिसो ॥ ८४० ॥

मानुष्ये लब्धेऽपि एभिः कारणैर्दुर्लभं सामायिकमित्याह—

आलस्स मोहऽवण्णा थंभा कोहा पमाय किवणत्ता। भयसोगा अण्णाणा वक्खेव कुतूहला रमणा ॥ ८४१ ॥

आलस्यान्न साधुसकाशं गच्छति शृणोति वा, मोहाद्गृहकर्त्तव्यतामूढो वा, अवज्ञातो वा किमेते जानन्तीति, स्तम्भाद्वा जात्याद्यभिमानात्, क्रोधाद्वा, साधुदर्शनादेव कुप्यति। प्रमादान्मद्यादिलक्षणात्, कृपणत्वाद्दातव्यं किञ्चित्, भयान्नरकादि-

भयं वर्णयन्तीति, शोकादिष्टवियोगजात्, अज्ञानात् कुदृष्टिमोहितः, व्याक्षेपाद्बहुकर्त्तव्यतामूढः, कुतूहलान्नटादेः, रमणात् लावकादिखेड्डेन ॥ ८४१ ॥

एतेहिं कारणेहिं लद्धूण सुदुल्लहंपि माणुस्सं । ण लहइ सुतिं हियकरिं संसारुत्तारणिं जीवो ॥ ८४२ ॥

व्रतादियुक्तः कर्मारीन् विजित्य चारित्रसामायिकमाप्नोति यानादियुक्तयोधवज्जयलक्ष्मीमिति, आह–

जाणावरणपहरणे जुद्धे कुसलत्तणं च णीती य । दक्खत्तं ववसाओ सरीरमारोग्गया चेव ॥ ८४३ ॥

यानं हस्त्यादि, आवरणं–कवचादि, प्रहरणं खड्गादि, युद्धे कुशलत्वं च–सम्यग्ज्ञानं, नीतिर्निर्गमप्रवेशरूपा, दक्षत्वमाशुकारित्वं, 'व्यवसायः' शौर्यं, शरीरमविकलं, आरोग्यता, एवंगुणो योधो जयश्रियमाप्नोति, दार्ष्टान्तिकयोजना त्वियं–'जीवो जोहो जाणं वयाणि आवरणमुत्तमा खंती । झाणं पहरणमिट्ठं गीयत्थत्तं च कोसल्लं ॥ १ ॥ दव्वाइजहोवायाणुरूवपडिवत्तिवत्तिया णीति । दक्खत्तं किरियाणं जं करणमहीणकालंमि ॥ २ ॥' द्रव्यादिषु यथोपायं यथालाभमनुरूपप्रतिपत्तिस्तद्वर्त्तिता नीतिः ॥ २ ॥ 'करणं सहणं च तवोवसग्गदुग्गावत्तीए ववसाओ । एतेहिं सुणिरोगो कम्मरिउं जिणति सव्वेहिं ॥ ३ ॥' दुर्गापत्यपि (पत्तावपि) सत्यकरणं तपसः सहनमुपसर्गस्य इत्येष व्यवसायः ॥ ८४३ ॥ अथवा अनेन प्रकारेण सामायिकमाप्नोति–

दिट्ठे सुएऽणुभूए कम्माण खए कए उवसमे अ । मणवयणकायजोगे अ पसत्थे लब्भए बोही ॥ ८४४ ॥

दृष्टे भगवत्प्रतिमादौ श्रेयांसवत्, श्रुते चानन्दकामदेववत्, अनुभूते क्रियाकलापे वल्कलचीरिवत्, कर्मणां क्षये

चण्डकौशिकवत्, उपशमे अङ्गऋषिवत्, मनोवाक्काययोगे च प्रशस्ते लभ्यते बोधिः ॥ ८४४ ॥ अनुकम्पादिभिर्वा अवाप्यते [सामायिकमित्याह]—

अणुकंपऽकामणिज्जर बालतवे दाणविणयविब्भंगे । संयोगविप्पओगे वसणूसवइड्ढि सक्कारे ॥ ८४५ ॥
वेज्जे मेंठे तह इंदणाग कयउण्ण पुप्फसालसुए । सिवदुमहुरवणिभाउय आहीरदसण्णिलापुत्ते ॥ ८४६ ॥

अनुकम्पया जीवः सामायिकं लभते वैतरणीवैद्यवत्, तथाऽकामनिर्जरावान्मिण्ठवत्, यथा वसन्तपुरे इभ्यवधूः दुःशीला, श्वशुरेण दृष्ट्वा नूपुरं गृहीतं, तया कपटेन दिव्यं कृत्वा जनः प्रत्यायितः, श्रेष्ठी चिन्तया रात्रावनिद्रः नृपेणान्तःपुरे रक्षायै स्थापितः, राज्ञी मिण्ठासक्ता ज्ञाता, रुष्टेन राज्ञा राज्ञीमिण्ठौ निर्विषयौ कृतौ, प्रत्यन्तग्रामे शून्यगृहे स्थितौ । राज्ञी चौरेण लग्ना, मिण्ठस्तदपराधात् शूले भिन्नः, श्राद्धेन नमस्कारं ग्राहितो मृतो व्यन्तरोऽभूत्, श्राद्धो रक्षितो, राज्ञी बोधिता च तेन व्यन्तरेण। बालतपोयुक्त इन्द्रनागवत्, सुपात्रप्रयुक्तदानः कृतपुण्यवत्, आराधितविनयः पुष्पशालसुतवत्, अवाप्तविभङ्गज्ञानस्तापसशिवराजर्षिवत् । द्रष्टव्यः (दृष्टद्रव्य) संयोगविप्रयोगो मथुराद्वयवासिवणिग्द्वयवत्, अनुभूतव्यसनो भ्रातृद्वयशकटचक्राहतमल्लण्डीलब्धमानुषत्वस्त्रीगर्भजातप्रियद्वेष्यपुत्रद्वयवत्, अनुभूतोत्सवः आभीरवत्, प्रत्यन्तग्रामे आभीराणि, साधुपार्श्वे स्वर्गसुखश्रवणं, अन्यदा इन्द्रमहे द्वारवत्यामागतानि, उत्सवं दृष्ट्वा प्रतिबुद्धानि प्रव्रजितानि, दृष्टमहर्द्धिर्दशार्णभद्रराजवत्, नृपकृतसत्कारकाङ्क्षिणाप्यलब्धसत्कार इलापुत्रवत् । तत्र वैतरणीवैद्यो वानरोऽभूत्, स साधोः कण्टकमपनीय त्रिदिनानशनेन सहस्रारं गतः ॥ ८४६ ॥ तथाऽऽह–

दृष्टान्तसहितानि अनुकम्पादीनि सामायिकप्राप्तिकारणानि नि० गा० ८४५-८४६

सो वाणरजूहवती कंतारे सुविहियाणुकंपाए । भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥ ८४७ ॥

अथवैतैः सामायिकलाभः—

अब्भुट्ठाणे विणए परक्कमे साहुसेवणाए य । सम्मदंसणलंभो विरयाविरईइ विरईए ॥ ८४८ ॥

अभ्युत्थाने सति सम्यग्दर्शनलाभः स्यात्, तथा विनयेऽञ्जलिप्रग्रहादौ, 'पराक्रमे' कषायजये सति, साधुसेवनायां च सत्यां, विरताविरतेश्च स्यात् ॥ ८४८ ॥ कथमिति गतं, तदित्थं लब्धं सत् कियच्चिरं स्यादित्याह—

सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइं ठिई । सेसाण पुव्वकोडी देसूणा होइ उक्कोसा ॥ ८४९ ॥

शेषयोर्देशविरतिसर्वविरत्योः, जघन्यत आद्यत्रयस्यान्तर्मुहूर्त्तं, सर्वविरतेः समयः, चारित्रपरिणामारम्भे समयान्तरमेवायुष्कक्षयसम्भवात्, देशविरतिप्रतिपत्तिपरिणामस्त्वान्तर्मुहूर्त्तिक एव ॥ ८४९ ॥ अधुना कइत्ति द्वारं, कति (तीति कियन्तः) वर्त्तमानसमये सम्यक्त्वादीनां प्रतिपत्तारः प्राक्प्रतिपन्नाः प्रतिपतिता वेत्याह—

सम्मत्तदेसविरया पलियस्स असंखभागमेत्ता उ । सेढीअसंखभागो सुए सहस्सग्गसो विरई ॥ ८५० ॥

क्षेत्रपलिताऽसङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त उत्कृष्टतः सम्यक्त्वदेशविरत्योरेकदा प्रतिपत्तारः स्युः, किन्तु देशविरतिप्रतिपत्तृभ्यः सम्यक्त्वप्रतिपत्तारो असङ्ख्येयगुणाः, जघन्यत एको द्वौ वा, श्रेण्यऽसङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त एकदा उत्कृष्टतः सामान्यश्रुते-अक्षरात्मके सम्यग्मिथ्यात्वानुगते प्रतिपत्तारः स्युः, जघन्यत एको द्वौ वा, सहस्राग्रशो विरतिमधिकृत्य उत्कृष्टतः प्रतिपत्तारः, जघन्यत एको द्वौ वा ॥ ८५० ॥ प्राक्प्रतिपन्नानिदानीं प्रतिपादयन्नाह—

सम्मत्तदेसविरया पडिवन्ना संपई असंखेज्जा । संखेज्जा य चरित्ते तीसुवि पडिया अणंतगुणा ॥ ८५१ ॥
सुयपडिवण्णा संपइ पयरस्स असंखभागमेत्ता उ । सेसा संसारत्था सुयपरिवडिया हु ते सव्वे ॥ ८५२ ॥

सम्यग्देशविरताः प्रतिपन्नाः वर्त्तमानसमयेऽसङ्ख्येया उत्कृष्टतो जघन्यतश्च, किन्तु जघन्यपदादुत्कृष्टपदे विशेषाधिकाः, एते प्रतिपद्यमानकेभ्योऽसङ्ख्येयगुणाः । अत्रान्तरे द्वितीयगाथापूर्वार्द्धं व्याख्येयं, तत्राक्षरात्मकाऽविशिष्टश्रुतप्रतिपन्नाः साम्प्रतं प्रतराऽसङ्ख्येयभागमात्राः, सङ्ख्येयाश्चारित्रे प्राक्प्रतिपन्नाः, 'त्रिभ्योऽपि' चरणदेशचरणसम्यक्त्वेभ्यः पतिता अनन्तगुणाः प्रतिपद्यमानप्रतिपन्नेभ्यः, तत्र चरणपतिता अनन्ताः, तदसङ्ख्येयगुणास्तु देशविरतिप्रतिपतिताः, तदसङ्ख्येयगुणाश्च सम्यक्त्वप्रतिपतिताः । अत्रान्तरे द्वितीयगाथार्द्धं, शेषाः संसारस्थाः श्रुतप्रतिपतितास्ते सर्वे सम्यक्त्वप्रतिपतितेभ्योऽनन्तगुणाः ॥८५२॥ अन्तरमाह—

कालमणंतं च सुए अद्धापरियट्टओ उ देसूणो । आसायणबहुलाणं उक्कोसं अंतरं होइ ॥ ८५३ ॥

अक्षरात्मकाऽविशिष्टश्रुतस्यान्तरं जघन्यमन्तर्मुहूर्त्तं, उत्कृष्टं त्वेकजीवं प्रति कालोऽनन्त एव, तथा सम्यक्त्वादिषु जघन्यमन्तर्मुहूर्त्तं, उत्कृष्टमपार्द्धपुद्गलपरावर्त्त एव देशोनः ॥ ८५३ ॥ अविरहितद्वारमाह—

सम्मसुयअगारीणं आवलियअसंखभागमेत्ता उ । अट्ठसमया चरित्ते सव्वेसु जहन्न दो समया ॥ ८५४ ॥

'सम्यक्त्वश्रुतागारिणां' सम्यक्त्वश्रुतदेशविरतीनां नैरन्तर्येण प्रतिपत्तिकालः आवलिकाऽसङ्ख्येयभागमात्राः समयाः, तथाष्टौ समयाश्चरित्रे, 'सर्वेषु' सम्यक्त्वादिषु जघन्यतो द्वौ समयौ ॥ ८५४ ॥ अस्य प्रतिपक्षत्वादनुद्दिष्टोऽपि विरहकाल उच्यते—

सुयसम्म सत्तयं खलु विरयाविरईय बारसगं । विरईए पन्नरसगं विरहियकालो अहोरत्ता ॥ ८५५ ॥

प्राक्प्रतिपन्नाः प्रतिपतिताश्च अन्तरअविरहितविरहितकालानि द्वाराणि नि० गा० ८५१-८५५

श्रुतसम्यक्त्वयोरुत्कृष्टः प्रतिपत्तिविरहकालो अहोरात्रसप्तकं, जघन्य एकः समयः; विरताविरतेश्चाहोरात्रद्वादशकं, जघन्यतस्त्रयः समयाः, विरतेरहोरात्रपञ्चदशकं, जघन्यतः समयत्रयं ॥ ८५५ ॥ भवद्वारमाह—

सम्मत्तदेसविरई पलियस्स असंखभागमेत्ताओ । अट्ठभवा उ चरित्ते अणंतकालं च सुयसमए ॥ ८५६ ॥

सम्यक्त्वदेशविरतिमतां [क्षेत्र]पल्योपमस्याऽसङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त उत्कृष्टतः प्रतिपत्तिभवाः, जघन्यतस्त्वेकः, अष्टौ भवाश्चारित्रे, ततः सिद्ध्यति, जघन्य एक एव, अनन्तकालो अनन्तभवरूपः, तं प्रतिपत्ता स्यादुत्कृष्टतः सामान्यश्रुते, जघन्य एकभवमेव, मरुदेवीव ॥ ८५६ ॥ आकर्षद्वारमाह—

तिण्ह सहस्सपुहुत्तं सयप्पुहुत्तं च होइ विरईए । एगभवे आगरिसा एवतिया होंति नायव्वा ॥ ८५७ ॥

आकर्षः प्रथमतया मुक्तस्य वा ग्रहणं, तत्र त्रयाणां सहस्रपृथक्त्वं द्विप्रभृतिरा नवभ्यः, शतपृथक्त्वं च विरतेरेकभवे आकर्षाणामुत्कृष्टतः, जघन्यतस्त्वेक एव ॥ ८५७ ॥

तिण्ह सहस्समसंखा सहसपुहुत्तं च होइ विरईए । णाणभवे आगरिसा एवइया होंति णायव्वा ॥ ८५८ ॥

त्रयाणां हि एकभवे सहस्रपृथक्त्वमाकर्षाणामुक्तं, भवाश्च पल्योपमाऽसङ्ख्येयभागसमयतुल्याः, ततः सहस्रपृथक्त्वं तैर्गुणितं सहस्राण्यसङ्ख्येयानि, तथा विरतेरेकभवे शतपृथक्त्वमाकर्षाणां, भवाश्चाष्टौ, ततः शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं स्यात् ॥ ८५८ ॥ स्पर्शनामाह—

सम्मत्तचरणसहिया सव्वं लोगं फुसे णिरवसेसं । सत्त य चोद्दसभागे पंच य सुयदेसविरइए ॥ ८५९ ॥

सम्यक्त्वा-
देर्निरुक्त-
यः नि०गा०
८६०-८६४

सम्यक्त्वचरणसहिता उत्कृष्टतः सर्वलोकं स्पृशन्ति केवलिसमुद्घातावस्थायां, जघन्यतस्त्वऽसङ्ख्येयभागं, श्रुतसहिताः सप्त चतुर्दशभागाननुत्तरसुरेष्विलिकागत्या समुत्पद्यमानाः, चशब्दात्पञ्च तमःप्रभायां, देशविरत्या सहिताः पञ्च अच्युते उत्पद्यमानाः, चशब्दात् द्व्यादींश्चान्यत्र, अधस्तु ते न गच्छन्त्येव परिणाममपरित्यज्य ॥ ८५९ ॥ क्षेत्रस्पर्शना उक्ता, भावस्पर्शनोच्यते–

सव्वजीवेहिं सुयं सम्मचरित्ताइं सव्वसिद्धेहिं । भागेहिं असंखेज्जेहिं फासिया देसविरईओ ॥ ८६० ॥

सर्वजीवैः सांव्यवहारिकराश्यन्तर्गतैः सामान्यश्रुतं, असङ्ख्येयभागेन तु न स्पृष्टा यथा मरुदेव्या ॥ ८६० ॥ निर्वचनं–क्रियाकारकभेदपर्यायैः शब्दार्थकथनं निरुक्तिः, तत्र सम्यक्त्वस्य तामाह–

सम्मद्दिट्ठि अमोहो सोही सब्भाव दंसणं बोही । अविवज्जओ सुदिट्ठित्ति एवमाई निरुत्ताइं ॥ ८६१ ॥

सम्यग्दृष्टिः, अर्थानामिति गम्यते, अमोहो अवितथग्रहः, शुद्धिः मिथ्यात्वापगमात् ॥ ८६१ ॥ श्रुतस्याह–

अक्खर सन्नी सम्मं सादियं खलु सपज्जवसियं च । गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ॥ ८६२ ॥

देशविरतेराह–

विरयाविरई संवुडसंवुडे बालपंडिए चेव । देसेक्कदेसविरई अणुधम्मो अगारधम्मो य ॥ ८६३ ॥

अणुधर्मो बृहत्साधुधर्मापेक्षया देशविरतिः ॥ ८६३ ॥ सर्वविरतेराह–

सामाइयं समइयं सम्मावाओ समास संखेवो । अणवज्जं च परिण्णा पच्चक्खाणे य ते अट्ठ ॥ ८६४ ॥

समस्य अयः–गमनं समायः स एव सामायिकं, एकान्तोपशान्तिगमनं, सम्यगयः समयः–सम्यग्दयापूर्वकं जीवेषु गमनं,

सोऽस्यास्तीति समयिकं, सम्यग्वादः, शोभनमसनं क्षेपणं समासः, अपवर्गे [ गमनं ] आत्मनः कर्मणो वा जीवात्, संक्षेपः स्तोकाक्षरं सामायिकं महार्थं च, अनवद्यं, परिः–समन्ताज्ज्ञानं परिज्ञा, परिहरणीयवस्तुप्रत्याख्यानं च, एते सामायिकपर्याया अष्टौ ॥ ८६४ ॥ एतेषामर्थानामनुष्ठातॄन् यथासङ्ख्येनाह–

दमदंते मेयज्जे कालयपुच्छा चिलाय अत्तेयं । धम्मरुइ इला तेयलि सामाइए अट्ठुदाहरणा ॥ ८६५ ॥

चिलातः, आत्रेयः ॥ ८६५ ॥ सामायिकमर्थतो दमदन्तेन कृतमित्याह–

निक्खंतो हत्थिसीसा दमदंतो कामभोगमवहाय । णवि रज्जइ रत्तेसुं दुट्ठेसु ण दोसमावज्ज ॥ १५१ ॥ ( भा. )

हस्तिशीर्षान्नगरात् ॥ १५१ ॥ मुनय एवम्भूता एव स्युः, तथा चाऽऽह–

वंदिज्जमाणा न समुक्कसंति हीलिज्जमाणा न समुज्जलंति । दंतेण चित्तेण चरंति धीरा मुणी समुग्घाइयरागदोसा ॥ ८६६

'समुक्कसंति'त्ति समुत्कर्षं यान्ति ॥ ८६६ ॥ तथा–

तो समणो जइ सुमणो भावेण य जइ ण होइ पावमणो । सयणे य जणे य समो समो य माणावमाणेसुं ॥ ८६७ ॥

यदि सुमनाः, 'भावेन च' आत्मपरिणामरूपेण ॥ ८६७ ॥

णत्थि य से कोइ वेसो पिओ व सव्वेसु चेव जीवेसु । एएण होइ समणो एसो अण्णो वि पज्जाओ ॥ ८६८ ॥

नास्ति च 'से' तस्य कोऽपि द्वेष्यः प्रियो वा ॥ ८६८ ॥ सामयिके मेतार्यमाह–

जो कोंचगावराहे पाणिदया कोंचगं तु णाइक्खे । जीवियमणपेहंतं मेयज्जरिसिं णमंसामि ॥ ८६९ ॥

यः क्रौञ्चकापराधे सति क्रौञ्चकमेव नाचष्टे, अपि तु स्वप्राणत्यागं व्यवसितः, तमनुकम्पया जीवितमनपेक्षं मेतार्यऋषिं नमस्ये ॥ ८६९ ॥

निप्फेडियाणि दोण्णिवि सीसावेढेण जस्स अच्छीणि । न य संजमाउ चलिओ मेयज्जो मंदरगिरिव्व ॥ ८७० ॥

'निष्कासिते' क्षितौ पातिते द्वे अपि शिरोबन्धनेन ॥ ८७० ॥ सम्यग्वादमाह–

दत्तेण पुच्छिओ जो जण्णफलं कालओ तुरुमिणीए । समयाए आहिएणं संमं वुइयं भदंतेणं ॥ ८७१ ॥

'दत्तेन' धिग्जातिनृपेण पृष्टः, तुरुमिण्यां पुर्यां तेन समतया आहितेन–गृहीतेनेहलोकभयमनपेक्ष्य सम्यगुदितं भदन्तेन ॥ ८७१ ॥ समासद्वारमाह–

जो तिहि पएहि सम्मं समभिगओ संजमं समारूढो । उवसमविवेयसंवरचिलायपुत्तं णमंसामि ॥ ८७२ ॥

त्रिभिः पदैः उपशमविवेकसंवररूपैः सम्यक्त्वं समभिगतः–प्राप्तः, उपशमादिगुणानन्यत्वाच्चिलातपुत्र एव उपशमविवेकसंवरः, स चासौ चिलातपुत्रश्च तं ॥ ८७२ ॥

अहिसरिया पाएहिं सोणियगंधेण जस्स कीडीओ । खायंति उत्तमंगं तं दुक्करकारयं वंदे ॥ ८७३ ॥

अभिसृताः ॥ ८७३ ॥

धीरो चिलायपुत्तो मूयइंगलियाहिं चालिणिव्व कओ । सो तहवि खज्जमाणो पडिवण्णो उत्तमं अट्ठं ॥८७४॥

अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेणं । देविंदामरभवणं अच्छरगणसंकुलं रम्मं ॥ ८७५ ॥

'मूयइंगलियाहिं' ति कीटिकाभिः ॥ ८७४–८७५ ॥ संक्षेपमाह–

सयसाइस्सा गंथा सहस्स पंच य दिवड्ढमेगं च । ठविया एगसिलोए संखेवो एस णायव्वो ॥ ८७६ ॥

चत्वार ऋषयो लक्षमानान् ग्रन्थान् कृत्वा जितशत्रुमुपस्थिताः, राजा च राज्यव्यासङ्गेन श्रोतुं न ग(इ)च्छति ततः संक्षेप्य चतुर्भिरेकश्लोकश्चक्रे 'जीर्णे भोजनमात्रेयः कपिलः प्राणिनां दया । बृहस्पतिरविश्वासः पञ्चालः स्त्रीषु मार्दवम् ॥ १ ॥' आत्रेय एवमाह–जीर्णे भोजनं कार्यमित्यादि, एवं सामायिकमपि चतुर्दशपूर्वसंक्षेपो वर्त्तते ॥ ८७६ ॥ अनवद्यद्वारमाह–

सोऊण अणाउट्टिं अणभीओ वज्जिऊण अणगं तु । अणवज्जयं उवगओ धम्मरुई णाम अणगारो ॥ ८७७ ॥

जितशत्रुधारिणीसुतधर्मरुचिः, संसारभीरुत्वात् पित्रा समं तापसो जातः । तत्र तापसानाममावास्यायां पुष्पफलाऽछेदरूपा अनाकुट्टिः स्यात् । अन्यदा धर्मरुचिरमावास्यां साधूनटवीं व्रजतो दृष्ट्वा पप्रच्छ–किं युष्माकमनाकुट्टिर्नास्ति ?, तैरूचेऽस्माकं सा यावज्जीवं, ततश्चिन्तनया जातिस्मृतिः क्रमात् प्रत्येकबुद्धोऽभूत् । 'अणभीतो' अणं पापं तद्भीतः, वर्जयित्वा अणं सावद्ययोगं अणवर्ज्यतामुपगतः साधुः संवृत्तः ॥ ८७७ ॥

परिजाणिऊण जीवे अज्जीवे जाणणापरिण्णाए । सावज्जजोगकरणं परिजाणइ सो इलापुत्तो ॥ ८७८ ॥

परिज्ञाय जीवान् अजीवांश्च ज्ञपरिज्ञया 'सावद्ययोगकरणं' परिजानाति–प्रत्याख्याति ॥ ८७८ ॥ प्रत्याख्यानमाह–

पच्चक्खे दट्ठूणं जीवाजीवे च पुण्णपावं च । पच्चक्खाया जोगा सावज्जा तेतलिसुएणं ॥ ८७९ ॥

प्रत्यक्षानिव दृष्ट्वा देवसन्दर्शनेन ॥ ८७९ ॥ गतं निरुक्तिद्वारं, समाप्ता उपोद्घातनिर्युक्तेरवचूर्णिः ॥

अधुना सूत्रं, [ अत्र सूत्रलक्षणगाथासप्तकं-'अप्प०' इत्यादि ]

['अप्पगंथमहत्थं बत्तीसदोसविरहियं जं च । लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहि उववेयं ॥ ८८० ॥
अलियमुवघायजणयं निरत्थयमवत्थयं छलं दुहिलं । निस्सारमधियमूणं पुणरुत्तं वाहयमजुत्तं ॥ ८८१ ॥
कमभिण्णवयणभिण्णं विभत्तिभिन्नं च लिंगभिन्नं च । अणभिहियमपयमेव य सभावहीणं ववहियं च ॥८८२॥
कालजतिच्छविदोसा समयविरुद्धं च वयणमित्तं च । अत्थावत्तीदोसो य होइ असमासदोसो य ॥ ८८३ ॥
उवमारूवगदोसाऽनिद्देस पदत्थसंधिदोसो य । एए उ सुत्तदोसा बत्तीसं होंति णायव्वा ॥ ८८४ ॥
निद्दोसं सारवन्तं च हेउजुत्तमलंकियं । उवणीयं सोवयारं च मियं महुरमेव य ॥ ८८५ ॥
अप्पक्खरमसंदिद्धं सारवं विस्सओमुहं । अत्थोभमणवज्जं च सुत्तं सव्वण्णुभासियं ॥ ८८६ ॥ ]

तच्च ( सूत्रं च ) पञ्चनमस्कारपूर्वं, स चोत्पत्त्याद्यनुयोगद्वारानुसारतो व्याख्येयः, तत्र नमस्कारनिर्युक्तिमाह-

उप्पत्ती निक्खेवो पयं पयत्थो परूवणा वत्थुं । अक्खेव पसिद्धि कमो पओयणफलं नमोक्कारो ॥ ८८७ ॥

उत्पत्तिः नमस्कारस्य नयानुसारतश्चिन्त्या, निक्षेपो न्यासः कार्यः, पदं पदार्थश्च वाच्यः, प्ररूपणा कार्या, वस्तु तदर्हं वाच्यं, आक्षेपः आशङ्का, प्रसिद्धिस्तत्परिहाररूपा, क्रमो अर्हदादिः, प्रयोजनं तद्विषयमेव, अथवा अपवर्गाख्यं, फलं क्रियाऽनन्तरभावि स्वर्गादिकं, नमस्कार एभिर्द्वारैश्चिन्त्यः ॥ ८८७ ॥ उत्पत्तिमाह-

१ इदं गाथासप्तकं अवचूर्ण्यां नास्ति किन्तु हारि० वृत्तौ सटीकंगाथासप्तकं निर्युक्तिगाथात्वेन दर्शितमस्ति अतोऽत्रापि निर्युक्तिगाथाक्रमानुसन्धानार्थं वा तन्मूलमात्रं दर्शितम् ।

उप्पन्नाऽणुप्पन्नो इत्थ नयाऽऽइनिगमस्सऽणुप्पन्नो । सेसाणं उप्पन्नो जइ कत्तो ?, तिविहसामित्ता ॥ ८८८ ॥

कृताकृतादिवत् उत्पन्नानुत्पन्नः, अत्र नयाः प्रवर्त्तन्ते, आदिनैगमस्य सामान्यमात्रावलम्बित्वात् तस्य चोत्पादव्ययरहितत्वान्नमस्कारोऽप्यनुत्पन्नः, शेषाणां विशेषग्राहित्वात् तस्य चोत्पादव्ययवत्वान्नमस्कार उत्पन्नः, सङ्ग्रहस्य विशेषग्राहित्वं नेति नैगमएवान्तर्भावाददोषः । यद्युत्पन्नः, कुतः ? इति आह-त्रिविधस्वामित्वात्त्रिविधकारणात् ॥ ८८८ ॥ तदाह-

समुट्ठाणवायणालद्धिओ य पढमे नयत्तिए तिविहं । उज्जुसुय पढमवज्जं सेसनया लद्धिमिच्छंति ॥ ८८९ ॥

समुत्थानादिभ्यो नमस्कारः समुत्पद्यते, समुत्थानं देहस्य गृह्यते, तदाधारभूतत्वात्तन्नमस्कारकारणं, तद्भावभावित्वात्, वाचना-परतः श्रवणं, सा नमस्कारकारणं, लब्धिः-तदावरणक्षयोपशमलक्षणा, प्रथमे नयत्रिकेऽशुद्धनैगमसङ्ग्रहव्यवहाराख्ये विचार्ये समुत्थानादित्रिविधं नमस्कारकारणं, आह-नैगमसङ्ग्रहौ कथं त्रिविधं कारणमिच्छतः ?, तयोः सामान्यमात्रावलम्बित्वात्, उच्यते, 'आदिनैगमस्सऽणुप्पन्न' इत्यत्रैव प्रथमनयत्रिकात्तयोरुत्कलितत्वान्न दोषः, ऋजुसूत्रः प्रथमवर्जमेवेच्छति, समुत्थानस्य व्यभिचारित्वात्, तद्भावेऽपि वाचनालब्धिशून्यस्यासम्भवात्, शेषनयाः-शब्दादयो लब्धिमेवेच्छन्ति, वाचनाया अपि व्यभिचारित्वात्, सत्यामपि तस्यां लब्धिरहितस्य गुरुकर्मणोऽभव्यस्य वा नैवोत्पद्यते नमस्कारः ॥ ८८९ ॥ निक्षेपश्चतुर्द्धा नामादिभेदात्, [ ज्ञभव्यशरीरातिरिक्तद्रव्यनमस्काराभिधित्सयाऽऽह ]—

निन्हाइ दव्व भावोवउत्तु जं कुज्ज संमदिट्ठी उ । नेवाइयं पयं दव्वभावसंकोयणपयत्थो ॥ ८९० ॥

निह्नवादिर्द्रव्यनमस्कारो नमस्कारनमस्कारवतोरव्यतिरेकात् । नोआगमतो भावनमस्कारो यत्कुर्यादुपयुक्तः सम्य-

ग्दृष्टिः । पदं पञ्चधा–तत्राश्व इति नामिकं, खल्विति नैपातिकं, परीत्यौपसर्गिकं, धावतीत्याख्यातिकं, संयत इति मिश्रं, एवं 'नम' इति नैपातिकं पदं । नम इत्येतत्पूजार्थे 'णम प्रह्वत्वे', द्रव्यभावसङ्कोचनप्रधानः पदार्थो द्रव्यभावसङ्कोचनपदार्थः, तत्र द्रव्यसङ्कोचनं करशिरःपादादिसङ्कोचः, भावसङ्कोचनं विशुद्धमनोयोगः ॥ ८९० ॥ प्ररूपणामाह–

दुविहा परूवणा छप्पया य नवहा य छप्पया इणमो । किं कस्स केण व कहिं किचिरं कइविहो व भवे ॥ ८९१ ॥

षट्पदा नवधा–नवपदा च, चशब्दात्पञ्चपदा च, किं? कस्य? केन वा? क्व वा? कियच्चिरं? कतिविधो [वा] भवेन्नमस्कारः ॥ ८९१ ॥ आद्यद्वारमाह–

किं? जीवो तप्परिणओ (दा० १) पुव्वपडिवन्नओ उ जीवाणं । जीवस्स व जीवाण व पडुच्च पडिवज्जमाणं तु ॥८९२॥

किंशब्दोऽत्र प्रश्ने, अयं च प्राकृतेऽलिङ्गः, [किं सामायिकं?] को नमस्कारः?, तत्र नैगमाद्यशुद्धनयानां जीवस्तज्ज्ञान-लब्धियुक्तो योग्यो वा नमस्कारः, शब्दादिशुद्धनयमतेन तत्परिणतो जीवो नमस्कारः । कस्येत्याह–पूर्वप्रतिपन्न एव यदा अधिक्रियते तदा व्यवहारनयमाश्रित्य जीवानां बहुजीवस्वामिक इत्यर्थः, प्रतिपद्यमानं तु प्रतीत्य जीवस्य वा जीवानां वा ॥ ८९२ ॥ केनेत्याह–

नाणावरणिजस्स य दंसणमोहस्स तह खओवसमे (दा० ३) । जीवमजीवे अट्ठसु भंगेसु उ होइ सव्वत्थ ॥८९३॥ 

मतिश्रुतज्ञानावरणीयस्य सम्यग्दर्शन [साहचर्याज्ज्ञानस्य दर्शन] मोह[नीय]स्य च क्षयोपशमेन साध्यते नमस्कारः । केत्याह–जीवे अजीवे इत्याद्यष्टसु भङ्गेषु स्यात्सर्वत्र, तथाहि–'जीवस्स सो जिणस्स उ १ अजीवस्स उ जिणिंदपडिमाए २ ।

जीवाण जईणं पिव ३ अजीवाणं तु पडिमाणं ४ ॥ १ ॥ जीवस्साजीवस्स य जइणो बिंबस्स चेगतो समयं ५ । जीवस्साजीवाण य जइणो पडिमाण चेगत्थं ६ ॥ २ ॥ जीवाणमजीवस्स य जईण बिंबस्स चेगओ समयं ७ । जीवाणमजीवाण य जईण पडिमाण चेगत्थं ८ ॥ ३ ॥' ८९३ ॥ कियच्चिरमसौ स्यादित्याह–

उवओग पडुच्चंतोमुहुत्त लद्धीइ होइ उ जहन्नो । उक्कोसठिइ छावट्ठि सागरा ( दा० ५ ) ऽरिहाइ पंचविहो ॥ ८९४ ॥

उपयोगं प्रतीत्यान्तर्मुहूर्त्तं स्थितिः जघन्यतः उत्कृष्टतश्च, क्षयोपशमस्य च जघन्या स्थितिरन्तर्मुहूर्त्त एव, उत्कृष्टस्थितिर्लब्धेः षट्षष्टिसागरोपमाणि, एकं जीवं प्रतीत्यैषा, नानाजीवान् पुनरधिकृत्योपयोगापेक्षया जघन्यत उत्कृष्टतश्चैवैव, लब्धितः सर्वकालं । कतिविधो वा इत्याह–अर्हदादिपञ्चविधः ॥ ८९४ ॥ नवपदामाह–

संतपयपरूवणया[1] दव्वपमाणं[2] च खित्त[3] फुसणा[4] य । कालो[5] अ अंतरं[6] भाग[7] भाव[8] अप्पाबहुं[9] चेव ॥ ८९५ ॥

सत्पदप्ररूपणा कार्या, नमस्कारो जीवद्रव्यादभिन्नोऽतो द्रव्यप्रमाणं वक्तव्यं, क्षेत्रमिति कियति क्षेत्रे नमस्कारः ?, एवं स्पर्शना कालोऽन्तरं च वक्तव्यं, भाग इति नमस्कारवन्तः शेषजीवानां कतिथे भागे वर्त्तन्ते, भावेऽपि कस्मिन् ?, अल्पबहुत्वं वक्तव्यं, प्राक्प्रतिपन्नप्रतिपद्यमानकापेक्षया ॥ ८९५ ॥ आद्यद्वारमाह–

संतपयं पडिवन्ने पडिवज्जंते य मग्गणं गइसु[1] । इंदिय[2] काए[3] वेए[4] जोए[5] अ कसाय[6] लेसासु[7] ॥ ८९६ ॥
सम्मत्त[8] नाणं[9] दंसण[10] संजय[11] उवओगओ[12] अ आहारे[13] । भासग[14] परित्त[15] पज्जत्त[16] सुहुमे[17] सन्नी[18] अ भव[19] चरमे[20] ॥ ८९७ ॥

इदं गाथाद्वयं पीठिकायां व्याख्यातं ॥ ८९६–८९७ ॥ अनुक्तद्वारत्रयमाह–

पलिआसंखिज्जइमे पडिवन्नो हुज्ज ( दा० २ ) खित्तलोगस्स ।
सत्तसु चउदसभागेसु हुज्ज ( दा० ३ ) फुसणावि एमेव ॥ ८९८ ॥

सूक्ष्मक्षेत्रपल्योपमस्यासङ्ख्येयभागे यावन्तः प्रदेशा एतावन्तो नमस्कारप्रतिपन्नाः ॥ द्वारं ॥ ऊर्द्ध्वं क्षेत्रलोकस्य सप्तसु चतुर्दशभागेषु स्यादधः पञ्चसु, स्पर्शनाप्येवमेव, नवरं पर्यन्तवर्त्तिनोऽपि प्रदेशान् स्पृशति ॥ ८९८ ॥ कालमाह—

एगं पडुच्च हिट्ठा तहेव नाणाजिआण सव्वद्धा ( दा० ५ )। अंतर पडुच्च एगं जहन्नमंतोमुहुत्तं तु ॥ ८९९ ॥

एकं जीवं प्रतीत्याधस्तात् षट्पदप्ररूपणायां यथा काल उक्तस्तथैव [ ज्ञातव्यः, नानाजीवानधिकृत्य ] सर्वाद्धा वाच्या, एकं प्रतीत्यान्तरं जघन्यमन्तर्मुहूर्तं ॥ ८९९ ॥

उक्कोसेणं चेयं अद्धापरिअट्टओ उ देसूणो। णाणाजीवे णत्थि उ ( दा० ६ ) भावे य भवे खओवसमे (दा० ८) ॥ ९०० ॥

नानाजीवान् प्रतीत्य नास्त्यन्तरं सदाऽव्यवच्छिन्नत्वात्तस्य । भावे च भवेत् क्षयोपशमे, प्राचुर्यमङ्गीकृत्यैवमुक्तं, अन्यथा क्षायिकौपशमिकयोरपि, क्षायिके श्रेणिकादीनां, औपशमिके श्रेण्यन्तर्गतानां ॥ ९०० ॥ भागमाह—

जीवाणऽणंतभागो पडिवण्णो सेसगा अणंतगुणा ( दा० ७ )। वत्थुं तऽरिहंताइ पञ्च भवे तेसिमो हेऊ ॥ ९०१ ॥

अल्पबहुत्वं यथा पीठिकायां मत्यधिकारे । साम्प्रतं चशब्दाक्षिप्तां पञ्चविधप्ररूपणामनुक्त्वा वस्तुद्वारमाह—वस्तु द्रव्यं योग्यं, नमस्कारार्हा अर्हदादयः पञ्च, तेषां वस्तुत्वेन नमस्कारार्हत्वे अयं [ वक्ष्यमाणः ] हेतुः ॥ ९०१ ॥ अधुना पञ्चविध-प्ररूपणामाह—

आरोवणा य भयणा पुच्छा तह दायणा य निज्जवणा। नमुक्कारऽनमुक्कारे नोआइजुए व नवहा वा ॥ ९०२ ॥

किं जीव एव नमस्कार? आहोस्विन्नमस्कार एव जीवः? इत्येवं परस्परमवधारणं आरोपणा, तथा जीव एव नमस्कारः, जीवस्त्वनवधारितः, नमस्कारो वा स्यादनमस्कारो वा, एषा एकपदव्यभिचाराद्भजना। इत्थं भजनायां किंविशिष्टो जीवो नमस्कारः? किंविशिष्टस्त्वनमस्कार इति पृच्छा, अत्रोत्तरं दापना–नमस्कारपरिणतो जीवो नमस्कारो नाऽपरिणतः, निर्यापना त्वेष एव नमस्कारपर्यायपरिणतो जीवो नमस्कारः, नमस्कारोऽपि जीवपरिणाम एव नाऽजीवपरिणामः, अयमर्थः–दापना प्रश्नार्थव्याख्यानं निर्यापना तस्यैव निर्गमनं, अथवा इयमन्या चतुर्विधा प्ररूपणा, तत्र नमस्कारस्तत्परिणतो जीवः, अनमस्कारस्त्वपरिणतो लब्धिशून्यो वा, नोआदियुक्तो वा नमस्कारोऽनमस्कारश्च, तत्र नोनमस्कारो नमस्कारदेशोऽनमस्कारो वा, देशसर्वनिषेधपरत्वान्नोशब्दस्य, नोअनमस्कारोऽपि अनमस्कारदेशो नमस्कारो वा। प्रागुक्ता पञ्चविधा इयं चतुर्विधा च मीलिता सती नवविधा प्ररूपणा ॥ ९०२ ॥ यदुक्तं 'तेषां वस्तुत्वेऽयं हेतुः, तमाह–

मग्गे अविप्पणासो आयारे विणयया सहायत्तं। पंचविहनमुक्कारं करेमि एएहिं हेऊहिं ॥ ९०३ ॥

मार्गः अविप्रणाशः आचारः विनयता सहायत्वं, अयमर्थः–अर्हतां नमस्कारार्हत्वे मार्गः–सम्यग्दर्शनादिरूपो हेतुः, यस्मादसौ तैः प्रदर्शितस्तस्माच्च मुक्तिरिति पूज्यास्ते। सिद्धानां त्वविप्रणाशः–शाश्वतत्वं हेतुः, तदविप्रणाशमवगम्य प्राणिनो मोक्षाय घटन्ते। आचार्याणामाचार एव, तानाचारवत आचारख्यापकांश्च प्राप्य प्राणिन आचारपरिज्ञानानुष्ठानाय यतन्ते। उपाध्यायानां विनयः, तान् स्वयं विनीतान् प्राप्य कर्मविनयनसमर्थविनयवन्तः स्युः। साधवः सिद्ध्यवाप्तिक्रियासाहाय्य-

मनुतिष्ठन्ति ॥ ९०३ ॥ एवं समासेनार्हदादीनां मार्गप्रणयनादयो गुणा उक्ताः, अथ प्रपञ्चेनार्हतां तानाह–

अडवीइ देसिअत्तं तहेव निज्जामया समुद्दंमि । छक्कायरक्खणट्ठा महगोवा तेण वुच्चंति ॥ ९०४ ॥

देशकत्वं कृतमर्हद्भिः, षट्कायरक्षणार्थं यतः प्रयत्नं चक्रुः ॥ ९०४ ॥ आद्यद्वारमाह–

अडविं सपच्चवायं वोलित्ता देसिओवएसेणं । पावंति जहिट्ठपुरं भवाडविंपी तहा जीवा ॥ ९०५ ॥

पावंति निव्वुइपुरं जिणोवइट्ठेण चेव मग्गेणं । अडवीइ देसिअत्तं एवं नेयं जिणिंदाणं ॥ ९०६ ॥

जह तमिह सत्थवाहं नमइ जणो तं पुरं तु गंतुमणो । परमुवगारित्तणओ निव्विग्घत्थं च भत्तीए ॥ ९०७ ॥

अरिहो उ नमुक्कारस्स भावओ खीणरागमयमोहो । मुक्खत्थीणंपि जिणो तहेव जम्हा अओ अरिहा ॥ ९०८ ॥

संसाराअडवीए मिच्छत्तऽन्नाणमोहिअपहाए । जेहिं कयं देसिअत्तं ते अरिहंते पणिवयामि ॥ ९०९ ॥

सम्मदंसणदिट्ठो नाणेण य सुट्ठु तेहिं उवलद्धो । चरणकरणेण पहओ निव्वाणपहो जिणिंदेहिं ॥ ९१० ॥

षडपि गाथाः सुगमाः । निर्वृतिपुरं प्राप्ता इत्याह–

सिद्धिवसहिमुवगया निव्वाणसुहं च ते अणुप्पत्ता । सासयमव्वाबाहं पत्ता अयरामरं ठाणं ॥ ९११ ॥

द्वितीयद्वारमाह–

पावंति जहा पारं सम्मं निज्जामया समुद्दस्स । भवजलहिस्स जिणिंदा तहेव जम्हा अओ अरिहा ॥ ९१२ ॥

प्रापयन्ति अतोऽर्हा नमस्कारस्य ॥ ९१२ ॥

मिच्छत्तकालियावायविरहिए सम्मत्तगज्जभपवाए । एगसमएण पत्ता सिद्धिवसहिपट्टणं पोया ॥ ९१३ ॥

कालिकावातोऽसाध्यः गर्जभस्त्वनुकूलः । पोता जीवबोहित्थाः ॥ ९१३ ॥

निज्जामगरयणाणं अमूढनाणमइकण्णधाराणं । वंदामि विणयपणओ तिविहेण तिदंडविरयाणं ॥ ९१४ ॥

निर्यामकरत्नेभ्यः, अमूढज्ञानमतिरेव कर्णधारो येषां ते तथा तेभ्यः ॥ ९१४ ॥ तृतीयद्वारमाह–

पालंति जहा गावो गोवा अहिसावयाइदुग्गेहिं । पउरतणपाणिआणि अ वणाणि पावंति तह चेव ॥ ९१५ ॥

जीवनिकाया गावो जं ते पालंति ते महागोवा । मरणाइभयाउ जिणा निव्वाणवणं च पावंति ॥ ९१६ ॥

तो उवगारित्तणओ नमोऽरिहा भविअजीवलोगस्स । सव्वस्सेह जिणिंदा लोगुत्तमभावओ तह य ॥ ९१७ ॥

नमोऽर्हाः, एवं नमोऽर्हत्वे हेतवो गुणाः उक्ताः, सम्प्रति प्रकारान्तरेणाह–

रागद्दोसकसाए इंदिआणि अ पंचवि । परीसहे उवसग्गे नामयंता नमोऽरिहा ॥ ९१८ ॥

नामयन्तो नमोऽर्हाः ॥ ९१८ ॥ प्राकृतशैल्या अनेकधा अर्हच्छब्दनिरुक्तिसम्भव इत्याह–

इंदियविसयकसाए परीसहे वेयणा उवस्सग्गे । एए अरिणो हंता अरिहंता तेण वुच्चंति ॥ ९१९ ॥

वेदना त्रिधा–शारीरी मानसी उयभरूपा च, एतेषामरीणां हन्तारो यतो अरिहन्तारस्तेनोच्यन्ते । अनन्तरगाथायां नमोऽर्हत्वे हेतुत्वेनोक्ता एते, अत्र निरुक्त्यर्थम् ॥ ९१९ ॥ अथ प्रकारान्तरेणास्य उच्यन्ते–

अट्ठविहंपि य कम्मं अरिभूअं होइ सव्वजीवाणं । तं कम्ममरिं हंता अरिहंता तेण वुच्चंति ॥ ९२० ॥

तथा–

अरिहंति वंदणनमंसणाइं अरिहंति पूअसक्कारं। सिद्धिगमणं च अरिहा अरहंता तेण वुच्चंति ॥ ९२१ ॥

वन्दनं शिरसा, वस्त्रमाल्यादिजन्या पूजा, अभ्युत्थानादिः सत्कारः, तथा सिद्धिगमनं च प्रत्यर्हाः, अर्हन्तः ॥ ९२१ ॥

देवासुरमणुएसुं अरिहा पूआ सुरुत्तमा जम्हा। अरिणो हंता रयं हंता अरिहंता तेण वुच्चंति ॥ ९२२ ॥

देवासुरमनुजेभ्यः पूजामर्हन्ति तद्योग्यत्वात्, सुरोत्तमत्वात्, रजो वध्यमानं कर्म ॥ ९२२ ॥ फलमाह–

अरहंतनमुक्कारो जीवं मोएइ भवसहस्साओ। भावेण कीरमाणो होइ पुण बोहिलाभाए ॥ ९२३ ॥

सहस्रशब्दोऽत्रानन्तसङ्ख्यायां ॥ ९२३ ॥

अरिहंतनमुक्कारो धन्नाण भवक्खयं कुणंताणं। हिअयं अणुम्मुअंतो विसुत्तियावारओ होइ ॥ ९२४ ॥

अपध्यानं विस्रोतसिका ॥ ९२४ ॥

अरहंतनमुक्कारो एवं खलु वण्णिओ महत्थुत्ति। जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ ९२५ ॥

मरणे, उपाग्रे–समीपभूते ॥ ९२५ ॥

अरिहंतनमुक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ ९२६ ॥

सिद्धनिक्षेपश्चतुर्दशविधः, तत्र नामस्थापनाद्रव्यसिद्धं(द्धान्) व्युदस्य शेषनिक्षेपमा(पाना)ह–

कम्मे सिप्पे अ विज्जाय, मंते जोगे अ आगमे। अत्थ जत्ता अभिप्पाए तवे कम्मक्खए इय ॥ ९२७ ॥

कर्मसिद्धः—कर्मणि निष्ठां गतः, एवं शिल्पसिद्धादयः ॥ ९२७ ॥ नामस्थापने सुगमे द्रव्यसिद्धो निष्पन्न ओदनः सिद्ध इत्युच्यते, कर्मसिद्धादीनाह—

कम्मं जमणायरिओवएसयं सिप्पमन्नहाऽभिहिअं । किसिवाणिज्जाईयं घडलोहाराइभेअं च ॥ ९२८ ॥

कर्म यदनाचार्योपदेशजं सातिशयमनन्यसाधारणं गृह्यते, शिल्पमन्यथाभिहितं, यदाचार्योपदेशजं ग्रन्थनिबन्धाद्वोपजायते सातिशयं कर्मापि तच्छिल्पं, भारवहनकृषिवाणिज्यादि कर्म, घटकारलोहकारादिभेदं च शिल्पं ॥ ९२८ ॥

जो सव्वकम्मकुसलो जो वा जत्थ सुपरिनिट्ठिओ होई । सज्झगिरिसिद्धओविव स कम्मसिद्धत्ति विन्नेओ ॥९२९॥

यो वा यत्र कर्मणि सुपरिनिष्ठितः स्यादेकस्मिन्नपि सह्यगिरिसिद्धिक इव स कर्मसिद्धः, कुङ्कु(कोङ्कण)देशे सह्यगिरिः तस्योपर्येकं दुर्गं तद्वासिनां पण्यानि तत उत्तरायतामारोहयतां च राज्ञा मार्गसंवलनं दत्तं, इतः सैन्धवो मुनिर्दीक्षापराजितो भारवाहकमुख्यो जातः, तं मुनेर्मार्गं ददतं दृष्ट्वा अन्यै राज्ञो न्यवेदि, मुनिस्वरूपकथनपूर्वकं राजा प्रत्यबोधि, स्वयं च निष्क्रान्तः, अयं कर्मसिद्धः ॥ ९२९ ॥

जो सव्वसिप्पकुसलो जो वा जत्थ सुपरिनिट्ठिओ होइ । कोकासवड्ढईविव साइसओ सिप्पसिद्धो सो ॥ ९३० ॥

कोकाशवार्द्धत(र्द्धकि)वत् सातिशयः, कोकाश आकाशगामिकपोतगरुडादिविधाता ॥ ९३० ॥

इत्थी विज्जाऽभिहिया पुरिसो मंतुत्ति तव्विसेसोयं । विज्जा ससाहणा वा साहणरहिओ अ मंतुत्ति ॥ ९३१ ॥

विज्जाण चक्कवट्टी विज्जासिद्धो स जस्स वेगावि । सिज्झिज्ज महाविज्जा विज्जासिद्धऽज्जखउड्डव्व ॥ ९३२ ॥

आर्यखपुटवत्, गुडशस्त्रपुरे परिव्राजकः साधुभिर्वादे जितः, मृत्वा व्यन्तरः साधुद्वेषी, आगत्यार्यखपुटैः प्रतिबोधितः । भागिनेयो भरुकच्छे बौद्धमिलितो विद्याभिराहारमानयति तेषां तत्र गमने स नष्टो बौद्धप्रासादो नतः ॥ ९३२ ॥

साहीणसव्वमंतो बहुमंतो वा पहाणमंतो वा । नेओ स मंतसिद्धो खंभागरिसुव्व साइसओ ॥ ९३३ ॥

स्तम्भाकर्षवत्, एकेन राज्ञा साध्वी अन्तःपुरे क्षिप्ता, सङ्घसमवाये कृते मन्त्रसिद्धेन साधुना मण्डपस्तम्भाकर्षणेन भापितः सः, ततो मुक्ता ॥ ९३३ ॥

सव्वेवि दव्वजोगा परमच्छेरयफलाऽहवेगोऽवि । जस्सेह हुज्ज सिद्धो स जोगसिद्धो जहा समिओ ॥ ९३४ ॥

आर्यसमिता ब्रह्मद्वीपनिवासितापसप्रतिबोधकः ॥ ९३४ ॥

आगमसिद्धो सव्वंगपारओ गोअमुव्व गुणरासी । पउरत्थो अत्थपरो व मम्मणो अत्थसिद्धत्ति ॥ ९३५ ॥

प्रचुरार्थः अर्थपरो वा, तन्निष्ठः ॥ ९३५ ॥

जो निच्चसिद्धजत्तो लद्धवरो जो व तुंडियाइव्व । सो किर जत्तासिद्धोऽमिप्पाओ बुद्धिपज्जाओ ॥ ९३६ ॥

लब्धवरो यो वा तुण्डिकादिवत् । एकस्मिन् ग्रामे तुण्डिको वणिक्, अनेकशस्तस्याब्धौ प्रवहणं भग्नं तथापि स न भग्नः, प्रसन्नदेवेन बहुद्रव्यं दत्तं, स यात्रासिद्धः ॥ ९३६ ॥

विउला विमला सुहुमा जस्स मई जो चउव्विहाए वा । बुद्धीए संपन्नो स बुद्धिसिद्धो इमा सा य ॥ ९३७ ॥

'विपुला' एकपदेनानेकपदानुसारिणी 'विमला' संशयादिरहिता 'सूक्ष्मा' सूक्ष्मार्थगोचरा यस्यैवम्भूता बुद्धिः स बुद्धिसिद्धः ॥ ९३७ ॥

उप्पत्तिआ वेणइआ कम्मिआ पारिणामिआ । बुद्धी चउव्विहा वुत्ता पंचमा नोवलब्भए ॥ ९३८ ॥

उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी, क्षयोपशमः प्रयोजनं त्वन्तरङ्गत्वात्सर्वबुद्धिसाधारण इति न विवक्ष्यते ॥ ९३८ ॥ एतल्लक्षणमाह–

पुव्वमदिट्ठमस्सुअमवेइअ तक्खणविसुद्धगहिअत्था । अव्वाहयफलजोगिणि बुद्धी उप्पत्तिआ नाम ॥ ९३९ ॥

पूर्वमदृष्टोऽन्यतश्चाश्रुतो अवेदितो मनसाप्यनालोचितः, तस्मिन्नेव क्षणे विशुद्धो–यथावस्थितो गृहीतो अर्थो यया सा तथा, अव्याहतफलेन योगो यस्याः सा तथा ॥ ९३९ ॥ अस्या उदाहरणान्याह–

भरहसिल[1] पणिअ[2] रुक्खे[3] खुड्डग[4] पड[5] सरड[6] काग[7] उच्चारे[8] । गय[9] घयण[10] गोल[11] [12]खंभे खुड्डग[13] मग्गित्थि[14] पइ[15] पुत्ते[16] ॥ ९४० ॥

उज्जयिन्या आसन्नग्रामे एको भरतो नटस्तत्सुतो रोहकः, स पित्रा सह पूर्यां गत्वा प्रत्यावृत्तः, नदीपुलिने तल्लिखितपुरीमध्ये गच्छन् अश्वारूढो नृपो वारितश्चमत्कृतः । तस्य बुद्धिपरीक्षार्थं शिलायाः प्रासादः १ मेषस्तादृक्तनुः २ अन्यं विना कुर्कुटयोधनं ३, तिलैः समं तैलं देयं ४, वालुकावरहः (दवरकः) ५, जीर्णहस्तिनः प्रतिदिनं शुद्धिः कथ्या न मृतिः ६, कूपानयनं ७, पूर्वारामः प्रतीच्यां कार्यः ८ अग्निं विना क्षैरेयीपचनं ९, यथाक्रमं अधः खनित्वा स्तम्भदानेन १ चित्रकदर्शनेन २ आदर्शेन ३ आदर्शमानेन ४ वालुकावरह (कादवरक) प्रतिच्छन्दानयनेन ५ अचरणाचलाद्युक्त्या ६ पुरकूपानयनेन ७ पूर्वस्यां

औत्पत्तिक्यादि बुद्धयः औत्पत्तिकी बुद्धेरुदाहरणानि च नि० गा० ९३८-९४०

ग्रामवासेन ८ करीपोष्मणा ९ सर्वं तेन चक्रे, ततो नृपेण मीलनायाहूतः परं न भुक्तो न बुभुक्षित इत्यादि, स फलमात्रं भक्षयित्वा अङ्गक्षालनं कृत्वा चक्रमध्यभूम्यां चालनीच्छादितशिरा एडकारूढोऽमावास्यायां नृपं मृत्खण्डेन भेटितवान् । रात्रौ जागर्षीति पृष्टे जागर्मि परं चिन्तयन्नस्मि, राज्ञोक्तं किं ?, यामक्रमेण पिप्पलपत्रे वृन्तशिखयोः किं प्रलम्बं ? १, अजाविष्टायां कथं वृत्तत्वं २ ?, खल्वादिकायाः ( खाठहिलायाः ) श्वेतकृष्णपटयोर्देहपुच्छयोश्च किमधिकं ३ ?, पञ्चपितृत्वं तवेति ४, एषामुत्तरं—समत्वं १, संवर्त्तकात् २, द्वयोस्तुल्यत्वं ३, पिता एको राजा न्यायात्पालनात् १ धनदो दानात् २ श्वपचो रोषात् ३ अपराधे सर्वस्वाऽऽदानात् रजकः ४ मम सुप्तस्य कम्बिकया घट्टनाद् वृश्चिकः ५, माता पृष्टा, सत्योक्तौ—राज्ञा तुष्टेन पञ्चशतामात्येषु मुख्यः कृतः, एष औत्पत्तिकीबुद्धिमान् ॥ १ ॥ 'पणिअ' त्ति—एकः प्राह य एतान् शर्कटिचिर्भटान् सर्वान् खादति तस्य प्रत्योल्ययायिमोदकं ददामीत्येकेन धूर्त्तेन ईषदीषद्भक्षयित्वा मुक्तानि, अन्यजनः खद्धानीति न गृह्णाति धूर्त्तो द्रव्यशतदाने अपि मोदकमेव याचते, द्यूतकार आराद्धस्तद्बुद्ध्या प्रतोल्यां मोदको मुक्तो याहि याहीत्युक्तेऽयाति गृहाणेति धर्षितो धूर्त्तः २ । 'रुक्खे'त्ति वृक्षफलानि मर्कटा न ददति, पाषाणैर्हतास्ते आम्रफलान्यदुः ३ 'खुड्डग'त्ति मुद्रिकारत्ने श्रेणिकेन धीपरीक्षार्थं कूपे क्षिप्ते गोमयेनाहत्याग्निना शोषिते प्रतिकूपजलेन मृते तटस्थेन लात्वाऽभयेनामात्यपदमाप्तं ४ । 'पड'त्ति द्वयोर्नद्यन्तः स्नातयोरेकस्मिन् पूर्वं निर्गत्य भव्यपटं लात्वा गते वादे कारणिकैस्तद्भार्यया कर्त्तितसूत्रानुसारेण निर्णीय स्वामिनः पटोऽर्पितः ५ । 'सरड'त्ति श्रेष्ठिनः संज्ञां व्युत्सृजतोऽध आगत्य एकः सरटो बिलं प्रविष्टः, सोऽपानप्रवेशशङ्कया दुर्बलोऽभूत्, वैद्येन विरेचे [ दत्ते घटे ] क्षिप्त्वा विष्टान्तः सरटे अन्यस्मिन्दर्शिते पटुश्चक्रे ६ । 'काए'त्ति बौद्धेन क्षुल्लकः पृष्टः सर्वज्ञपुत्रोऽसीति अत्र वेन्नातटे

कति काकाः ?, सोऽवदत् षष्टिसहस्राः, यद्यधिकास्तदा प्राघुणा यद्यूनास्ततो ग्रामं गताः, यद्वा भागवतेन काकं विष्ठां विकिरतं दृष्ट्वा क्षुल्लकः पृष्टः किमीक्षतेऽयं ?, स आह जले विष्णुरित्यादि ७। 'उच्चारे'त्ति विप्रभार्या ग्रामे यान्ती धूर्त्तासक्ता, व्यवहारे पृथक् पृष्ट्वा आहारे विरेचनं दत्तं तिलमोदकज्ञानात् धूर्त्तो निर्धाटितः ८। 'गए'ति नद्यन्तरेकेन नावमारोप्य राज्ञो हस्तिनो रेखां कृत्वोत्तार्य दृषद्भिर्नौस्तावद्भृता, तत्तोलने गजस्य भारज्ञानं, नृपेण मन्त्री चक्रे ९। घयणो—भाण्डः, राजा देव्या गुणान् गृह्णाति निरामयेति, स आह पुष्पाणि यदा वः समर्प्पयति, राज्ञा हसितं, निर्बन्धे उक्तं, देव्या स निर्विषय आदिष्ट उपानहभारेणोपस्थितः, उड्डाहभीरुत्वात्तया स्थापितः, भाण्डस्य धीः १०। गोलो जतुमयो नसि प्रविष्टस्तप्तशलाकयाऽऽकृष्टः, ऋष्टुधीः ११। स्तम्भं सरोऽन्तस्थं यस्तटस्थो बध्नाति तस्य नृपो लक्षं दत्ते, केनापि तटे कीलं न्यस्य गुणेन वेष्टयित्वा बद्धोऽमात्यः सोऽभूत् १२। क्षुल्लकः—परिव्राजिका प्राह—यो यत्करोति तन्मया कार्यं कुशलकर्म, पटहं निवार्य क्षुल्लो राजकुले कायिक्या पद्ममालिखत् सा तत्करणाऽशक्ता जिता १३। एको भार्यां गृहीत्वा ग्रामं याति, सा शरीरचिन्तार्थमुत्तीर्णा, तद्रूपमोहिता व्यन्तरी काचिदारूढा शकटं, पश्चात् प्रिया रुदत्याऽऽगता कारणिकैरुक्तं या तवाऽऽगच्छतः शीघ्रं बाहुना स्पृक्ष्यति सा पत्नी, व्यन्तर्या तथाकृतं ज्ञातं व्यन्तरीति १४। 'पइ'त्ति द्वयोर्भ्रात्रोरेका भार्या, लोके समस्नेहा, अमात्येनोक्तमेवं न स्यात् तत्प्रियाया लेखो दत्तः एकः प्राच्यामन्यः प्रतीच्यां प्रहेयस्तद्दिन एवाऽऽगतव्यं, यः प्राच्यां प्रहितः स द्वेष्यः १५। 'पुत्ते'त्ति एको वणिग् द्विभार्योऽन्यराज्यं गतो मृतः, एकस्याः पुत्रः स विशेषं न जानाति, व्यवहारेऽमात्येनोक्तं द्रव्यं विभज्य पुत्रस्याप्यर्द्धं क्रियतां, मात्रा न मतं, तस्याः पुत्रो जातः १६ ॥ ९४० ॥

मरहंसिल मिंढ कुकुड तिल वालुअ हत्थि अगड वणसंडे । पायस अइआ पत्ते खाडहिला पंचपिअरो अ ॥ ९४१ ॥

उक्तार्था ॥ ९४१ ॥

महुसित्थ मुद्दि अंके अ नाणए भिक्खु चेडगनिहाणे । सिक्खा य अत्थसत्थे इच्छा य महं सयसहस्से ॥ ९४२ ॥

मधुसिक्थके कापि कोलिनी जालिमध्ये रतिस्थितोपरि भ्रामरं दृष्टवती, कार्ये मधु क्रीणन् भर्त्ता निषिद्धोऽहं ते दर्शयामि, जालिमध्ये तथास्थया दर्शितं मधु ज्ञाताऽनेनाऽसती १७ । 'मुद्दिअ'त्ति-पुरोहितो निक्षेपकान् लात्वा अन्येषामर्पयति, अन्यदा द्रमकस्य स्थापितं न दत्ते, रावायां नृपेण दापिते(देहीत्युक्ते व)क्ति न मुक्तं, राज्ञा स्थानादि पृष्टं, अन्यदा राज्ञा समं द्यूते तन्नाममुद्राग्रहणं, तदभिज्ञानेन प्रच्छन्नं तद्गृहादानाय्य दत्तं, पुरोहितस्य जिह्वा छिन्ना, नृपधीः १८ । 'अंक'त्ति कोऽपि कस्यचिद्रूपकसहस्रमृतं नवलकं न्यस्तवान्, तेन चोत्सीव्य शुद्धा गृहीताः, कूटाः (टान्) प्रक्षिप्त्वा कर्त्तयित्वा तथैव सीवितं, वादे मन्त्रिभिस्तावान्मितशुद्धाऽमाने धर्षितः सः १९ । नाणकेऽप्येवमेव परं बहुमूल्यानि गृहीत्वा अल्पमूल्यानि क्षिप्तानि, वादे कालादि पृष्ट्वा तदा तन्नाणकाभावान्निर्घाटितः २० । 'भिक्खु'त्ति केनापि भिक्षोर्मठे न्यासः कृतः स न दत्ते, तदा रात्रौ द्यूतकारै रक्तपटवेषैः आगत्योक्तं-तीर्थयात्रायां यास्यामोऽदः स्वर्णं स्थाप्यतां, अत्रान्तरे तेन याचिते बहुलोभाद्दत्तं, अन्यमिषं कृत्वा ययुः २१ । 'चेडगनिहाणे'त्ति-मित्रद्वयेन निधिर्दृष्टः, कल्ये ग्राह्य इति स्थापितः, एकेन लात्वा अङ्गाराः क्षिप्ताः, प्रातरहो निष्पुण्यत्वादङ्गारा जाता इत्युक्तं लात्रा, अपरेण ज्ञात्वा तत्प्रतिमा कारिता, द्वौ मर्कटौ गृहीतौ, तौ तदासक्तौ जातौ, अन्यदा पुत्रौ भोजनाय निमन्त्र्य गोपितौ मर्कटीभूतावित्युक्तं, भागे दत्ते अर्पितौ २२ । 'सिक्ख'त्ति-एकः कुलपुत्रको धनुर्वेदी

क्वापि ईश्वरपुत्रानध्याप्य वहुद्रव्यमापत्, अन्यैर्हर्तुं चिन्तिते ज्ञाते नद्यां रात्रावस्मद्विधिरिति छगणपिण्डेषु द्रव्यं क्षिप्त्वा ते प्रवाहितास्ततो नष्टः २३। 'अत्थसत्थे'त्ति–एकः पुत्रो द्वे सापत्न्यौ, वादे देव्योक्तं–मत्पुत्रो जातः सन् यौवनस्थो वादमपनेष्यति ततो द्वेऽप्यविशेषं द्रव्योपभोगं कुरुतं, अपुत्रया मतं, ततः सा निष्कासिता २४। 'इच्छा य महं'ति एकस्या भर्त्ता मृतो लभ्यममलभमाना पतिमित्रमप्रार्थयत्, स आह चेन्ममापि भागं देहि, तया ऊचे यदिच्छसि तन्मे देयाः, तेनोद्ग्राह्याऽल्पं दत्तं, सा नेच्छति, व्यवहारे आहूय द्वौ पुञ्जौ कृतौ, पृष्टः कमिच्छसि ?, स आह महान्तं, स एव तस्यै दापितः २५। 'सयसहस्से'त्ति–एकः परिव्राट् तस्य लक्षमूल्यं खोरं, स प्राह–यो माममश्रुतं श्रावयति तस्मै ददामि, सिद्धपुत्र आह–त्वत्पिता मे पितुर्लक्षं धारयति श्रुतं चेद्दीयतां, अथ न तर्हि खोरकं २६ ॥ ९४२ ॥ वैनयिक्याः स्वरूप(लक्षण)माह—

भरनित्थरणसमत्था तिवग्गसुत्तत्थगहिअपेयाला। उभओ लोगफलवई विणयसमुत्था हवइ बुद्धी ॥ ९४३ ॥

अतिगुरुकार्यं भरः, त्रिवर्गो धर्मार्थकामास्तदर्जनोपायप्रतिपादकं सूत्रं, तद्व्याख्यानं त्वर्थस्तयोर्गृहीतं पेयालं–सारं यया सा तथा, स्वल्पश्रुतनिसृतभावेऽपि नन्द्युक्तमश्रुतनिसृतत्वमस्या न विरुद्धं, उभयलोकफलवती ॥ ९४३ ॥ उदाहरणान्याह—

निमित्ते १ अत्थसत्थे अ २ लेहे ३ गणिए अ ४ कूव ५ अस्से अ ६।
गद्दह ७ लक्खण ८ गंठी ९ अगए १० गणिआ य रहिओ य ११ ॥ ९४४ ॥
सीआ साडी दीहं च तणं अवसव्वयं च कुंचस्स १२। निव्वोदए अ १३ गोणे घोडगपडणं च रुक्खाओ १४ ॥९४५॥

एकस्य सिद्धपुत्रस्य द्वौ शिष्यौ निमित्तमधीतौ, तृणकाष्ठार्थं व्रजन्तौ हस्तिपदानि पश्यतः स्म, एकः प्राह–एषा हस्तिनी

कायिक्या, एकदृगेकपार्श्वतृणादनात्, तदारूढौ स्त्रीपुरुषौ कायिकीभ्यां, स्त्री गुर्विणी हस्तावष्टम्भोत्थानात्, सुतो भावि दक्षिणांह्रिगौरवात्, रक्तवस्त्रा तरुलग्नरक्तदशिकातः। नद्यां वृद्धायाः प्रवसितपुत्रशुद्धिं पृच्छन्त्या घटे भग्ने एकः प्राह मृतो धीमानागत इति, धीमतो वैनयिकी बुद्धिः १। अर्थशास्त्रं—नीतिशास्त्रं, तत्र वैरिकटकागमने उपर्यध इक्षुकलापकर्त्तनेन दधिकुम्भस्फोटनेन त्रासितं यथेदं मर्दनयोग्यं तथा यूयं मयीति कल्पकस्य बुद्धिः २। 'लेहे गणिए अ'त्ति—अष्टादशलिपीर्वेत्ति शिष्यमाणः ३, एवं गणितमपि ४। कूपे—खातज्ञेनोक्तमियद्दूरे जलमस्तीति, तथा जातं ५। अश्ववणिजो द्वारवत्यां गताः, कृष्णेन दुर्बलोऽश्वः सल्लक्षणेन गृहीतः ६। 'गद्दह'त्ति—राजा तरुणप्रियोऽटव्यां पतितस्तृषार्त्तो अभूत्, कटकान्तर्बुद्ध्ये स्थविरं पृष्टवान्, एकेन स्वपिता पितृभक्तत्वात् प्रच्छन्नमानीतो दर्शितस्तेनोचे—यत्र गर्द्दभानामुत्सिंघना तत्रासन्नं जलं, वृद्धस्य धीः ७। लक्खण'त्ति पूर्णेऽवधौ अश्वद्वयं दास्ये इत्युक्त्वा अश्वलक्षणवित्के(विदा के)नाप्यश्वरक्षकः स्थापितो जाता सुता तदासक्ता। वेतनकालेऽवादीत्स अमुममुं च इति देहि द्वयं, स्वामिना ज्ञात्वोक्तं भार्यायै सुता अस्मै दीयते, सा नेच्छति, उक्तं तेन लक्षणयुक्तेन कुटुम्बं वर्द्धते, यथा केनापि सूत्रधारेण प्राघुणो वर्द्धकिः सल्लक्षणत्वात् पुत्रीं दत्त्वा स्वगृहे एवाऽस्थापि। स कर्म न करोति भार्यया नुन्नो अटव्यां याति रिक्तहस्तश्चाऽऽयाति, षष्ठे मासि लब्धं चिक्ककाष्ठं कृतं मानकं विक्रीतं च लक्षेण श्रेष्ठिना गृहीतमक्षयनिमित्तं अश्वस्वामिनो धीः ८। 'गंठि'त्ति—पाटलिपुत्रे मुरुण्डो नृपस्तस्य वस्तुत्रयं परैः प्रेषितं, आहूतैः पादलिप्ताचार्यैः सूत्रं मदनमूढतन्तु उष्णोदके क्षिप्तं तन्तुराकृष्टः, समा यष्टिर्जलेऽमोचि मूलं गुरु, लाक्षालेपं समुद्गकमुष्णोदकेनोद्घाटितं, तत आचार्यैस्तुम्बकं विपा(निष्पा)द्य रत्नैर्भृत्वा नष्टसीवन्या संसीव्य परेषां प्रैषि, यः तदुत्सीवयति स लातु, तदभावे हारितं ९।

अगदे-परबलागमे नीरविनाशार्थं राज्ञा विषकरः पातितः, पुञ्जाः कृताः, वैद्येन यवमात्रमानीतं, राजा रुष्टः, वैद्यः शतसहस्र-घात्येतत्, मृतहस्तिनः पुच्छबालमुत्पाट्य विषं दत्तं स सर्वोऽपि विषं (षमयो)जातः, यस्तं खादति सोऽपि विषं, एवं लक्षवेध्यगदे दत्ते तथैव वालितं, वैद्यधीः १० । रथिकेन भूमिगतेनाऽशोकवन्या आम्रलुम्बिरिषुपरम्परया त्रोटिता, कोशया नृत्तं दर्शितं सिद्धार्थराशिस्थसूच्यग्रे ११ । सीएत्यादि-राजपुत्रा आचार्येण पाठिताः, राजा द्रव्यलोभेन मारयितुमिच्छति, शिष्यैर्गुरुत्वाज्ज्ञया ज्ञापितं, भोकुमागतेन स्नानशाटिका मार्गिता, तैरूचे-अहो शीता शाटिका, द्वारमुखं तृणं कृत्वाहो दीर्घं तृणं, पूर्वं क्रौचः(श्वेन) प्रदक्षिणीक्रियते स्म, तद्दिनेऽप्रदक्षिणीकृतः, तेन ज्ञातं यथा विरक्तानि, पन्था दीर्घः, नष्टो धीरुभयेषां १२ । नीव्रोदके-काचित्प्रोषितपतिका नरमानीय रात्रौ दास्या नापितकर्म कारयित्वा वासितवती तृषितो नीव्रोदकं दत्तं मृतः, प्रातर्दृष्ट्वा नापितादि उज्झितः (नापितादीन्) पृष्ट्वा धीसखेन सर्प्पविषं निर्णीतं १३ । गोणे घोडगरुक्खपडणं च इक्कं (घोडगपडणं च रुक्खाओ)-एको निर्भाग्यो मित्राद्याचितगोभ्यां हलं वाहयन् (वाहयति), सायं तद्दृष्टौ वाटके मुञ्चति, अन्यदा तौ गतौ, तेन राजकुलं नीयमानोऽश्वात्पतितेन हत्वा वालयेत्युक्तेऽश्वं मर्मणि जघान, मृते सोऽप्यनुलग्नस्त्रयोऽपि रात्रौ वटाध उषिताः निष्पुण्येन यावज्जीवबन्धनभीतेन शाखायामुद्बध्यात्मा पातितः, पतताऽधःसुप्तनटमहत्तरो मारितः, नटैरपि गृहीतः, प्रातः करणं नीतः, कारणिकैरनुकम्पाबुद्ध्या मोचितः १४ ॥ ९४५ ॥ कर्मजाया लक्षणमाह—

उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला । साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥ ९४६ ॥

उपयोगः—कर्मणि मनसो अभिनिवेशः, सारः—कर्मणः परमार्थः, उपयोगेन दृष्टः सारो यया सा तथा, प्रसङ्गोऽभ्यासः, परिघोलनं—विचारः, कर्माभ्यासविचारविशाला, साधुकृतमिति फलवती ॥ ९४६ ॥ अस्याः स्वरूपमा(उदाहरणानि आ)ह—

हेरन्निए १ करिसए २ कोलिअ ३ डोवे अ ४ मुत्ति ५ घय ६ पवए ७ ।
तुन्नाग ८ वड्ढई ९ पूइए अ १० घड ११ चित्तकारे अ १२ ॥ ९४७ ॥

हैरण्यिको अन्धकारेऽपि हस्तामर्शेन रूपं (प्यकं) जानाति १ । कर्षकः—क्वापि चौरः पद्माकारं खात्रमदाल्लोकोऽपि विस्मितस्तं प्रशंसति, कर्षकः प्राह शिक्षितस्य किं दुष्करं ?, चौरेण श्रुतं, क्षुरिकां लात्वा अशात्सा (मारयामि, तेन) पटं प्रसार्य व्रीहिमुष्टिं भृत्वोक्तं पश्य विज्ञानं, किं विमुखाः संमुखाः पार्श्वतः पतन्त्वेते ?, तथैव जातं हृष्टश्चौरः २ । कोलिको मुष्टिना लात्वा तन्तून् जानाति इयद्भिः कण्डकैः पटं स्यात् ३ । परिवेषिका डोवेन परिवेषयन्ती मानं वेत्ति ४ । 'मुत्ति' त्ति मणिकारको मुक्ता उच्छाल्य सुकरवालेन प्रोतयति ५ । घृतवणिक् प्रतोल्या उपरि स्थितो भूस्थभाजने घृतं प्रक्षिपति ६ । प्लवकः आकाशे करणानि ददाति ७ । तुन्नाको व्यूतमिव करोति ८ । वर्द्धकिः सूत्रधारः ९ । पौपिकः कांदविकः १० । घटकारः ११ । चित्रकारः १२ । सर्वेषां कर्मजा बुद्धिः ॥ ९४७ ॥ पारिणामिकीमाह—

अणुमाणहेउदिट्ठंतसाहिया वयविवागपरिणामा । हिअनिस्सेअसफलवई बुद्धी परिणामिआ नाम ॥ ९४८ ॥

अनुमानादिभिः साध्यमर्थं साधयतीति सा, तथा लिङ्गात् ज्ञानमनुज्ञानं स्वार्थं, तत्प्रतिपादको हेतुः परार्थं, साध्योपमाभूतस्तु दृष्टान्तः, वयोविपाके परिणामः—पुष्टता यस्याः सा तथा, हितमभ्युदयो निःश्रेयसं मोक्षस्ताभ्यां फलवती ॥ ९४८ ॥

कर्मजाया लक्षणं उदाहरणानि च नि० गा० ९४६-९४८

अभए १ सिट्ठि २ कुमारे ३ देवी ४ उदिओदए हवइ राया ५ । साहू अ नंदिसेणे ६ धणदत्ते ७ सावग अमच्चे ॥९४९॥
खवगे १० अमच्चपुत्ते ११ चाणक्के १२ चेव थूलभद्दे अ १३ । नासिक्कसुंदरी नंदे १४ वइरे १५ परिणामिआ बुद्धी ॥९५०॥
चलणाहय १६ आमंडे १७ मणी अ १८ सप्पे अ १९ खग्गि २० थूभिं २१ दे २२। परिणामिअबुद्धीए एवमाई उदाहरणा ९५१

प्रद्योतेन गणिकोपायेन बद्धानीतस्याभयस्य वरचतुष्कयाचने मुक्तस्य दिवा रटतश्चण्डप्रद्योतस्य नयने पारिणामिकी १ । 'सिट्ठि'त्ति–भोगपुरे काष्ठश्रेष्ठी वज्रा भार्या सुतो गजः सुहृद्देवशर्मा द्विजः, सारिकाशुककुर्कुटपक्षित्रयं, श्रेष्ठी प्रोषितः, वज्रा देवशर्मासक्ता, अनाचाराऽसहिष्णां सारिकां हतवती, कुर्कटमञ्जरिभोक्ता राट् स्यादिति साधुवाचं श्रुत्वा विप्रः सर्वमकारयत्, तावत्पुत्रेण लेखशालाऽऽगतेन भुक्तं, विप्रेण मञ्जर्यदर्शने सुतव्यापादनमन्त्रे कृते श्रुत्वा धात्री नीत्वा नष्टा सुतः क्वापि पुरे नृपोऽभूत्, श्रेष्ठिनाऽऽगतेन शुकाद् ज्ञातवृत्तान्तेन निष्क्रान्त्वा चतुर्मासीं स्थितो नृपं बोधितवान्, धिग्जातिभिरेका स्त्रीगुर्विण्युत्थापिता, साधोः सत्यश्रावणया गर्भोऽपत् सा मृता श्रेष्ठिमुनिः तत्र गतः यत्र सुतो राट्, भार्याद्विजावपि तत्रागतौ, तं ऋषिं भिक्षाप्रविष्टमुपलक्ष्याभिज्ञातः आभरणं क्षिप्त्वा कलङ्काय वज्रा पूत्कृतवती राजकुले धात्र्योपलक्षितः, इतरौ निर्धाटितौ, मुनिधीः २ । कुमारः–क्षुल्लककुमारो योगसङ्ग्रहे ३ । देवी–पुष्पभद्रे पुष्पसेनो नृपः पुष्पवती देवी, तस्या द्वे अपत्ये, पुष्पचूलः पुष्पचूला च, ते अनुरक्ते भोगपरे देव्या प्रव्रज्य स्वर्गतया प्रबोधिते पुष्पचूला अन्य(र्णि)कापुत्रान्ते प्रव्रज्य सिद्धा, देवस्य धीः ४ । पुरिमताले उदितोदयो राजा श्रीकान्तादेवी, जिनधर्मरतत्वाद्दासीभिः प्रव्राजिका जिता, द्वेषमापन्ना वाराणस्यां धर्मरुचिराज्ञे श्रीकान्तारूपं चित्रकस्थमदर्शयत्, रागाद्दूतस्य प्रेषणेऽपमानेन सर्वबलेन

पारिणामिक्याः लक्षणं उदाहरणानि च नि० गा० ९४९-९५१

गतो धर्मरुचिः पुरं रुरोध, उदितोदयेन पापभीरुत्वादुपवासेन श्रीदः स्मृतस्तेनारिस्त्रासितः ५। श्रेणिकपुत्रो नन्दिषेणः स्वशिष्यस्थिरीकरणाय राजगृहं गतस्ततस्तदन्तःपुरीर्वन्दनाऽऽगता दृष्ट्वा स्थिरीभूतः ६। धनदत्तः सुसुमाया मृत्यौ पुत्रानाह-यद्येनां सम्प्रति नाद्मस्तदान्तरा म्रियामहे ७। श्राद्धो अध्युपपन्नः प्रियासख्यां, ज्ञात्वा आर्त्तो मृत्वा दुर्गतौ मा यात्वयमिति प्रिया तद्वेषमादाय रात्रौ रमयित्वा संवेगे सद्भावकथनात्सुस्थितं कान्तमकरोत्, तस्या धीः ८। एकस्य राज्ञो वल्लभदेवी मृता तद्वियोगार्त्तो नृपो मुग्धः शरीरस्थितिमकुर्वन् मन्त्रिभिरुक्तः-देव! किं क्रियताम्?, ईदृशी संसारस्थितिः, राजा आह-देव्यामकुर्वत्यां न करोमि, मन्त्रिभिर्विमृश्योक्तं-देवी स्वर्गं गता, तत्र तस्यै प्रेष्यतां, पश्चात्स्वयं क्रियतां, राज्ञा मतं, माययैकः प्रेष्यते, स आगत्य प्रत्यहं तद्देहस्थित्यादिवार्तां कथयति, एवमाभरणादि दीयमानं देव्यै दृष्ट्वा कश्चिद्धूर्त्तो नृपमाह-अहं स्वर्गादागां देव्यादिष्टकटीसूत्राद्यानयनाय, राज्ञोक्ता मन्त्रिणः प्रातः सर्वं दीयतां, तैश्चिन्तितं मन्त्रभेदो जातः, एकेन मन्त्रिणा सर्वमानीय उक्तं, देव! चितयैव स्वर्गे गम्यते, राज्ञोक्तं तथैव प्रेष्यतां, स विषण्णः, अन्तरा वाचालो धूर्त्तस्तमाह राजसमक्षं-भोस्तत्र गतेन एवं २ वाच्यः, प्राग्धूर्त्तेनोचे-नाहं सर्वं वक्तुमलं, अयमेव प्रेष्यतां, ततः स एव नेतुमारेभे, अन्यो मुक्तः, तन्मानुषै रुदिते खरण्टयित्वा मुक्तो मन्त्रिभिः, मृतकं दग्धं मन्त्रिणो धीः ९। क्षपको भेकीमारको मृत्वा एकत्र विराद्धसंयमानां कुले दृष्टिविषोऽहिरभूत्, ते परस्परं जानन्ति, रात्रौ चरन्ति मा जीवसंघात इति प्रासुकमाहारयन्ति। अन्यदा राज्ञः पुत्रोऽहिदष्टो मृतः, सर्प्पमारणे दीनारमदान्नृपः, केनापि तेषां रेखां दृष्ट्वा विलं ज्ञात्वा औषधीभिराकृष्टः, स जातिमानभिमुखो न निर्याति तद्रक्षार्थं, तं निर्गतं २ छित्त्वा राज्ञो दर्शितः, अत्रान्तरे नागदेवतया ऊचे-सुतो भविष्यति, मा

अहीन्मारयेति, क्षपकाहिर्मृत्वा नागदत्तः पुत्रो जातिं स्मृत्वा प्रव्रजितो वहुक्षुधो रोषाभिग्रही कुरगडुकोऽभवत्। एकद्वित्रिचतुर्मासक्षपकानतिक्रम्य देवता तं भावक्षपकं ननाम, पश्चापि सिद्धाः १० । अमात्यपुत्रो वरधनुस्तस्य धीर्मातृमोचनादिषु ११ । चाणक्येन देवतादत्तपाशकैर्जनं क्रीडयित्वा कोशः कृतः १२ । स्थूलभद्रोऽमात्यपदव्यर्थमाकारितो विमृश्य दीक्षां जग्राह १३ । नाशिक्यपुरे नन्दो वणिक् सुन्दरी भार्या अतः सुन्दरीनन्दो अभिधेयं, तद्भ्रात्रा प्रव्रजितेनाऽऽगत्य भाजनार्पणेनोद्यानं नीतः, सुन्दरीरागित्वान्नेच्छति दीक्षां, देववन्दनाय मेरुं नयता साधुना वानरीविद्याधरीदेवीदर्शनेन प्रतिबोध्य दीक्षितः १४ । वज्रस्वामिना माता नानुवर्त्तिता मा सङ्घस्यावज्ञा १५ । 'चलणाहए' राजा तरुणैर्व्युद्ग्राह्यते यथा स्थविराः कुमाराश्चापनीयन्तां, परीक्षायै राज्ञोक्तं-यो राज्ञः शिरः पादेनाहन्ति तस्य को दण्डः ?, तरुणैरुक्तं तत्पादच्छेदः, स्थविरैर्विचिन्त्योक्तं सत्कार्यः, एवंकर्त्री देव्येवेति, वृद्धाः सत्कृताः अन्ये न्यक्कृताः १६ । 'आमंडे'त्ति-आमलकमेकेन कृत्रिमं ज्ञातमतिकठिनत्वादकालजातत्वाच्च १७ । 'मणि'त्ति-सर्प्पः पक्षिणामण्डकानि वृक्षमारुह्य अत्ति गृध्रेण हतः, मणिरधः कूपे पतितः, नीरं रक्तं जातं, बहिःकृष्टं स्वाभाविकं स्यात् (भवति), दारैरुक्ते स्थविरेण ज्ञात्वा प्रतिवेश्य (प्रविश्य) गृहीतः १८ । सर्पश्चण्डकौशिकश्चिन्तयति ईदृशो महात्मा इत्यादि १९ । श्रावकपुत्रो धर्ममकृत्वा अरण्यखड्गी सञ्जातः, अटव्यां जनं मारयति, अन्यदा साधून् दृष्ट्वा जातिं स्मृत्वा प्रत्याख्याते स्वर्गतः २० । वैशाल्यां श्रीमुनिसुव्रतस्तूपः कूलवालेन पातितः २१ । 'इंद'त्ति एकत्र पुरं न पतति, चाणक्यस्त्रिदण्डीभूय प्रविष्ट इन्द्रकुमारिका दृष्ट्वा ज्ञातं तत्प्रभावेन न पतति, मायया ता उत्पाटिताः पुरं गृहीतं २२ ॥ ९५१ ॥

उक्तोऽभिप्रायसिद्धः, तपःसिद्धमाह—

न किलम्मइ जो तवसा सो तवसिद्धो दढपहारिव्व। सो कम्मक्खयसिद्धो जो सव्वक्खीणकम्मंसो ॥ ९५२॥

दृष्ट(ढ)प्रहारी दीक्षां प्रत्यभिग्रहवात् ( गृहीतः ) सिद्धः ॥ ९५२ ॥ कर्मक्षयसिद्धमेव प्रपञ्चत आह—

दीहकालरयं जं तु कम्मं से सिअमट्ठहा। सिअं धंतंति सिद्धस्स सिद्धत्तमुवजायइ ॥ ९५३ ॥

दीर्घः सन्तानापेक्षयाऽनादित्वात् स्थितिबन्धकालो यस्य तद्दीर्घकालं, तच्च जीवानुरञ्जनाद्रजश्च तत्तथा, यत्कर्म श्लेपितमात्मनात्मप्रदेशेषु योजितमष्टधा कर्म सितं–पूर्वबद्धं ध्मातं–दग्धमिति निरुक्त्या सिद्धस्य सिद्धत्वमुपजायते ॥ ९५३ ॥

नाऊण वेअणिज्जं अइबहुअं आउअं च थोवागं। गंतूण समुग्घायं खवंति कम्मं निरवसेसं ॥ ९५४ ॥

ज्ञात्वा केवलेनावगम्य, किं?–वेदनीयं कर्म, किम्भूतं? 'अतिबहुकं' शेषभवोपग्राहिकर्मापेक्षया अतिप्रभूतमित्यर्थः, तथाऽऽयुष्कं च कर्म 'स्तोकं' अल्पं तदपेक्षयैव ज्ञात्वेति वर्त्तते, अत्रान्तरे 'गत्वा' प्राप्य 'समुद्घातं' इति सम्यग्–अपुनर्भावेन उत्–प्राबल्येन कर्मणो हननं घातः–प्रलयो यस्मिन् प्रयत्नविशेषे असौ समुद्घातस्तं, 'क्षपयन्ति' विनाशयन्ति 'कर्म' वेदनीयादि, निरवशेषमिव निरवशेषं प्रभूतक्षपणाच्छेषस्य चान्तर्मुहूर्त्तमात्रकालावधित्वात्, किञ्चिच्छेषत्वादसत्त्वमित्यर्थः। ननु 'ज्ञात्वा वेदनीयमतिबहु' इत्यत्र को नियमो येन तदेव बहु तथा आयुरेवाल्पमिति, अत्रोच्यते, वेदनीयस्य सर्वकर्मभ्यो बन्धकालबहुत्वात्केवलिनोऽपि तद्बन्धकत्वात् आयुष्कस्य चाल्पत्वात्, उक्तं च–'जाव णं अयं जीवे एयइ वेयइ चलइ फंदइ ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा नो णं अबंधए' त्ति, आयुष्कस्य त्वन्तर्मुहूर्त्तिक एव बन्धकालः, उक्तं च–"सिअ तिभागे सिअ तिभागतिभागे" इत्यादि, इति गाथार्थः ॥ ९५४ ॥ इदानीं समुद्घातादिस्वरूपप्रतिपादनायैवाह–

दंड कवाडे मंथंतरे अ सा(सं) हरणया सरीरत्थे। भासाजोगनिरोहे सेलेसी सिज्झणा चेव ॥ ९५९ ॥

इह समुद्घातं प्रारभमाणः प्रथममेवावर्जीकरणमभ्येति, आन्तर्मौहूर्त्तिकमुदीरणावलिकायां कर्मप्रक्षेपव्यापाररूपमित्यर्थः, ततः समुद्घातं गच्छति, तस्य चायं क्रमः—इह प्रथमसमय एव स्वदेहविष्कम्भतुल्यविष्कम्भमूर्द्ध्वमधश्चायतमुभयतोऽपि लोकान्तगामिनं जीवप्रदेशसंघातं [दण्डं] दण्डस्थानीयं केवली ज्ञानाभोगतः करोति, द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामिकपाटमिव कपाटं करोति, तृतीयसमये तदेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणान्मन्थसदृशं मन्थानं करोति लोकान्तप्रापिणमेव, एवं च लोकस्य प्रायो वहु पूरितं भवति, मन्थान्तराण्यपूरितानि, अनुश्रेणिगमनात्, चतुर्थे तु समये तान्यपि मन्थान्तराणि सह लोकनिष्कुटैः पूरयति, ततश्च सकललोकः पूरितो भवति, तदनन्तरमेव पञ्चमे समये यथोक्तक्रमात्प्रतिलोमं मन्थान्तराणि संहरति—जीवप्रदेशान् सकर्मकान्सङ्कोचयतीत्यर्थः, षष्ठे समये मन्थानमुपसंहरति घनतरसङ्कोचनात्, सप्तमे समये कपाटमुपसंहरति दण्डात्मनि सङ्कोचनात्, अष्टमे समये कपाटमुपसंहृत्य शरीरस्थ एव भवति। अमुमर्थं चेतसि निधायोक्तं—दण्डः कपाटं मन्थातराणि संहरता, प्रतिलोममिति गम्यते, शरीरस्थ इति वचनात्, न चैतत्स्वमनीकाव्याख्यानं, यत उक्तं वाचकमुख्येनोमास्वातिना—"दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये। मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु। १। संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे। सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् । २।" इति ॥ इदानीं तस्य समुद्घातगतस्य योगव्यापारश्चिन्त्यते—योगाश्च मनोवाक्कायास्तेषामिदं स्वरूपं—ओदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो

वाग्योगः, तथौदारिकशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो मनोयोगः। अत्र चैषां कः कदा व्याप्रियते?, तत्रेह मनोवाग्योगयोरव्यापार एव, प्रयोजनाभावात्, काययोगस्यैव केवलस्य व्यापारः, तत्रापि प्रथमाष्टमसमययोरौदारिककायप्राधान्यादौदारिककाय योग एव, द्वितीयषष्ठसप्तमसमयेषु पुनरौदारिके तस्माच्च बहिः कार्मणे वीर्यपरिस्पन्दात् औदारिककार्मणमिश्रः, त्रिचतुर्थपञ्चमेषु तु बहिरौदारिकात् बहुतरप्रदेशव्यापारादसहायः कार्मणयोग एव तन्मात्रचेष्टनात् इति, अन्यत्राप्युक्तं— "औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु १॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च। समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात्। २।" अलं विस्तरेण। भाषायोगनिरोध इति, कोऽर्थः?, परित्यक्तसमुद्घातः कारणवशाद्योगत्रयमपि व्यापारयेत्, तदर्थं मध्यवर्त्तिनं योगमाह—भाषेति, अत्रान्तरेऽनुत्तरसुरपृष्टो मनोयोगं सत्यं वा असत्यामृषं वा प्रयुङ्क्ते, एवमामन्त्रणादौ वाग्योगमपि, नेतरौ द्वौ भेदौ द्वयोरपि, काययोगमप्यौदारिकं, फलकप्रत्यर्पणादौ, ततोऽन्तर्मुहूर्त्तमात्रेणैव कालेन योगनिरोधं करोति, अत्र केचिद् व्याचक्षते—जघन्येनैतावता कालेन उत्कृष्टतस्तु षड्भिर्मासैरिति, एतच्चायुक्तं, 'क्षपयन्ति कर्म निरवशेष'मिति वचनात् फलकादीनां च प्रज्ञापनायां प्रत्यर्पणस्यैवोक्तत्वात्, एवं च सति ग्रहणमपि स्यात्, अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, ततश्च भवोपग्राहिशेषकर्मक्षपणाय लेश्यातीतमत्यन्ताप्रकम्पं परमनिर्जराकारणं ध्यानं प्रतिपित्सुर्योगनिरोधार्थमुपक्रमते, तत्र पूर्वं बादरकाययोगेन बादरमनोयोगं निरुणद्धि, ततो वाग्योगं, ततः सूक्ष्मकाययोगेन बादरकाययोगं, तेनैव सूक्ष्ममनोवाग्योगौ, सूक्ष्मकाययोगं तु सूक्ष्मक्रियमनिवृत्तिशुक्लध्यानं

१ मात्रे च कालशेषे इति आव० मलयगिरिवृत्तौ।

यायन् शरीरप्रदेशसम्बद्धा मनःपर्याप्तिनिर्वृत्तिर्यया पूर्वं मनोद्रव्यग्रहणं कृत्वा भावमनः प्रयुक्तवांस्तत्कर्म[संयोग]विघटनाय मन्त्रसामर्थ्येन विषमिव स भगवाननुकृत्वाऽवष्टम्भेनैव (भगवाननुत्तरेणाचिन्त्येन निरावरेण करणवीर्येण तद्व्यापारं) निरुणद्धि अन्यस्यावष्टम्भनीयस्य योगान्तरस्य तदा असत्वात्। तद्ध्यानसामर्थ्याच्च वदनोदरादिविवरपूरणेन सङ्कुचितदेहत्रिभाग-वर्त्तिप्रदेशो भवति। ततः समुच्छिन्नक्रियमप्रतिपातिशुक्लध्यानं ध्यायन् मध्यमप्रतिपत्त्या ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालं शैलेशीकरणं प्रविशति इति समासार्थः। विस्तरार्थश्चायं—स हि योगनिरोधं कुर्वन् प्रथममेव याऽसौ शरीरप्रदेशसम्बद्धा मनःपर्याप्तिनिर्वृत्तिर्यया पूर्वं मनोद्रव्यग्रहणं कृत्वा भावमनः प्रयुक्तवांस्तत्कर्मविघटनाय मन्त्रसामर्थ्येन विषमिव स भगवाननुत्तरेणाचिन्त्येन निरावरणेन करणवीर्येण तद्व्यापारं निरुणद्धि, अयमर्थः—स हि भगवान् केवली योगत्रयनिरोधं चिकीर्षुर्विषमिव मन्त्रेण प्रथममेव तावत्तद्व्यापारं निरुणद्धीति सम्बन्धः, तस्य मनःपर्याप्तिनिर्वृत्तिः शरीरसव्यापेक्षजीवस्य मनोद्रव्यग्रहणशक्तिरूपा ययाऽसौ बाह्यघटादिवस्तुचिन्तनरूपो व्यापारः प्रथमं तावत्तं निरुणद्धीत्यर्थः, केन कृत्वेत्याह—अनुत्तरेणेत्यादि विशेषणविशिष्टं किल सिद्धानामपि वीर्यं भवति, तद्व्यवच्छेदार्थमाह—करणवीर्येणेति सशरीरजन्तुवीर्येणेत्यर्थः तस्या व्यापारं निरुणद्धि या किमित्याह—यासौ शरीरेत्यादि, पुनस्तामेव विशेषयति, यथा पूर्वमित्यादि, किमर्थं पुनस्तद्व्यापारं निरुणद्धीत्याह—तस्या मनःपर्याप्तिनिर्वृत्तेर्यत्कारणभूतं कर्म तेन जीवस्य यः संयोगस्तद्विघटनाय, न ह्यविकले तत्कारणभूते मनःपर्याप्तिनामकर्मणि तत्कार्यभूताया मनोद्रव्यग्रहणशक्तेर्निरोधः कर्तुं शक्य इति भावः। अथ मनोव्यापारादिनिरोधकः क्रम इत्याह (धक्रम आह)—'पज्जत्तमित्तसन्निस्स जत्तियाइं जहन्नजोगिस्स। होंति मणोदव्वाइं तव्वावारो य जम्मत्तो॥ १॥ तदसंखगुणविहीणं समए समए

निरुंभमाणो सो। मणसो सव्वनिरोहं करेज्जऽसंखिज्जसमएहिं ॥ २ ॥ गाथाद्वयस्य व्याख्या—पर्याप्तिसमर्थनोत्तरकालमेव जघन्ययोगिनः संज्ञिनो यावन्ति मनोवर्गणादलिकानि तद्व्यापारश्च मनोद्रव्यव्यापारश्च चिन्तनीयानुकूलचेष्टालक्षणो यावान् भवति केवलिनोऽपि शैलेश्यवस्थाप्राप्तिसमये तावन्ति मनोद्रव्याणि तद्व्यापारश्च तावानेत्र भवति, इदमुक्तं भवति—शैलेशीमारुरुक्षुः केवली प्रथममेवाचिन्त्यसामर्थ्यवीर्यविशेषाज्झगित्येव पर्याप्तमात्रजघन्ययोगिसंज्ञिपञ्चेन्द्रियमनोयोगतुल्यं मनोयोगं धरति, ततश्च तस्मादवशिष्यमाणमनोयोगादसङ्ख्येयगुणविहीनं प्रतिसमयं निरुन्धानोऽसङ्ख्येयसमयैः सर्वमपि मनोयोगं निरुणद्धि, अवशिष्यमाणमनोयोगात् प्रतिसमयमसङ्ख्येयं भागमपनयन्नसङ्ख्येयसमयैः सर्वमपि मनोयोगं निरुणद्धीत्यर्थः तथा—"पज्जत्तमेत्तबेंदिअजहन्नवइजोगपज्जया जे य। तदसंखगुणविहीणे समए समए निरुंभंतो ॥ ३ ॥ सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं। तत्तो अ सुहुमपणयस्स पढमसमयोववन्नस्स ॥ ४ ॥ जो किर जहन्नजोगो तदसंखेज्जगुणहीणमेक्किके। समए निरुंभमाणो देहतिभागं च मुंचंतो ॥ ५ ॥ रुंभइ स कायजोगं संखाईएहिं चेव समएहिं। तो कयजोगनिरोहो सेलेसीभावणामेइ ॥ ६ ॥" एवं वाग्योगमपि विशिष्टवीर्यविशेषात्पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगतुल्यं प्रथममेव विधृत्य तथा काययोगमपि प्रथमतयोत्पन्नसूक्ष्मपनकजघन्यकाययोगतुल्यं विधृत्य ततस्तदसङ्ख्येयगुणविहीनं प्रतिसमयं रुन्धानो असङ्ख्येयसमयैः सर्वं वाग्योगं देहत्रिभागं च मुञ्चन् सर्वकाययोगं निरुणद्धि, निरुद्ध्य शैलेशीकरणं प्रतिपद्यते इति गाथाचतुष्टयतात्पर्यार्थः। तत्र शिलाभिर्निर्वृत्तः शिलानां वायमित्यण् शैलः—पर्वतः तेषामीशः—प्रभुः शैलेशः, स च मेरुः, तस्येवेयं स्थिरता साम्यावस्था शैलेशी, अथवा—अशैलेशः सन्नभूततद्भावाच्छैलेशवदाचरति शैलेशीभवतीत्यध्याहारः, अथवा सर्वसंवरः शीलं तस्येशः,

शीलेशः तस्येयं योगनिरोधावस्था शैलेशी, तस्यां करणं पूर्वरचितशैलेशीक्षमयसमानगुणश्रेणीकस्य वेद्यनामगोत्राख्याघातिकर्मत्रयस्य असङ्ख्येयगुणया गुणश्रेण्या, आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणं, तच्च मध्यमप्रतिपत्त्या ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं भवति, स च काययोगनिरोधारम्भात्प्रभृति सूक्ष्मक्रियाऽनिवृत्तिध्यानं ध्यायति, ततः सर्वनिरोधं कृत्वा शैलेश्यवस्थायां व्युच्छिन्नक्रियमप्रतिपाति, ततो भवोपग्राहिकर्मजालं क्षपयित्वा ऋजुश्रेणीं प्रतिपन्नोऽस्पृश्यमानगत्या सिद्ध्यतीति। अमुमेवार्थमाह—"सेलेसो किर मेरु सेलेसो होइ जा तहाऽचलया। होउं च असेलेसो सेलेसी होइ थिरयाए ॥१॥" अथ सेलेसीति प्राकृतनामाधिकृत्य व्युत्पत्तिमाह—"अहवा सेलुव्व इसी सेलेसी होइ तहवि थिरयाए। सेव असेलेसीहोई सेलेसी होउ(अ)लोवाओ ॥ २ ॥" व्याख्या ॥ सेल इव इसी महर्षिः सेलेसी भवति। ननु शैलेशी तस्य महर्षेः काचिद्विशिष्टावस्था एवोच्यते, कथं शैलेशीप्रतिपत्ता मुनिरप्येवं व्यपदिश्यत इत्याह—सोऽप्येवं व्यपदेश्यो भवति स्थिरतया हेतुभूतया, स हि महर्षिस्तस्यामवस्थायां शैलवत्स्थिरो भवति, शेलेसीत्युच्यते। एनमेव प्राकृतशब्दमधिकृत्य व्युत्पत्त्यन्तरमाह—'सेव'त्ति वाशब्दः पक्षान्तरद्योतकः स शैलेशीप्रतिपत्ता मुनिः 'अलेसी होइ'त्ति तस्यामवस्थायामलेश्यः, समस्तलेश्याविकलो भवतीति कृत्वा, अलेसीतिपदसम्बन्धिनोऽकारस्य लोपं कृत्वा सेलेसीतिप्राकृतशब्देन स सेलेसीप्रतिपत्ताभिधीयते इति गाथार्थः। 'सीलं व समाहाणं निच्छयउ सव्वसंवरो अ। तस्सेसो सेलेसो सेलिसी होइ तयवत्था ॥ ३ ॥ हस्सक्खराइ मज्झे जेण कालेण पंच भन्नंति। अच्छइ सेलेसिगओ तत्तिममित्तं तओ कालं ॥ ४ ॥ तणुरोहारंभाओ झायइ सुहुमकिरिआनिअट्टी सो। वुच्छिन्नकिरिअमप्पडिवाई सेलेसिकालंमि ॥ ५ ॥ तदसंखिज्जगुणाए गुणसेढीए रइअं पुराकम्मं। समए समए खवयं कमसो सेलेसिकालंमि ॥६॥

सव्वं खवेइ तं पुण निल्लेवं किंचिं दुचरमे समए । किंचिच्च होइ चरमे सेलेसीए तयं वुच्छं ॥ ७ ॥ मणुयगइजाइतसबायरं च पज्जत्तसुभगमाइज्जं । अन्नयरवेअणीअं नराउ सुच्चं जसो नामं ॥ ८ ॥ संभवओ जिणनामं नराणुपुव्वी अ चरिमसमयंमि । सेसा जिणसंताओ दुचरिमसमयंमि निट्ठंति ॥ ९ ॥ ओरालिआइं सव्वाइं चयइ विप्पजहणाहिं जं भणियं । निस्सेस तहा न जहा देसच्चाएण जइ सम्मं (सो पुव्वं) ॥ १० ॥ तस्सोदयआइआ (दइया भावा) भवत्तं च विणिअत्तए समयं । समत्त-नाणदंसणसुहसिद्धत्ताणि सुत्तूणं ॥ ११ ॥ उजुसेढी (ढिं) पडिवण्णो समयपएसंतरं अफुसमाणो । इक्कसमएण सिज्झइ अह सागारोवउत्तो सो ॥ १२ ॥ ९५५ ॥

जह उल्ला साडीआ आसुं सुक्कइ विरल्लिआ संती । तह कम्मलहुअ समए वचंति जिणा समुग्घायं ॥ ९५६ ॥

आर्द्रा शाटिका जलेनेति गम्यते, कर्म्मणः—आयुष्कस्य लघुता स्तोकता तस्याः समये—भिन्नमुहूर्त्तप्रमाणे जिनाः केवलिनः ॥ ९५६ ॥

लाउअ एरंडफले अग्गी धूमे उसू धणुविमुक्के । गइ पुव्वपओगेणं एवं सिद्धाणवि गईओ ॥ ९५७ ॥

इषुर्धनुर्विमुक्तः, अमीषां यथा गमनकाले स्वभावतो देशादिनियतैव गतिः पूर्वप्रयोगेण प्रवर्त्तते एवमेव सिद्धानामपि गतिः ॥९५७॥

कहिं पडिहया सिद्धा ?, कहिं सिद्धा पइट्ठिया ? । कहिं बोंदिं चइत्ता णं ?, कत्थ गंतूण सिज्झई ॥ ९५८ ॥

बोन्दिः—तनुः ॥ ९५८ ॥

अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ । इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥ ९५९ ॥

अलोके केवलाकाशे प्रतिहताः तदानन्तर्यवृत्तिरेव प्रतिस्खलनं, न तु सम्बन्धे विघातः, लोकाग्रे च पञ्चास्तिकायात्मके ९५९॥

ईसीपब्भाराए सीआए जोअणंमि लोगंतो । बारसहिं जोअणेहिं सिद्धी सव्वट्ठसिद्धाओ ॥ ९६० ॥

ईषत्प्राग्भारा—सिद्धिभूमिस्तस्याः सीताया इति भूमेर्नाम योजने लोकान्त ऊर्द्ध्वमिति गम्यते । द्वादशभिर्योजनैः सिद्धि-रूर्द्ध्वं स्यात्सर्वार्थसिद्धाद्विमानात्, अन्ये तु सिद्धिं लोकन्तलक्षणामेवाहुः, तत्त्वं जिना विदन्ति ॥ ९६० ॥

निम्मलदगरयवण्णा तुसारगोखीरहारसरिवन्ना । उत्ताणयछत्तयसंठिआ य भणिया जिणवरेहिं ॥ ९६१ ॥

दकरजः—श्लक्ष्णोदककणिकाः ॥ ९६१ ॥

एगा जोअणकोडी बायालीसं च सयसहस्साइं । तीसं चेव सहस्सा दो चेव सया अउणवन्ना ॥ ९६२ ॥

पञ्चचत्वारिंशद्योजनलक्षप्रमाणक्षेत्रस्याल्पमन्यत्परिध्याधिक्यं प्रज्ञापनातोऽवसेयं ॥ ९६२ ॥

बहुमज्झदेसभागे अट्ठेव य जोअणाणि बाहल्लं । चरमंतेसु अ तणुई अंगुलऽसंखिज्जईभागं ॥ ९६३ ॥

बाहुल्यं—उच्चैस्त्वं, अङ्गुलासङ्ख्येयभागं यावत्तन्वी ॥ ९६३ ॥

गंतूण जोअणं जोअणं तु परिहाइ अंगुलपुहुत्तं । तीसेऽवि अ पेरंता मच्छिअपत्ताउ तणुअयरा ॥ ९६४ ॥

किञ्चिदूनमङ्गुलत्रय(नव)मिह अङ्गुलपृथक्त्वशब्देनोक्तं द्रष्टव्यं ॥ ९६४ ॥

ईसीपब्भाराए उवरिं खलु जोअणंमि जो कोसो । कोसस्स य छब्भाए सिद्धाणोगाहणा भणिआ ॥ ९६५ ॥

तिन्नि सया तित्तीसा धणुत्तिभागो य कोसछब्भाओ । जं परमोगाहोऽयं तो ते कोसस्स छब्भाए ॥ ९६६ ॥

त्रीणि शतानि धनुषां त्रयस्त्रिंशदधिकानि धनुषस्त्रिभागश्च क्रोशषड्भागो वर्त्तते 'यत्' यस्मात् परमावगाहोऽयं सिद्धानां, ततः क्रोशस्य षड्भागः ॥ ९६५–९६६ ॥

उत्ताणउव्व पासिल्लउव्व अहवा निसन्नओ चेव । जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥ ९६७ ॥

उत्तानकः पृष्ठतोऽर्धावनतादिस्थानतः, पार्श्वस्थितस्तिर्यक्स्थितो वा ॥ ९६७ ॥

इहभवभिन्नागारो कम्मवसाओ भवंतरे होइ । न य तं सिद्धस्स जओ तम्मि वि तो सो तयागारो ॥९६८॥

इहभवभिन्नाकारः कर्मवशाद्भवान्तरे स्वर्गादौ स्यात्, तदाकारभेदस्य कर्मनिबन्धनत्वात्, न च तत्कर्म सिद्धस्य, यतः 'तस्मिन्' अपवर्गे ततोऽसौ सिद्धः तदाकारः–पूर्वभवाकारः ॥ ९६८ ॥

जं संठाणं तु इहं भवं चयंतस्स चरमसमयंमि । आसी अ पएसघणं तं संठाणं तहिं तस्स ॥ ९६९ ॥

प्रदेशघनं त्रिभागेन रन्ध्रपूरणात् ॥ ९६९ ॥

दीहं वा हस्सं वा जं चरमभवे हविज्ज संठाणं । तत्तो तिभागहीणा सिद्धाणोगाहणा भणिआ ॥ ९७० ॥

दीर्घं पञ्चधनुःशतप्रमाणं, ह्रस्वं हस्तद्वयप्रमाणं ॥ ९७० ॥

तिन्नि सया तित्तीसा धणुत्तिभागो य होइ बोद्धव्वो । एसा खलु सिद्धाणं उक्कोसोगाहणा भणिआ ॥९७१॥

चत्तारि अ रयणीओ रयणितिभागूणिआ य बोद्धव्वा । एसा खलु सिद्धाणं मज्झिमओगाहणा भणिआ ॥९७२॥

रत्नित्रिभागोना ॥ ९७१–९७२ ॥

एगा य होइ रयणी अट्ठेव य अंगुलाइं साहीआ । एसा खलु सिद्धाणं जहन्नओगाहणा भणिआ ॥ ९७३ ॥
ओगाहणाइ सिद्धा भवत्तिभागेण हुंति परिहीणा । संठाणमणित्थंत्थं जरामरणविप्पमुक्काणं ॥ ९७४ ॥
अनित्थंस्थं-केनचित्प्रकारेण लौकिकेनास्थितं ॥ ९७४ ॥
जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नुन्नसमोगाढा पुट्ठा सव्वे अ लोगंते ॥ ९७५ ॥
फुसइ अणंते सिद्धे सव्वपएसेहि निअमसो सिद्धो । तेऽवि असंखिज्जगुणा देसपएसेहिं जे पुट्ठा ॥ ९७६ ॥
तेऽप्यसङ्ख्येयगुणा वर्त्तन्ते देशप्रदेशैर्ये स्पृष्टाः सर्वप्रदेशस्पृष्टेभ्यः; कथं?-सर्वात्मप्रदेशैरनन्ताः स्पृष्टास्तथा एकैकेन प्रदेशेनाप्यनन्ता एव, स चाऽसङ्ख्येयप्रदेशात्मकः ॥ ९७५-९७६ ॥
असरीरा जीवघणा उवउत्ता दंसणे अ नाणे अ । सागारमणागारं लक्खणमेअं तु सिद्धाणं ॥ ९७७ ॥
जीवाश्च ते घनाश्च जीवघनाः, ततश्च साकारानाकारं सामान्यविशेषरूपं लक्षणं स्वरूपमेतत् ॥ ९७७ ॥
केवलनाणुवउत्ता जाणंती सव्वभावगुणभावे । पासंति सव्वओ खलु केवलदिट्ठीहिऽणंताहिं ॥ ९७८ ॥
सर्वभावगुणभावान्-सर्वपदार्थगुणपर्यायान्, तत्र सहवर्त्तिनो गुणाः क्रमवर्त्तिनश्च पर्यायाः, आदौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्थाः सिद्ध्यन्तीति ज्ञापनार्थं ॥ ९७८ ॥
नाणंमि दंसणंमि अ इत्तो एगयरयंमि उवउत्ता । सव्वस्स केवलिस्सा जुगवं दो नत्थि उवओगा ॥ ९७९ ॥
नवि अत्थि माणुसाणं तं सुक्खं नेव सव्वदेवाणं । जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं ॥ ९८० ॥

अव्याबाधा ॥ ९७९-९८० ॥

सुरगणसुहं समत्तं सव्वद्धापिंडिअं अणंतगुणं। न य पावइ मुत्तिसुहंऽणंताहि वि वग्गवग्गूहिं ॥ ९८१ ॥

समस्तं अतीतानागतवर्त्तमानकालोद्भवं, पुनश्च सर्वाद्धापिण्डितं सर्वकालसमयगुणितं, तथा अनन्तगुणं, तदेवंप्रमाणं असत्कल्पनया एकैकाकाशप्रदेशे स्थाप्यते, एवं सकललोकालोकाकाशानन्तप्रदेशपूरणेनानन्तं स्यात्, न च प्राप्नोति तथा-प्रकर्षगतमपि मुक्तिसुखमनन्तैरपि वर्गवर्गैर्वर्गितं ॥ ९८१ ॥ तथा चाह—

सिद्धस्स सुहो रासी सव्वद्धापिंडिओ जइ हविज्ज। सोऽणंतवग्गभइओ सव्वागासे न माइज्जा ॥ ९८२ ॥

सुखराशिः सर्वाद्धापिण्डितो यदि स्यात्, अनेन कल्पनोक्ता, अनन्तवर्गापवर्गितः सन् समीभूत एव सर्वाकाशे न मायात्, अयमर्थः—यत आरभ्य शिष्टानां सुखशब्दप्रवृत्तिस्तमाह्लादमवधीकृत्य एकैकगुणवृद्ध्या तावदसावाह्लादो विशेष्यते यावदनन्तगुणवृद्ध्या निरतिशयगुणनिष्ठां गतः, ततश्चासौ चरमाह्लाद एव सिद्धानां, तस्माच्चारतः प्रथमाच्चोर्द्धमपान्तरालवर्तिनो ये गुणा आह्लादविशेषास्ते सर्वाकाशप्रदेशादिभ्यो भूयांसः ॥ ९८२ ॥

जह नाम कोइ मिच्छो नगरगुणे बहुविहे विआणंतो। न चएइ परिकहेउं उवमाइ तहिं असंतीए ॥ ९८३ ॥

इअ सिद्धाणं सुक्खं अणोवमं नत्थि तस्स ओवम्मं। किंचि विसेसेणित्तो सारिक्खमिणं सुणह वुच्छं ॥ ९८४ ॥

तथापि किञ्चिद्विशेषेण 'एत्तो' त्ति अस्य सादृश्यमिदं वक्ष्यमाणं ॥ ९८३-९८४ ॥

जह सव्वकामगुणिअं पुरिसो भोत्तूण भोअणं कोइ। तण्हाछुहाविमुक्को अच्छिज्ज जहा अमिअतित्तो ॥ ९८५ ॥

यथा अमृततृप्तः रसनेन्द्रियमेवाधिकृत्य इष्टविषयप्राप्त्या औत्सुक्यविनिवृत्त्या सुखदर्शनं अशेषौत्सुक्यनिवृत्त्युपलक्षणार्थम् ॥ ९८५ ॥

इअ सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा । सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ता ॥ ९८६ ॥

सिद्धपर्यायानाह—

सिद्धत्ति अ बुद्धत्ति अ पारगयत्ति अ परंपरगयत्ति । उम्मुक्ककम्मकवया अजरा अमरा असंगा य ॥ ९८७ ॥

परम्परागताः सम्यक्त्वज्ञानचरणक्रमप्रतिपत्त्युपायमुक्तत्वात्, उन्मुक्तकर्मकवचाः ॥ ९८७ ॥

निच्छिन्नसव्वदुक्खा जाइजरामरणबंधणमुक्का । अव्वाबाहं सुक्खं अणुहुंती सासयं सिद्धा ॥ ९८८ ॥

सिद्धाण नमोक्कारो जीवं० ॥ ९८९ ॥ सिद्धाण नमुक्कारो धन्नाण० ॥ ९९० ॥ सिद्धाण नमुक्कारो एवं० ॥ ९९१ ॥ सिद्धाण नमुक्कारो सव्व० विइअं होइ मंगलं ॥ ९९२ ॥

गाथापञ्चकं सुगमं ॥ ९८८–९९२ ॥

नामं ठवणादविए भावंमि चउव्विहो उ आयरिओ । दव्वंमि एगभविआई लोइए सिप्पसत्थाई ॥ ९९३ ॥

द्रव्याचार्य एकभविकादिः, एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, भावाचार्यो लौकिकः शिल्पशास्त्रादिः–शिल्पादिग्राहकः ॥ ९९३ ॥ लोकोत्तरान् भावाचार्यानाह–

पंचविहं आयारं आयरमाणा तहा पभासंता । आयारं दंसंता आयरिआ तेण वुच्चंति ॥ ९९४ ॥

आचरन्तो अनुष्ठानरूपेण, तथा प्रभाषमाणा व्याख्यानेन, दर्शयन्तः प्रत्युपेक्षणादिद्वारेण ॥ ९९४ ॥ अमुमेवार्थमाह—

आयारो नाणाई तस्सायरणा पभासणाओ वा । जे ते भावायरिया भावायारोवउत्ता य ॥ ९९५ ॥

तस्याचरणात् प्रभाषणाद्वा, वाशब्दाद्दर्शनाद्वा हेतोर्ये मुमुक्षुभिर्गुणैर्वा ज्ञानादिभिराचर्यन्ते ते भावाचार्या उच्यन्ते, भावार्थमाचारो भावाचारस्तदुपयुक्ताश्च ॥ ९९५ ॥

आयरियणमोक्कारो जीवं० ॥ ९९६ ॥ आयरियनमुक्कारो धन्नाण० ॥ ९९७ ॥ आयरियनमुक्कारो एवं० ॥ ९९८ ॥ आयरियनमुक्कारो सव्व० तइअं होइ मंगलं ॥ ९९९ ॥

गाथाचतुष्कं सुगमं ॥ ९९६–९९९ ॥

नामं ठवणादविए भावंमि चउव्विहो उवज्झाओ । दव्वे लोइअ सिप्पाइ निण्हगा वा इमे भावे ॥ १००० ॥

निह्नवा द्रव्योपाध्यायाः ॥ १००० ॥

बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहेहिं । तं उवइसंति जम्हा उवज्झाया तेण वुच्चंति ॥ १००१ ॥

बुधैर्गणधरादिभिर्यः, उपेत्याऽधीयते एभ्यः साधवः (बुभिः) सूत्रमित्युपाध्यायाः ॥ १००१ ॥

आगमशैल्या उपाध्यायशब्दार्थमाह—

उत्ति उवओगकरणे ज्झत्ति अ झाणस्स होइ निद्देसे । एएण हुंति उज्झा एसो अन्नोऽवि पज्जाओ ॥ १००२ ॥

उ इत्यक्षरमुपयोगकरणे वर्त्तते, ज्झ इति ध्यानस्य भवति निर्देशे, ततश्च प्राकृतत्वादेतेन भवति उज्झा, उपयोगपुरस्सरं

ध्यानकर्त्तार इत्यर्थः ॥ १००२ ॥ अथवा—

उत्ति उवओगकरणे वत्ति अ पावपरिवज्जणे होइ। झत्ति अ झाणस्स कए उत्ति अ ओसक्कणा कम्मे ॥१००३॥

उपयोगपूर्वकं पापपरिवर्जनेन ध्यानारोहणेन कर्माण्यपनयन्तीत्युपाध्यायाः ॥ १००३ ॥

उवज्झायनमोक्कारो जीवं० ॥ १००४ ॥ उवज्झायनमुक्कारो धन्नाणं० ॥ १००५ ॥ उवज्झायनमुक्कारो एवं० ॥ १००६ ॥ उवज्झायनमुक्कारो सव्व० चउत्थं होइ मंगलं ॥ १००७ ॥

गाथाचतुष्कं कण्ठ्यं ॥ १००४–१००७ ॥

नामं ठवणासाहू दव्वसाहू अ भावसाहू अ। दव्वंमि लोइआई भावंमि अ संजओ साहू ॥ १००८ ॥

अभिलषितमर्थं साधयतीति साधुः ॥ १००८ ॥ द्रव्यसाधूनाह—

घडपडरहमाईणि उ साहंता हुंति दव्वसाहुत्ति। अहवावि दव्वभूआ ते हुंती दव्वसाहुत्ति ॥ १००९ ॥

द्रव्यभूता भावपर्यायशून्याः ॥ १००९ ॥

निव्वाणसाहए जोए, जम्हा साहंति साहुणो। समा य सव्वभूएसु तम्हा ते भावसाहुणो ॥ १०१० ॥

किं पिच्छसि साहूणं तवं व नियमं व संजमगुणं वा। तो वंदसि साहूणं एअं मे पुच्छिओ साह ॥ १०११ ॥

विसयसुहनिअत्ताणं विसुद्धचारित्तनिअमजुत्ताणं। तच्चगुणसाहयाणं सदायकिच्चुज्जयाण नमो ॥१०१२॥

असहाइ सहायत्तं करंति मे संजमं करिंतस्स। एएण कारणेणं नमामिऽहं सव्वसाहूणं ॥ १०१३ ॥

असहायस्य सहायत्वं कुर्वन्ति मम संयमं कुर्वतः ॥ १०१०–१०१३ ॥

साहूण नमुक्कारो जीवं० ॥ १०१४ ॥ साहूण नमुक्कारो धन्नाण० ॥ १०१५ ॥ साहूण नमुक्कारो एवं० ॥ १०१६ ॥ साहूण नमुक्कारो सव्व० पंचमं होइ मंगलं ॥ १०१७ ॥

गाथाचतुष्कं कण्ठ्यं ॥ १०१४–१०१७ ॥

एसो पंच नमुक्कारो सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं पढमं हवइ मंगलं ॥ १०१८ ॥

उक्तं वस्तुद्वारं, आक्षेपमाह–

नवि संखेवो न वित्थारु संखेवो दुविहु सिद्धसाहूणं । वित्थारओऽणेगविहो पंचविहो न जुज्जई तम्हा ॥ १०१९ ॥

इह किल सूत्रं सङ्क्षेपविस्तरद्वयमतीत्य न वर्त्तते, इदं नमस्कारसूत्रमुभयातीतं, यतोऽत्र न सङ्क्षेपः, यद्ययं सङ्क्षेपः स्यात ततो द्विविध एव नमस्कारः स्यात्सिद्धसाधुभ्यां, परिनिर्वृत्तार्हदादीनां सिद्धशब्देन ग्रहणात् संसारिणां च साधुशब्देन, विस्तरतोऽनेकविधः प्राप्नोति, ऋषभादिभ्योऽर्हद्भ्यः, सिद्धेभ्योऽप्यनन्तरसिद्धेभ्य इत्यादि ॥ १०१९ ॥ प्रसिद्धिमाह–

अरहंताई नियमा साहू साहू अ तेसु भइअव्वा । तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥ १०२० ॥

अर्हदादयो नियमात्साधवस्तद्गुणानामपि तत्र भावात्, साधवस्तेष्वर्हदादिषु भक्तव्याः, केचिदर्हन्तः केचिदाचार्या इत्यादि, तस्मात्पञ्चविध एव नमस्कारः, विस्तरेण कर्त्तुमशक्यत्वात्, तथा हेतुनिमित्तं भवति सिद्धः, तत्र हेतुर्य उक्तो 'मग्गे अविप्पणासो' इत्यादि ॥ १०२० ॥ क्रममाह–

पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्वि एस भवे। सिद्धाइआ पढमा बीयाए साहुणो आई ॥ १०२१ ॥

इह क्रमो द्विधा–पूर्वानुपूर्वी पश्चानुपूर्वी च, तत्रायमर्हदादिक्रमः पूर्वानुपूर्वी न, सिद्धाद्यनभिधानात् कृतकृत्यत्वेनार्हन्नमस्कार्यत्वेन च सिद्धानां प्रधानत्वात्, तथा नैव पश्चानुपूर्वी एष क्रमः, साध्वाद्यनभिधानात् ॥ १०२१ ॥ पूर्वानुपूर्वीत्वमेवाह–

अरहंतुवएसेणं सिद्धा नज्जंति तेण अरिहाई। नवि कोई परिसाए पणमित्ता पणमई रण्णो ॥ १०२२ ॥

प्रयोजनफले आह–

इत्थ य पओअणमिणं कम्मक्खओ मंगलागमो चेव। इहलोअपारलोइअ दुविह फलं तत्थ दिट्ठंता ॥ १०२३ ॥

नमस्कारकरणकाल एव प्रयोजनमिदं–कर्मक्षयस्तथा मङ्गलागमश्चैव, कालान्तरभावि पुनरैहलौकिकपारलौकिकभेदभिन्नं द्विविधं फलं ॥ १०२३ ॥

इह लोइ अत्थकामा २ आरुग्गं ३ अभिरई ४ अ निप्फत्ती ५।
सिद्धी अ ६ सग्ग ७ सुकुलपच्चायाई ८ अ परलोए ॥ १०२४ ॥

अभिरतेश्च निष्पत्तिः, सुकुलप्रत्यायातिश्च परलोके ॥ १०२४ ॥ यथाक्रममर्थादीनधिकृत्योदाहरणान्याह–

इहलोगंमि तिदंडी १ सादिव्वं २ माउलिंगवण ३ मेव। परलोइ चंडपिंगल ४ हुंडिअजक्खो ५ अ दिट्ठंता ॥ १०२५ ॥

अर्थे–त्रिदण्ड्युपलक्षितः श्राद्धपुत्रः, कामप्राप्तौ देवतानुभाववती श्राद्धपुत्री, मातुलिङ्गवनोपलक्षितश्राद्धेनारोग्यमभिरतिश्च लेभे, परलोके फलं वसन्तपुरे जितशत्रुप्रियाहारचौर्यात् शूल्यां क्षिप्तश्चण्डपिङ्गलचौरो गणिकादत्तनमस्कारस्तथैव निदानं

कारितो मृतो नृपसुतोऽभूत्, एवं सुकुलप्रत्यायातिस्तन्मूलं च सिद्धिगमनं, अथवा द्वितीयं ज्ञातं–मथुरायां जिनदत्तः श्राद्धस्तेन शूलिकाभिन्नो हुण्डिकश्चौरो नमस्कारं ग्राहितः, स्वयं च तत्कृते नीरार्थं गतोऽत्रान्तरे स मृत्वा यक्षो जातः, श्राद्धः सङ्कटान्मोचितः ॥ १०२५ ॥ इति नमस्कारनिर्युक्त्यवचूर्णिः ॥

उक्ता नमस्कारनिर्युक्तिः, साम्प्रतं सूत्रोपन्यासार्थं प्रत्यासत्तियोगाद् वस्तुतः सूत्रस्पर्शिनिर्युक्तिगतगाथामाह–

नंदिअणुओगदारं विहिवदुवुग्घाइयं च नाऊणं । काऊण पंचमंगल आरंभो होइ सुत्तस्स ॥ १०२६ ॥

नन्दिश्चानुयोगद्वाराणि च तत्, विधिवदुपोद्घातं च, कृत्वा पञ्चमङ्गलानि ॥ १०२६ ॥ सम्बन्धान्तरमाह–

कयपंचनमुक्कारो करेइ सामाइयंति सोऽभिहिओ । सामाइअंगमेव य जं सो सेसं तओ वुच्छं ॥ १०२७ ॥

कृतपञ्चनमस्कारः शिष्यः सामायिकं करोतीति, सोऽभिहितः पञ्चनमस्कारः, सामायिकाङ्गमेव च यदसौ, 'शेषं' सूत्रं, ततो वक्ष्ये, तच्चेदं ॥ १०२७ ॥

करेमि भंते ! सामाइयं, सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ( सूत्रम् )

अस्मिन्नस्खलितामिलितादिगुणोपेते उच्चरिते केचनार्थाधिकारा अधिगताः स्युः, केचन न, ततो अनधिगताधिगमाय व्याख्या प्रवर्त्तते संहितादिरूपा, तत्रास्खलितपदोच्चारणं संहिता, करोमि भयान्त ! सामायिकमित्यादिपदानि, पदार्थपदविग्रहौ

सुगमौ । अत्रान्तरे सूत्रस्पर्शिकनिर्युक्तिः, आह च—

अक्खलिअसंहिआई वक्खाणचउक्कए दरिसिअंमि । सुत्तफासिअनिज्जुत्तिवित्थरत्थो इमो होइ ॥ १०२८ ॥

अस्खलितादौ सूत्र उच्चरिते तथा संहितादौ व्याख्यानचतुष्टये दर्शिते सति सूत्रस्पर्शिकनिर्युक्तिविस्तरार्थोऽयं ॥ १०२८ ॥

करणे भए अ अंते सामाईअ सव्वए अ वज्जे अ । जोगे पच्चक्खाणे जावज्जीवाइ तिविहेणं ॥ १०२९ ॥

करणमित्यादि पदानि, पदार्थं तु भाष्यकृद्वक्ष्यति ॥ १०२९ ॥ करणनिक्षेपमाह—

नामं ठवणा दविए खित्ते काले तहेव भावे अ । एसो खलु करणस्सा निक्खेवो छव्विहो होइ ॥ १५२ ॥ (भा०)

द्रव्यकरणमाह—

जाणगभविअइरित्तं सन्ना नोसन्नओ भवे करणं । सन्ना कडकरणाई नोसन्ना वीससपओगे ॥ १५३ ॥ (भा०)

नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यकरणं द्विधा—संज्ञाकरणं नोसंज्ञाकरणं, [संज्ञाकरणं] कटकरणादि, अयमर्थः—कटादिनिर्वर्त्तकपाइल्लकादीनां करणमिति संज्ञा क्वचिद्देशे रूढा अतस्तां रूढिमाश्रित्य संज्ञाविशिष्टकरणं संज्ञाकरणमित्युच्यते, नोसंज्ञाद्रव्यकरणं द्वेधा—प्रयोगतो [विश्रसातश्च] ॥ १५३ ॥ विश्रसाकरणं द्विधा, अत आह—

वीससकरणमणाई धम्माईण परपच्चयाजो (यज्जो) गा । साई चक्खुप्फासिअमब्भाइमचक्खुमणुमाई ॥१५४॥(भा०)

विश्रसा—स्वभावस्ततः करणं विश्रसाकरणमनादि धर्माधर्माकाशास्तिकायानामन्योन्यसमाधानं करणमिति गम्यते। आह—करणशब्दोऽपूर्वप्रादुर्भावे, ततः करणं चानादि चेति विरुद्धं, न, परप्रत्यययोगात्—परवस्तुप्रत्यययोगा(यभावा)त् धर्मादीनां तथा

तथा योग्यताकरणं, अथवा परप्रत्यययोगात्साद्येव करणं धर्मादीनां, एवं अरूपिद्रव्याण्याश्रित्योक्तं साद्यनादि च विश्रसाकरणं, रूपिद्रव्याण्यधिकृत्य साद्येवेत्याह–सादि चक्षुःस्पर्शी चाक्षुपमभ्रादि, अचाक्षुपमण्वादि, करणता चेह कृतिः करणमिति कृत्वा ॥१५४॥

संघायभेअतदुभयकरणं इंदाउहाइ पच्चक्खं । दुअअणुमाईणं पुण छउमत्थाईणऽपच्चक्खं ॥ १५५ ॥ ( भा० )

इदमेव विशेषेणाह–संघातभेदतदुभयैः करणमिन्द्रायुधादि प्रत्यक्षं चाक्षुपं, द्व्यणुकादीनामनन्ता(णु)कान्तानां करणं छद्मस्थादीनामप्रत्यक्षं ॥ १५५ ॥ प्रयोगकरणमाह–

जीवमजीवे पाओगिअं च चरमं कुसुंभरागाई । जीवप्पओगकरणं मूले तह उत्तरगुणे अ ॥ १५६ ॥ (भा०)

प्रायोगिकं द्विधा–जीवप्रायोगिकमजीवप्रायोगिकं च । चरमं–कुसुम्भरागादि, जीवप्रयोगकरणं द्विधा–मूलगुणकरणमुत्तरगुणकरणं च ॥ १५६ ॥ व्यासार्थमाह–

जं जं निज्जीवाणं कीरइ जीवप्पओगओ तं तं । वन्नाइ रूवकम्माइ वावि अज्जीवकरणं तु ॥ १५७ ॥ ( भा० )

वर्णादि कुसुम्भादेः रूपकर्मादि वा कुट्टिमादौ अजीवविपयत्वादजीवकरणं ॥ १५७ ॥

जीवप्पओगकरणं दुविहं मूलप्पओगकरणं च । उत्तरपओगकरणं पंच सरीराइं पढमंमि ॥ १५८ ॥ ( भा० )

ओरालियाइआइं ओहेणिअरं पओगओ जमिह । निप्फण्णा निप्फज्जइ आइल्लाणं च तं तिण्हं ॥ १५९ ॥ (भा०)

औदारिकादीनि पञ्च शरीराणि ओघेन सामान्येन, प्रवाहतस्तैजसकार्मणयोरनादित्वं, व्यक्त्यपेक्षया तु मनुष्यादिभवेषूत्पन्नस्तद्योग्यं प्रथमं यत् पुद्गलग्रहणं करोति तत्तयोरपि संघातकरणमुच्यते, इतरदुत्तरकरणं, प्रयोगतो यद् लोके निष्पन्नाः,

निष्पद्यते आद्यानां च तत्रयाणां, तैजसकार्मणयोस्तदसम्भवात् ॥ १५८-१५९ ॥

सीसमुरोअरपिट्ठी दो बाहू ऊरुआ य अट्ठंगा । अंगुलिमाइ उवंगा अंगोवंगाणि सेसाणि ॥ १६० ॥ ( भा० )

तत्रौदारिकादीनामष्टाङ्गानि मूलकरणं, तान्याह, शेषाणि करपादादीनि ॥ १६० ॥ किञ्च—

केसाईउवरयणं उरालविउव्वि उत्तरं करणं । ओरालिए विसेसो कन्नाइविणट्ठसंठवणं ॥ १६१ ॥ ( भा० )

'केशाद्युपरचनं' केशादिनिर्मापणसंस्कारौ आदिशब्दान्नखदन्ततद्रागादिपरिग्रहः औदारिकवैक्रिययोरुत्तरकरणं, तथौदारिके विशेष उत्तरकरणे, कर्णादिविनष्टसंस्थापनं, नेदं वैक्रियादौ ॥ १६१ ॥

आइल्लाणं तिण्हं संघाओ साडणं तदुभयं च । तेआकम्मे संघायसाडणं साडणं वावि ॥ १६२ ॥ ( भा० )

अथवेदं त्रिविधं करणं—संघातकरणं परिशाटकरणं संघातपरिशाटकरणं च, तत्राद्यानां त्रयाणां शरीराणां त्रिविधमप्यस्ति, तैजसकार्मणयोस्तु चरमद्वयमेवेति ॥ १६२ ॥ आह च—

औदारिकमाश्रित्य संघातादिकालमानमाह—

संघायमेगसमयं तहेव परिसाडणं उरालंमि । संघायणपरिसाडण खुड्डागभवं तिसमऊणं ॥१६३॥ ( भा० )

सर्वसंघातकरणमेकसमयं एकान्ताऽऽदानस्यैकसामयिकत्वात्, तथैव परिशाटनं, उभयकरणं तु क्षुल्लकभवग्रहणं त्रिसमयोनं, [ तच्च ] विग्रहसमयौ एकस्संघातसमयस्तैर्न्यूनं ॥ १६३ ॥

एयं जहन्नमुक्कोसयं तु पलिअत्तिअं तु समऊणं । विरहो अंतरकालो ओराले तस्सिमो होइ ॥ १६४ ॥ ( भा० )

उत्कृष्टं तु संघातपरिशाटकरणकालमानमौदारिकमाश्रित्य पल्योपमत्रितयमेव समयोनं, ननु यथा पल्योपमत्रयात्सर्वसंघातसमयोऽपनीयते तथान्त्यसमयभावी सर्वपरिशाटसमयोऽप्यपनेयोऽतो द्विसमयहीनकालोऽत्र प्राप्नोति, उच्यते-योऽसौ भवान्त्यसमयस्तस्मिन्नुभयं समुदितमेव प्रवर्त्तते, यस्तु केवलपरिशाटः स परभवसमय एव, नन्वेवमृजुश्रेण्यैवोत्पद्यमानस्याद्यसमये सर्वपरिशाटः सर्वसंघातश्चेति द्वयं विरुद्धं, निश्चयनयमतेन प्राग्भवायुःपुद्गला अपनीयमाना अपगता एव द्रष्टव्याः न तेषां तदानुभूयमानताऽस्ति । संघातपरिशाटयोस्तुएक एव समयः । संघातादिविरहमाह-विरहः कः ?, अन्तरकालः, औदारिके तस्य संघातादेरयं ॥ १६४ ॥

तिसमयहीणं खुड्डं होइ भवं सव्वबंधसाडाणं । उक्कोस पुव्वकोडी समओ उअही अ तित्तीसं ॥ १६५ ॥ ( भा० )

त्रिसमयहीनं क्षुल्लं, भवमिति भवग्रहणं, सर्वबन्धशाटयोरन्तरकालः, तत्र त्रिसमयहीनं सर्वबन्धस्य, क्षुल्लं तु सम्पूर्णं सर्वशाटस्य, गुरवस्तु व्याचक्षते-तदारम्भसमयस्य पूर्वभवशाटेनावरुद्धत्वात्, समयहीनं क्षुल्लभवग्रहणं जघन्यं शाटान्तरं, तथा च एवमक्षराणि नीयन्ते-'त्रिसमयहीनं क्षुल्लकं, भावार्थोऽयं-द्वौ समयौ विग्रहे तृतीयः संघातसमयस्तैरूनं क्षुल्लं सर्वबन्धयोरन्तरं जघन्यं, सर्वशाटयोस्तु क्षुल्लकमन्त्येनैव सर्वशाटसमयेन न्यूनं, उत्कृष्टं तु संघातान्तरं त्रयस्त्रिंशत्सागरोपमाणि पूर्वकोट्यैकसमयाधिकानि एव, अविग्रहेणेह संघातं कृत्वा पूर्वकोटिं सुरज्येष्ठायुष्कं, च भुक्त्वेह तृतीयसमये संघातं कुर्वतः, सर्वशाटान्तरं त्रयस्त्रिंशत्सागरोपमाणि समयोनपूर्वकोट्यधिकानि, कश्चित्संयत औदारिकसर्वशाटं कृत्वा अनुत्तरसुरेषु त्रयस्त्रिंशत्सागराण्यतिवाह्य पुनर्मनुष्येषु औदारिकसर्वसंघातं कृत्वा पूर्वकोट्यन्ते औदारिकसर्वशाटं करोति ॥ १६५ ॥ उभयरूपमाह—

अंतरमेगं समयं जहन्नमोरालगहणसाडस्स । सतिसमया उक्कोसं तित्तीसं सागरा हुंति ॥ १६६ ॥ ( भा० ॥

अन्तरमेकं समयं जघन्यं औदारिकग्रहणशाटयोः, सत्रिसमयान्युत्कृष्टं त्रयस्त्रिंशत्सागराणि देवायुर्भुक्त्वा इह तृतीयसमये संघातयतः. ॥ १६६ ॥ वैक्रियमाश्रित्याह—

वेउव्विअसंघाओ जहन्नु समओ उ दुसमउक्कोसो। साडो पुण समयं चिअ विउव्वणाए विणिद्दिट्ठो ॥ १६७ ॥ (भा०)

वैक्रियसंघातो जघन्यः कालतः समय एव, अयमौदारिकशरीरिणां वैक्रियलब्धिमतां विकुर्वणारम्भे देवनारकाणां च प्रथमतया तद्ग्रहणे, द्विसमयमान उत्कृष्टः कालतः, औदारिकशरीरिणो वैक्रियलब्धिमतस्तद्विकुर्वणारम्भसमय एव वैक्रियसङ्घातं समयेन कृत्वा आयुःक्षयात् मृतस्याविग्रहेण देवेषूत्पद्यमानस्य वैक्रियमेव संघातयतो ज्ञेयः ॥ १६७ ॥

संघायणपरिसाडो जहन्नओ एगसमइओ होइ । उक्कोसं तित्तीसं सायरणामाइं समऊणा ॥ १६८ ॥ ( भा० )

वैक्रियस्यैव संघातपरिशाट उभयरूपः कालतो जघन्य एकसामयिकः, यदौदारिकशरीरी वैक्रियलब्धिमान् द्वितीयसमये उभयं कृत्वा म्रियते, उत्कृष्टतस्त्रयस्त्रिंशत्सागरनामानि समयोनानि–संघातसमयहीनानि ॥ १६८ ॥

सव्वग्गहोभयाणं साडस्स य अंतरं वेउव्विस्स । समओ अंतमुहुत्तं उक्कोसं रुक्खकालीअं ॥ १६९ ॥ ( भा० )

सर्वग्रहोभययोः शाटस्य चान्तरं समयः, संघातस्योभयस्य च, अंतर्मुहूर्त्तं शाटस्य, जघन्यं, औदारिकशरीरी वैक्रियं कृत्वा मुहूर्त्तानन्तरं तच्छाटं कृत्वा औदारिकस्थः सन् अन्तर्मुहूर्त्तं स्थित्वा पुनः कार्येण वैक्रियं कृत्वा अन्तर्मुहूर्त्ताच्छाटं करोति, एवमन्तर्मुहूर्त्तद्वयेन स्पृष्टमेकं, उत्कृष्टं त्रयाणामपि वृक्षकालेनानन्तेन निर्वृत्तं वृक्षकालिकम् ॥ १६९ ॥

एकैकं करणत्रिकेणेति नव भेदाः, कालत्रयसम्बन्धाच्च सप्तविंशतिः । इदं च प्रत्याख्यानभेदजालं समितिगुप्तिषु सतीषु स्यात् । इहैव प्रायः सूत्रस्पर्शिकनिर्युक्तिवक्तव्यताया उक्तत्वान्मध्यग्रहणे चाद्यन्तयोरप्याक्षेपात् इदमाह 'सुत्ते' त्यादि ॥ १०५८ ॥ सूत्र एवातीतादिकालग्रहणमुक्तमित्याह—

सामाइअं करेमी पच्चक्खामी पडिक्कमामित्ति । पच्चुप्पन्नमणागयअईअकालाण गहणं तु ॥ १०५९ ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ | कृतकारितादयः |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ | मनःप्रभृतयः |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ | लब्धफलमेतत् |

सामायिकं करोमि तथा प्रत्याख्यामि सावद्यं योगं, तथा प्रतिक्रमामीति प्राकृतस्येति यथासङ्ख्यमेव प्रत्युत्पन्नानागतातीतकालानां ग्रहणं ॥ १०५९ ॥ तस्स भदंत! प्रतिक्रमामीत्येतदाह—

तिविहेणंति न जुत्तं पडिपयविहिणा समाहिअं जेण । अत्थविगप्पणयाए गुणभावणयत्ति को दोसो ? ॥ १०६० ॥

त्रिविधं त्रिविधेनेत्यत्र त्रिविधेनेत्ययुक्तं, प्रतिपदविधिना मनसा वाचा कायेनेति, समाहितं-अभिहितं येन-यस्मात्, अत्रोच्यते—अर्थविकल्पनया गुणभावनयेति वा को दोषः ?, अयमर्थः अर्थविकल्पसंग्रहार्थं न पुनरुक्तं, अथवा गुणभावना पुनः पुनरभिधानात्स्यात्, अथवा मनसा वाचा कायेनेत्युक्ते प्रतिपदं न करोमि न कारयामि नानुजानामीति यथासङ्ख्यमनिष्टं मा प्रापदिति त्रिविधेनैकैकमुच्यते, त्रिविधमित्यत्रापि प्रायो अयमेव परिहारः ॥ १०६० ॥ प्रतिक्रमामीत्यत्र प्रतिक्रमणं मिथ्यादुष्कृतमुच्यते, तच्च द्विधा—द्रव्यतो भावतश्चेति आह—

दव्वंमि निण्हगाई कुलालमिच्छंति तत्थुदाहरणं । भावंमि तदुवउत्तो मिआवई तत्थुदाहरणं ॥ १०६१ ॥

प्रत्याख्यानभेदपरिमाण प्रतिक्रमामिपद-व्याख्या च नि० गा० १०५९-१०६१

॥ ४४९ ॥

द्रव्यप्रतिक्रमणं निह्नवादि आदिशब्दादनुपयुक्तादिग्रहः, कुलालमिथ्यादुष्कृतं तत्रोदाहरणं, कुलालक्षुल्लकयोर्भाण्डभञ्जनकर्णामोटनयोर्द्रव्यमिथ्यादुष्कृतं पुनः पुनस्तदकृत्यानुपरमात् । मृगावत्या आर्यचन्दनांह्रिपतिताया एव संवेगात्केवलज्ञानं ॥ १०६१ ॥ तथा निन्दामि गर्हामीति निन्दागर्हयोरर्थमाह—

सचरित्तपच्छयावो निंदा तीए चउक्कनिक्खेवो । दव्वे चित्तयरसुआ भावेसु बहू उदाहरणा ॥ १०६२ ॥

सचरित्रस्य सत्त्वस्य पश्चात्तापो निन्दा, स्वप्रत्यक्षं जुगुप्सेत्यर्थः, तस्या नामादिभेदतश्चतुष्को निक्षेपः, द्रव्यनिन्दायां चित्रकरसुता यथा साऽऽत्मनिन्दया नृपस्येष्टा जाता भावनिन्दायां सुबहून्युदाहरणानि योगसङ्ग्रहेषु वक्ष्यन्ते ॥ १०६२ ॥

गरहावि तहाजाईअमेव नवरं परप्पगासणया । दव्वंमि मरुअनायं भावेसु बहू उदाहरणा ॥ १०६३ ॥

तथाजातीया—निन्दाजातीयैव, नवरं परप्रकाशनया गर्हा स्यात्, मरुकज्ञातमिदं-आनन्दपुरे मरुक उषितः स्नुषया सह, उपाध्यायस्याऽऽख्यदहं स्वप्ने स्नुषया अवसं ॥ १०६३ ॥ व्युत्सृजामीत्यत्र व्युत्सर्गमाह—

दव्वविउस्सग्गे खलु पसन्नचंदो हवे उदाहरणं । पडिआगयसंवेगो भावंमिवि होइ सो चेव ॥ १०६४ ॥

द्रव्यव्युत्सर्ग आर्त्तध्यानादिध्यायिनः कायोत्सर्गः, प्रत्यागतसंवेगः स एव प्रसन्नचन्द्रः ॥ १०६४ ॥ समाप्तौ यथाभूतः सामायिकस्य कर्त्ता स्यात्तथाभूतमाह—

सावज्जजोगविरओ तिविहं तिविहेण वोसिरिअ पावं । सामाइअमाईए एसोऽणुगमो परिसमत्तो ॥ १०६५ ॥

सावद्ययोगविरतः, कथं?–त्रिविधं त्रिविधेन व्युत्सृज्य पापं, सामायिकादौ सामायिकारम्भसमये ॥ १०६५ ॥ उक्तोऽनुगमः, अथ ज्ञानक्रियानयान्तर्भावेन नयानाह—

विज्जाचरणनएसुं सेससमोआरणं तु कायव्वं। सामाइअनिज्जुत्ती सुभासिअत्था परिसमत्ता॥ १०६६ ॥

विज्ञान (विद्या) चरणनययोर्ज्ञानक्रियानययोः शेपनयसमवतारः कर्त्तव्यः ॥ १०६६ ॥ ज्ञानचरणनयावाह—

नायंमि गिण्हिअव्वे अगिण्हिअव्वंमि चेव अत्थंमि। जइअव्वमेव इअ जो उवएसो सो नओ नामं॥ १०६७॥

ज्ञाते ग्रहीतव्ये उपादेये अग्रहीतव्ये हेये उपेक्षणीये च चशब्दाक्षिप्ते, ज्ञात एवार्थे ऐहिकाऽऽमुष्मिके यतितव्यमेव इति य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो ज्ञाननयः, अयं च सम्यक्त्वश्रुतसामायिकद्वयमेवेच्छति ज्ञानात्मकत्वादस्य, तथा ज्ञाते ग्रहीतव्येऽग्रहीतव्ये चार्थे (चैव अर्थे) यतितव्यमेव इति य उपदेशः क्रियाप्राधान्यख्यापनपरः स क्रियानयः, अयं च देशविरतिसर्वविरतिसामायिकद्वयमेवेच्छति ॥ १०६७ ॥ ननु किमत्र तत्त्वं?, उच्यते—

सव्वेसिंपि नयाणं बहुविहवत्तव्वयं निसामित्ता। तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥ १०६८ ॥

तत्सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात्सर्वनया भावनिक्षेपमिच्छन्ति ॥ १०६८ ॥

इति सामायिकनिर्युक्त्यवचूर्णिः ॥

इति भट्टारक श्रीमद् ज्ञानसागरसूरिविरचितावचूर्ण्या समेतं
सभाष्यनिर्युक्तिकमावश्यकं समाप्तम् ॥

॥ सामायिकाध्ययनमयः प्रथमो विभागः समाप्तः ॥